# धन्यवाद एवं शुभाशीर्वाद

अस्य ग्रन्थरत्नस्य मुद्रणायाधिकारिभ्यो महात्मद्विजादिभ्योऽमूल्यं प्रदानाय च गुजरातप्रान्तीय–'चारुतर' विभागावस्थित 'करमसद' ग्रामवास्तव्यैः श्रीमत्परमहंसपरिव्राजकवरेण्यविचारासिकस्वामिप्रणवाश्रममहोदयप्रेरितैः भावुक-वदान्यपटेलभक्तसमुदायैः* १०००) सहस्रसंख्याकानि रूप्यकाणि समर्पितानि।

एवं 'अहमदाबाद' नगरवास्तव्येन श्रेष्ठिप्रवरेण धर्मप्रियेण श्रीमन्मंगल-दासहरगोविन्ददासपटेलमहोदयेन २००) द्विशतसंख्याकानि रूप्यकाणि स्वगुरुमहाराजानां ब्रह्मलीनश्रीमत्परमहंसपरिव्राजकाचार्य–श्रोत्रिय–ब्रह्मनिष्ठ-महामण्डलेश्वरस्वामिजयेन्द्रपुरीतिशुभाभिधेयानां पुण्यस्मृतये समर्पितानि।

एवं 'कच्छ' देशावस्थित 'माण्डवी' नगरवास्तव्यया श्रीमत्या धर्मप्रियया गोदवणिक्–देव्या 'नवलबाई' इति शुभाभिधेयया श्रीमतः स्वर्गीयस्य–स्वपति-महोदयस्य 'चुनीलाल नारायणजी' शुभसंज्ञकस्य पुण्यस्मृतये तदात्मनः शाश्वतसंतुष्ट्यै च २००) द्विशतसंख्याकानि रूप्यकाणि समर्पितानि।

---

* २५१) रु. श्रीमान् पटेल काशीभाई मानीभाई। ५१) रु. पटेल छोटालालभाई हरिभाई। ५१) श्रीमान् प्रोफेसर पटेल उमेदभाई नारायणभाई। ५१) श्रीमान् पटेल गोविन्दजीभाई नाथाभाई। ५१) श्रीमान् पटेल रामजीभाई भीखाभाई। १०१) श्रीमान् स्वामीप्रणवाश्रमसोसायटी। ५१) श्रीपिश्वरमहादेवके पूजारी १०१) रु. करमसद संन्यासाश्रमकी तरफसे। ५१) रु. एक श्रीमान् गृहस्थ। २५) रु. श्रीमान् पटेल सोमाभाई मीठाभाई। २५) रु. श्रीमान् पटेल छोटाभाई खुशालभाई। १५) रु. श्रीमान् पटेल मगनभाई भवानजीभाई। १५) रु. श्रीमान् पटेल छोटाभाई उमेदभाई। ११) रु. श्रीमान् पटेल काशीभाई खुशालभाई। २५) रु. श्रीमान् पटेल रेवाभाई देसाईभाई। ११) रु. श्रीमान् पटेल रणछोडभाई नारायणभाई (डेप्युटी)। १०) श्रीमान् पटेल आशाभाई। इत्यादि..।

तेभ्यः समस्तेभ्यो हरिगुरुकृपापात्रेभ्यो धर्मवीरेभ्यो वेदविद्याप्रचाराय दत्तद्रव्येभ्यो वयं प्रेममिश्रान् धन्यवादशुभाशीर्वादान् समर्पयामः। प्रार्थयामहे च तेषां सकलमैहिकं पारलौकिकमभ्युदयं सुखसम्पत्तिवैभवादिलक्षणं पारमार्थिकं निःश्रेयसञ्च परमेश्वरात् लोकलीलासूत्रधारात् विश्वेश्वराद्भगवतः। इति।

तथा—

गुर्जरातवारेजडीमिन्साध्यक्षात् श्रेष्ठिप्रवरात् गवर्मेन्टकंट्रोलमूल्येन 'कागज' प्राप्तये विहितपरिश्रमाय धर्मप्रियाय सुणावग्रामवास्तव्याय श्रीमते 'केशवलाल-भाई' इति शुभाभिधेयाय, एवं श्री वीरविजयप्रीन्टींगप्रेसाध्यक्षाय श्रीमते धर्मप्रियाय देसाई मगनभाई छोटाभाई इति शुभाभिधेयाय श्रद्धापुरस्सरमस्य वेदोपनिषद्ग्रन्थस्य मुद्रणे दत्तावधानाय तस्मै धन्यवादशुभाशीर्वादान् वितरामः। इति सर्वतः सर्वेषामस्तु भद्रम्। हरिः ॐ तत्सत्।

महेश्वरानन्द मण्डलेश्वरः।

ॐ नमः शिवाय
हरिः ॐ तत्सत्

# प्रास्ताविकं वक्तव्यम्—

ॐ नमः ऋषिभ्यो मन्त्रकृद्भ्यो[1]
मन्त्रविद्भ्यो मन्त्रपतिभ्यः ।
मा मा ऋषयो मन्त्रकृतो
मन्त्रविदः प्राहुर्दैवीं वाचमुद्यसम् ॥
वाचं देवा उपजीवन्ति विश्वे
वाचं गन्धर्वाः पशवो मनुष्याः ।
वाचीमा विश्वा भुवनान्यर्पिता
सा नो हवं जुषतामिन्द्रपत्नी ॥

( यजुर्वेदीयमैत्रायणी संहिता )

अथैत प्रस्तूयते शुक्लयजुर्वेदसंहितोपनिषच्छतकं मुद्रयित्वा प्रकाशयितुम् । तत्रादौ वर्ण्यते प्रियपाठकानां वेदेषु श्रद्धाऽभ्युत्पादनाय—

---

1 मन्त्रकृद्भ्य=मन्त्रदृष्ट्भ्यः, शिष्येभ्यो मन्त्रोपदेशकर्तृभ्यो वा न तु मन्त्रनिर्मातृभ्यः । यथा स्वर्णकारलोहकारप्रभृतयो न हि स्वर्णादिनिर्माणं कुर्वन्ति, किन्तु पूर्वमवस्थितस्य तस्य रूपान्तरमाभूषणाद्यात्मकमेव विदधति । अत एव कुम्भकारतन्त्री तत्तत्पदार्थानां रूपान्तरद्वारा उपयोगकर्तृबोधकौ स्तः, न तु तत्पदार्थनिर्मातृज्ञापकौ । तथा प्रकृतेऽपि प्रत्येतव्यम् । अन्येऽपि रघुवंशकाव्यकौमुदीकारेत्यादौ

# वेदगौरवम् ।

अस्ति खलु विदितमेतत्सर्वेषां यत्किल सनातनार्यधर्मस्य मूलं सर्वज्ञानप्रसूतिश्च स्वतः प्रमाणं प्रमाणमूर्धन्यो भगवान् अतिधन्यो वेद एवेति । अत एव विद्यते वेदानामखिलपुरुषार्थसाधनानामुपयोगिता सर्वतोमुखी । अस्माकं यावन्तो धर्ममार्गाः सिद्धान्ताः साधनकलापाश्च, यावच्च वाङ्मयं साहित्यं तावत्सर्वं साक्षाद्वा परम्परया वा वेदविहितमेवेति तत्तन्मताभिनिविष्टाः पण्डिताः तत्तन्मन्त्रासरैः प्रदर्शयन्ति । स्मृतिदर्शनेतिहासपुराणतन्त्रादीनां निखिलानामपि शास्त्राणां सर्वत्र सर्वथा वेदानुकूलतयैव प्रामाण्यपरिग्रहं समादरञ्च शिष्टाः कुर्वन्ति । यदाहुः–' श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । तत्र श्रौतं प्रमाणं स्यात् तयो द्वैधे स्मृतिर्वरा ॥ सर्वथा

का गतिः ? इति चेत् तत्रापि कालिदासीयरघुवंशान्तर्गत 'वागर्थाविव सम्पृक्तावि' त्यादिश्लोकान्तर्गतानि यानि पदानि सन्ति, तानि न कालिदासेनाभिनवानि रचितानि किन्तु तानि ततः प्रथमप्यनादिकालात् सर्वैर्व्यवह्रियमाणान्यासन् । तत्र कालिदासेन तेषां स्वाभिप्रेतार्थबोधकानां केषाञ्चित्पदानां क्रमविशेषलक्षणं रूपान्तरं सम्पादितम् । तावन्मात्रेणैव तस्य रघुवंशकारत्वव्यवहारः समजनि, इत्यवगतिरेव गतिरिति गृहाण । एवमन्यत्रापि योज्यम् । अथापि–इयान् विशेषो विज्ञेयः, यत् रघुवंशादिपद्यस्थपदानामानुपूर्वीलक्षणः क्रमविशेषः कालिदासेन स्वेच्छया सम्पादितः परन्तु वेदपद्यस्थपदानां क्रमविशेषो न केनापि सम्पादित इति । तथा चाम्नायते– गोपथब्राह्मणे–'विश्वामित्र प्रथममपश्यत्, तान् विश्वामित्रेण दृष्टान् वामदेवोऽसृजत ।' (६ । १) इति । असृजत=अपश्यत्–तत्तन्मन्त्रोपयोगमकरोत् इत्यर्थः । यदि मन्त्रद्रष्टार ऋषय एव मन्त्रनिर्मातारः स्युः, तर्हि मिथो विरुद्धसमये एकस्यैव कतिपयमन्त्रसमुदायरूपस्य सूक्तस्य रचनाभिमानी उभौ ऋषी कथ

वेद एवासौ सर्वधर्मप्रमाणकः । 'तेनाविरुद्धं यत्किञ्चित्तत्प्रमाणं न चान्यथा ॥' इति । वैदेशिकाः पण्डिता अपि भूतभौतिकादिविषयकविज्ञानान्वेषणतत्पराः वेदाननुशीलयन्तः तेभ्य एव 'मथ्यमानेभ्यः सागरेभ्यो रत्नखण्डानीव' शब्दविद्युद्भूगोलखगोलेतिहाससमाजदर्शनयन्त्रादिविषयाणि विविधानि विज्ञानान्याविष्कुर्वन्तः तेषां महनीयं गौरवं यशोऽभिवृद्धिश्चास्मिन् धरायामभि विस्तारयन्ति । इत्येवं वेदानामनितरसामान्यं महामहत्त्वं स्फुटमेवोन्नेतुमस्माभिः शक्यते । येषां माहात्म्येनैव सम्प्रति स्वदेशस्वातन्त्र्यविधुराया दीनाया अप्यार्यजाते मौलिः समुन्नतोऽवलोक्यते । तथा चाहुः सर्वप्रतिष्ठितत्वादिलक्षणं वेदमहत्त्वं शिष्टशिरोमणयो भगवन्तो वेदव्यासाः महाभारतस्य शान्तिपर्वणि—'सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् । वेदे निष्ठा हि सर्वस्य यद्यदस्ति च नास्ति च ॥' (म. भा. शां.

---

कर्तुं शक्नुयाताम् ? न कथमपि । अत एव ऐतरेयब्राह्मणेऽपि अभिहितम्—'एतत् कवयः सूक्तमपश्यत् ।' 'गौरवीतिः एतत्सूक्तमपश्यत्' (३ । १९) 'तदेतदृषिः पश्यन्नुवाच' (१ । १) इति । शतपथब्राह्मणेऽपि 'तदेतद् पश्यन्नृषिर्वामदेवः' (१४ । ४ । २ । २२) इति । तथैव याज्ञिकव्यवहारोऽपि—'मन्त्रकृतो वृणीते यद्यपि मन्त्रकृतो वृणीत ।' (आप. श्रौ. २४ । ५ । ६) इत्यादौ दृश्यते । सर्वैरपि वैदिकैर्याज्ञिकव्यवहार आदरणीयो वेदार्थाभ्युपगमे, तस्य प्रधानत्वात् । इति । मन्त्रविद्भ्यः=मन्त्रार्थज्ञातृभ्यः । मन्त्रपतिभ्यः=सम्प्रदायप्रवर्तनद्वारा मन्त्ररक्षकेभ्यः । ते मन्त्रकृतो मन्त्रविद ऋषयो मा=मां प्रति दैवीं=देवस्य परमात्मनः स्वभूता वेदलक्षणां वाच=वाणीं अहं मा उदराम्=कदाचिदपि न परित्यजेयम्, किन्तु सदा विधारयेयम्' इत्येव प्राहुः=कथयन्ति । इन्द्रस्य=परमेश्वरस्य पत्नी=तदायत्ता—तदीयज्ञानशक्तिविभूतिरूपा सा वेदमयी दिव्यावाणी, नः=अस्माकं, हव=तामुद्दिश्य समर्पितं हविरादिकं जुषता=सेवताम् इत्यर्थः 'जुष प्रीतिसेवनयोः' स्मरणात् ।

२७० । ४३ ) इति । अपि च ऋगादिलक्षणो वेदो हि परस्य ब्रह्मण शब्दात्मकं स्वरूपम् । यः शब्दे ब्रह्मणि वेदे निष्णातो भवति, स एव परब्रह्माधिगन्तुमर्हति नेतरः । तस्मात् यथा परं ब्रह्म शाश्वत-मनादिनिधनं, तथा प्रमाणसार्वभौमो वेदोऽपि अनादिनिधनो नित्योऽपौरुषेयश्च । अत एव वेदान्तर्गतानां 'अग्निमीळे पुरोहितम्' 'इषे त्वा ऊर्जे त्वा' इत्यादिशब्दानामानुपूर्वी प्रतिकल्पमेकरूपैव विद्यते, न कदापि भिद्यते मात्रयाऽपि, न च व्यत्येति कथञ्चिदपि । अभिहितञ्च तत्—'शिवादि-ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' । इति । अत एवानादिवेदा-वस्थितशब्दानामभिनवानुपूर्व्याः सम्पादने भगवतः सर्वेश्वरस्यापि स्वातन्त्र्यं नास्ति । तत एवोच्यते नास्ति कश्चित् विश्वेश्वरो भगवानपि वेदकर्ता । अनादि-कालतः सर्वेषु कल्पेषु श्रूयते एव स्मर्यते एव च केवलं सः, न च केनापि क्रियते—अभिनवो विरच्यते ।

अयमेव सिद्धान्तः—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।' (श्वे. ६ । १८) 'अस्य महतो भूतस्य निःश्व-सितमेतत् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ।' (बृ. ४ । ५ । ११ ) इत्यादिमन्त्रेषु स्पष्टमाविष्क्रियते । सर्वेश्वरः सर्वज्ञो भगवान् महाप्रलये संस्काररूपेण पूर्वकल्पेष्वपि यादृशानुपूर्वीविशिष्टतयाऽवस्थितान् तानेव वेदान् प्रथमोत्पन्नाय चतुर्मुखाय लोकशिक्षार्थमुपदिशति । 'प्रहिणोति' इति प्रेषणार्थबोधकं पदमिदं—स्पष्टतः परमेश्वरस्य बुद्धौ पूर्वतोऽवस्थिता एव सन्ति वेदाः, न त्वभिनवाः तेन निर्मिताः, केवलमध्यापकवत् तदुपदेशमात्रस्य कर्ताऽसौ भगवान् इति सूचयति । अन्यथा 'प्रहि-णोति' इत्यस्य स्थाने 'रचयति' इत्येवं पदं प्रयोक्तव्यं भवे । नह

च 'वेदान् निर्माय प्रहिणोति' इत्यप्यर्थः सम्भवेत् इति वाच्यम्, क्लिष्टकल्पनापत्तेः। [2]"तस्मै नूनमभिद्यवे वाचा विरूप! नित्यया। वृष्णे चोदस्व सुष्टुतिम्॥" (ऋ. ८।८।७५) 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या[3] यतः सर्वाः प्रवृत्तयः॥' (म. भा. १२। २३३।२४) इत्यादि-श्रुतिस्मृतिभ्यो ऽपपत्तेश्च। एवं ऋषयोऽपि वेदानां न कर्तारः, किन्तु परमेश्वरवत् स्मर्तार एवावगन्तव्याः। तथा चाम्नायते—'यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्।' (ऋ. १०।७१।३) इति। अस्यायमर्थः—यज्ञेन=वैदिकेन शुभकर्मणा स्वान्तःशुद्धिमापन्ना, वाचः=वेदस्य सार्थस्य, पदवीयम्=प्राप्त्यवयोग्यताम्, आयन्=प्राप्नुवन्तः। तां वेदलक्षणां वाचम् ऋषिषु मन्त्रद्रष्टृषु महानुभावेषु, प्रविष्टां=अनुप्रविष्टां—अवस्थितां, न तु मनुष्योपज्ञां तैर्निर्मितां, अन्वविन्दन्=याज्ञिकाः विदितवन्त इत्यर्थः, प्राप्नुवन्त इति यावत्।

## विकासवादाक्षेपपरिहारः।

तत्र केचन वैदेशिका एतद्देशीयाश्च तदनुयायिनः क्रमोन्नतिरूपविकासवादमवलम्ब्य मन्यन्ते—मनुष्याः तावत् सृष्ट्यादौ पश्वादिवत् अज्ञान-

---

२ हे विरूप! विशिष्टस्वरूप! विद्वन्! यद्वा एतन्नामक महर्षे! नूनम्=निश्चयेन, इदानीं वा, तस्मै=लोकोपकारप्रसिद्धाय, अभिद्यवे=अभिगतदीप्तये—प्रदीप्तप्रकाशस्वरूपाय—स्वप्रकाशाय, वृष्णे=वर्षकाय=कामवर्षकाय, भगवते, नित्यया=उत्पत्तिरहितया—नाशरहितया हि नित्यत्वेनाऽनादिनिधनया, वाचा=वेदवाण्या, सुष्टुतिं=प्रियां स्तुतिं चोदस्व=प्रेरयेत्यर्थः, इन्द्रमपि स्तुवान नवीनेन मन्त्रेण वा होतारं, पुरस्तात् स्वयम्।

३ वेदमयी वाचो दिव्यत्वं वेदमेव यदपौरुषेयत्वेन स्वतःप्रमाणत्वं, सर्वार्थावभासकत्वं चेति।

दशायामेव वर्तमाना असभ्या आसन् । ते खलु प्रथमं 'हुँ हुँ छुँ छुँ' इत्यादिलक्षणां पश्वाद्यनुकरणरूपामव्यक्तामेव वाचमवदन् । गृहवस्त्रभोजनादिनिर्माणकलाज्ञानाभावात् अरण्ये वृक्षतलेषु पर्वतगुहासु च नग्ना न्यवसन् । अपक्वं फलमूलादिकमेव भक्षयित्वोदरपूर्तिमकुर्वन् । गच्छति काले शनैः शनैः ते कमपि संकेतादिकमाश्रित्य भाषाव्यवहारादिकमतन्वन् । क्रमशः ते विविधां विद्यां सभ्यताञ्चाप्यगमन् । अतः सहजमेवावगम्यते यत्–काव्यमयस्य वेदस्य रचनाऽपि मनुष्यविहितैव । मनुष्योत्पत्तेः पश्चात् बहुकालानन्तरं मनुष्यैरेव विद्वद्भिर्निर्मिताः सन्ति वेदाः, तस्माद्वेदाः पौरुषेया एव न परमेश्वरप्रदत्ता अपौरुषेया इति । अत एव ते वेदोत्पत्तिसमयं स्वस्वबुद्धिकल्पनामनुरुध्य विनिर्णयन्ति । केचन दशसहस्रवर्षेभ्यः पूर्वं वेदाः कैश्चित् निर्मिताः, अपरे विंशतिसहस्रवर्षेभ्यः प्रथममित्येवं यद्वा तद्वा प्रलपन्ति । इति ।

अत्रोच्यते–मनुष्यपश्वादिसमस्तजडचेतनलक्षणस्यास्य विश्वस्य रचना सर्वशक्तिमता परमेश्वरेणैव विहिता, न स्वाभाविकी, इति निखिलानामास्तिकशास्त्राणामस्ति सिद्धान्तः । तत्र तावदेतादृशो नियमोऽवलोक्यते–मनुष्यातिरिक्ताः सर्वे प्राणिनः शिक्षकमन्तरेण स्वाभाविकज्ञानेनैव स्वकीयजीवन यात्रासम्बन्धीनि गमनाशनमैथुनादीनि आवश्यककार्याणि साधयितुं शक्नुवन्ति । परन्तु मनुष्येषु तावत्तेभ्यो वैपरीत्यमेवानुभूयते । शिक्षकं विना स्वाभाविकज्ञानद्वारा ते जीवननिर्वाहकार्याणि कर्तुं न पारयन्ति । न किमपि परं प्रबोधयितुं स्वहृदयगतभावं निवेदयितुं वा भाषणादिकं कर्तुं प्रभवन्ति । न चेष्टं पदार्थमादातुमनिष्टं परिहातुञ्च शक्नुवन्ति । प्रत्यक्षतोऽवगतमेतत्–शैशवात् समधिगतेषु मनुष्यबालकेषु । ते किल शिक्षकं विना न स्वतः पादाभ्यां स्थातुं

वा गन्तुं वा प्रभवन्ति । किन्तु पशुरिव चतुर्भिः पादैर्गच्छन्ति । न च ते शिक्षितमनुष्यवत् स्वाभाविकज्ञानेन व्यक्तं वक्तुं पारयन्ति, किन्तु 'हुं हुमि'त्यादिलक्षणमव्यक्तमेव ब्रुवन्ति । हस्ताभ्याञ्च किमप्यशनं गृहीत्वा न खादन्ति, किन्तु मुखेनैव सदादाय भक्षन्ति पानीयं पिबन्ति च । अतो विनिश्चीयते—मनुष्यबालकेषु यत्किमपि विशिष्टमदनव्यवहारादिविषयकं शिक्षणमुपलभ्यते, तत् शिक्षकज्ञानप्रसूतमेव, न स्वतः, परीक्षितमेतत् पूर्वं कैश्चित् यवननादशाहप्रभृतिभिः कतिपयमनुष्यशिशवो गहनेऽरण्ये संस्थाप्य, यत्र किल शिक्षकसम्बन्धः कथमपि तेषां न स्यात् । तेऽपि स्वतो न शिक्षिता अभवन्, न च व्यक्तं वक्तुमपारयन्, पशुरिव चित्कारादिकमेव कुर्वन्त असभ्या एव तैः समुपलब्धाः ।

अतो वयं दृढं विनिश्चिनुमः—न हि शिक्षकमन्तरेण कश्चन मानवः स्वत एव शिक्षितो भवितुमर्हतीति । लोकेऽदृष्टत्वात्, दृष्टपूर्वकत्वाददेवादृष्टकल्पनायाः । तस्मात् विवेकविचारशीला आस्तिका अध्यवस्यन्ति—जगदादिकालेऽपि वर्तते कस्यचित् परमेश्वरस्य काचन सर्वज्ञा ज्ञानशक्तिः । ययैव शिक्षिताः सन्तो हिरण्यगर्भादयः चतुर्विधपुरुषार्थसाधनौपयिकमखिलमखिलजनहिताय शिक्षयन्ति । सोऽयमादिमो निखिलशक्तिमान् परमेश्वर एव शिक्षकः, तस्याविनाशिनः सर्वकारणस्य नित्या सर्वज्ञानशक्ति एव वेदराशिः । अतः स्पष्टमवगम्यते—यदादिमानां मनुष्याणां परमेश्वरप्रदत्तमेव विशिष्टं ज्ञानं प्रादुर्भूतम् । एवं वैज्ञानिकज्ञापिका भाषाऽपि परमेश्वरप्रेरणयैवोपलब्धा । यतो भाषया विना ज्ञानं निरवलम्बनं नहि स्यातुमर्हति । एवं ज्ञानेन विहीना भाषाऽपि केन वा कथं वा विज्ञाता भवेत् ? अतो

ज्ञानभाषयोः अस्ति निरूप्यनिरूपकभावलक्षणोऽविनाभूतसम्बन्धः। यथा ज्ञानं शिक्षकमन्तरेण न प्रादुर्भवति, तथैव भाषाऽपि। मनुष्य-शिशुः तामेव भाषां ब्रवीति, याञ्च किल मातुरङ्के समासीनः सन् शृणोति। तदेव जानाति यन्मात्रादितः शिक्षति। तस्मादादिमा भाषा न मनुष्यरचिता, न च धर्मेश्वरादिविषयकमलौकिकं ज्ञानं पुरातनै र्मानवैः स्वत एव समासादितम्। न च क्रमविकासनियमात् सम्भूतमिति सिद्धम्।

अपि च परमेश्वरोऽनन्तो व्यापकश्च मनुष्याणां मनस्तु सान्तं परिच्छिन्नम्। कथं हि तादृशं मनः परमेश्वरीयज्ञानशक्तिसहायसम्पादनमन्तरेण स्वत एव समनन्तज्ञाननिधिमद्वैतानन्दपूर्णं परमेश्वरं विज्ञातुं प्रभवेत्? । अतः परमेश्वरादि-विषया लोकोत्तरा विचाराः सम्प्रति शास्त्रेषु समुपलभ्यमानास्ते न स्वत एवास्माक-मादिमपुरुषाणां हृदयेषु प्रादुरभवन्, किन्तु परमात्मनैव कृपया तेषु समर्पिता आसन् इति वयमास्तिका मन्यामहे। तस्माद् वयं निःसन्देहं ब्रूमः–इह संसारे परमेश्वरप्रदत्ता आदिमा भाषा वेदभाषैव, आदिमा छन्दः-कविता वेदच्छन्दःकवितैव, आदिमो ग्रन्थो वेदग्रन्थ एव, आदिमा संस्कृति वैदिकसंस्कृतिरेव, परमेश्वरादिविषया अलौकिकाः समस्ता विचाराः परमेश्वरस्यानन्तज्ञाननिधिकल्पेषु वेदेष्वेव सम्यगुपनिबद्धा इति। अस्मिन् सिद्धान्ते सूक्ष्मेक्षिकया विचारयतां पक्षपातरहितानां बुद्धिमतां न मनागपि विमतिपत्तिरवतरति।

यत्तु ये मन्यन्ते गच्छता कालेन विविधविद्याशक्तिसंस्कारभाषाकलादे-र्विकासो भवतीति, तदप्यपेशलम्, सत्संगलब्धया दिव्यज्ञानदृशा विचारे

क्रियमाणे विकासो न भवति किन्तु ह्रास एवावगतो भवति; अस्माभिर्मानवेषु स्पष्टमायुरारोग्यबलवीर्यश्रद्धाविद्याशमदमग्रहणधारणादिशक्तीनामहरहरपचीयमानत्वैवावलोक्यते, वेदादिशास्त्रस्वाध्यायतदनुष्ठानादिकमपि क्षीयमाणमेवोपलभ्यते। पूर्वं तावत् चतुष्पात् सम्पूर्णो धर्म आसीत्। तपोज्ञानयज्ञदानान्येव धर्मस्य चत्वारः पादाः। ततस्तनूयमाने तपसि त्रिपात् धर्मोऽभूत्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे दानैकपात्। सोऽपि पादोऽश्रद्धामलकलङ्कितो नास्तिक्योच्छृङ्खलत्वादिपातकशतप्रसूतप्रसूनव्रणदुःस्थः कामक्रोधादिकण्टकशतजर्जर एवावगम्यते। तदुक्तमुदयनाचार्येण—'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः। ह्रासः दर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥' (न्यायकुसुमाञ्जलिः २।३) इति। वस्तुतः परिवर्तिनि संसारेऽस्मिन् कस्यापि पदार्थस्य नैकविधाऽप्यस्थितिरुपलभ्यते। यदाहुः—'सर्वे भावाः क्षणपरिणामिनः ऋते चितिशक्तेः'। 'परिवर्तिनि संसारे स्थिरं किं को नु मन्यते।' इति। कुत्रचित् कर्हिचित् कस्यचित्पदार्थस्य विकासो भवति, अन्यत्र च तस्य ह्रासः, परत्र च तस्य विकासः, इत्येवं विकासह्रासपरम्परा; प्राणीनामदृष्टवशात् समुद्रे समुच्छलन्तः तरङ्गा इवायान्ति यान्ति च।

यदुक्तं—पूर्वं सर्वे मानवा असभ्या आसन् इति, तदपि रिक्तं वचः। यतः पूर्वं साक्षात्कृतधर्माणो जितेन्द्रियाः तपस्विनः परब्रह्मध्यानशीला धार्मिका विद्वांसः परमेश्वरप्रसादासादितवेदज्ञानवन्तो भूयांस ऋषय आसन्। यदाहुः—'तेऽतिष्ठन् ध्यानमालम्ब्य मौनमास्थाय निश्चलाः। त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः।' तेषां ब्रह्मचर्य

वाणी सर्वेषां श्रोत्रमागमत् । दिव्या सरस्वती तत्र स्वंबभूव नभस्त-लात् ॥ (महाभारते) स्वंबभूव=प्रादुर्बभूव इत्यर्थः। तेषां चिरकालानामृषीणां गृहस्थानाञ्च ऋषीणां कस्याञ्चित् सभायां समागतानां संख्याऽपि प्रतिपादिता उपलभ्यते—' अष्टाशीतिसहस्राणि ( ८०००० ) ऋषीणामूर्ध्वरेत-साम् । प्रजावतां च पञ्चाशत् ( ५०००० ) ऋषीणामपि पाण्डव ! ॥ (म. भा. स. प.) इति । स्मरन्ति च तदेतद्भगवत्पादाः शङ्कर-स्वामिनो गीताभाष्यप्रारम्भे—' स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहया-मास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।' इति । तस्मात् पूर्वे मानवाः सभ्याः शिक्षिता आसन्निति सिद्धम् । यदि पूर्वे मानवा असभ्याः पशवदिव मूका एवासन्, तर्हि ते कथं सभ्याः शिक्षिता मिथः संवादशीला अभवन् ? । स्वत एव भाषां निर्माय शिक्षिता ज्ञानिनोऽभवन् इति न वक्तुं शक्यते । यतो ज्ञानं विना भाषाया निर्माणं कथं स्यात् ? एवं भाषां विना ज्ञानमपि कथं प्रादु-र्भवेत् ?। अन्योऽन्याश्रयात् नान्यतरमपि स्वतः सिद्ध्येत् । तथा चादिमानां मानवानां प्राथमिकज्ञानस्य प्राथमिकभाषायाश्च प्रादुर्भावो विश्वस्थितिचिकीर्षोः निखिलनियन्तुर्विश्वेश्वरस्यादिमशिक्षकस्य प्रसादादेवाभूदित्यकामेनापि विकास-वादिना त्वयाऽभ्युपगन्तव्यम् । तच्च प्राथमिकं ज्ञानं वेदज्ञानमेव, प्राथमिकी भाषा वेदभाषैव, यद्वशादद्यापि लोके नानाप्रकारा व्यवहाराः समवतिष्ठन्ते, नीति-[illegible] न भिद्यन्ते, यदुपनमेव मानुषाणां चतुर्विधपुरुषार्थोपयोगिक प्रवृ-त्तिजातज्ञानादिकान्त प्रवृत्तं सदवलोक्यते । तस्माद्वेदाः परमेश्वरप्रदत्ता अपौरुषेयाश्चेति सिद्धम् ।

## विष्णुतामसत्वप्रतिपादनतात्पर्यम् ।

यत्तु सप्तविंशतितममन्त्रव्याख्यानेऽस्माभिः प्रमाणयुक्तिभ्यां विष्णोः तामसत्वं प्रतिपादितम्, तत् ये पाषण्डा वेदविरुद्धमतयः शिवद्रोहिणः परमेशानस्य शिवस्य तामसत्वकथनेन नितरां निकृष्टत्वं वर्णयन्ति, वैदिकान् शिवशङ्करशम्भ्वादिशब्दानपि मुखेन नोच्चारयन्ति । स्वकीयविद्यालयेऽध्येतुकामस्य विद्यार्थिनोऽपि प्राकालिकं शिवशङ्करेतिनाम श्रीधरेतिनाम्ना परिवर्तयन्ति । तेषां मुखमर्दनाय, 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुमि' ति न्यायेन महादेवस्य तामसत्वनिराकरणाय परमसात्त्विकत्वज्ञापनाय चेति बोध्यम् । तदुक्तमेतदद्वैतविद्याचार्य्यैर्दीक्षितेन्द्रैरपि—

विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमि—
र्नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ।
किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां दुरुक्ती—
र्भङ्क्तुं यत्नो मयाऽयं नहि भवति ततो विष्णुविद्वेषशङ्का ॥

तस्माद्यथा भागवतादिपुराणानां विष्णुश्रेष्ठत्वतात्पर्येण प्रवृत्तत्वेन तत्प्रकरणे नहि निन्दान्यायेन तामसविग्रहविशिष्टशिवनिकर्षोपपादनस्य विष्णुप्रशंसापरत्वं, एवं शिवस्कन्दादिपुराणानामपि शिवश्रेष्ठत्वतात्पर्येण प्रवृत्तत्वेन तत्प्रकरणेऽपि नहि निन्दान्यायेन तामसत्वविशिष्टविष्णुनिकर्षोपपादनस्य शिवप्रशंसापरत्वं वैदिकैरभ्युपगम्यते, तथा प्रकृतेऽप्यभ्युपगम्यताम् । अत एवाभिधीयते—' क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा

येदुदरव्याधियुक्तो भवति मानवः ॥' इतिशातातपस्मृत्यादिवचनैः ब्रह्मादीनां तारतम्यभावस्य निन्दितत्वात् । 'त्रिजडानां तु यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः । स एव हि महादेवः स एव हि महाहरिः ॥ यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ! ॥ नामानि तव गोविन्द ! यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे । यथाऽन्तरं न पश्यामि तथा मे स्वस्तिरायुषि ॥ वेदानुवर्तिनो रुद्र देवं नारायणं तथा । एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ॥ यो विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः । इति मत्वा भजेद्देवं स याति परमां गतिम् ॥' इत्यादिस्मृतिभारतपुराणादिबहुतरप्रमाणवचनैर्हरिहरयोरर्थतः शब्दतश्चाभेदाभ्युपगमाच्च ।

ननु—भो ! त्रिविधशिवादिमूर्तिमत्त्वपरमेश्वरस्यैकत्वेऽपि सात्त्विकादीनां मूर्तीनां तु भेदोऽस्त्येव । अत एव शिवस्य तामसीं मूर्तिं परित्यज्य विष्णोः सात्त्विकी मूर्तिरेवोपास्या । एतदभिसंधायैव श्रीमद्भागवते भगवता व्यासेन 'वैर्युक्तः परः पुरुष एकः....हरिविरिञ्चिहरेति संज्ञाः' इत्यादिना एक एव मायोपहितः परमेश्वर सत्त्वादिगुणत्रययुक्तः सन् स्थित्युत्पत्तिसंहारव्यापारार्थं क्रमेण विष्णुब्रह्मशिवसंज्ञां लभते इति प्रतिपाद्य 'श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इत्यादिना सत्त्वमयविग्रहविशिष्टस्य विष्णोः उत्कृष्टोपाधिकत्वात् सर्वातिशयत्वं, अर्थात् रजस्तमोमयविग्रहविशिष्टयोर्ब्रह्मशिवयोः निकृष्टोपाधिकत्वान्निकृष्टत्वञ्च विज्ञाप्य सत्त्वतनोर्विष्णोरुपासनेनैव नृणामभ्युदयनिःश्रेयसलक्षणानि निःश्रेयांसि प्राप्तानि भवन्तीति प्रतिपादनेन सात्त्विकी विष्णोर्मूर्तिरेवोपास्या श्रेयस्कामैरिति स्पष्टमभिहितम् । इति चेन्नैवम् । मूर्तीनामुपासनासिद्ध्यर्थं

कल्पितत्वात्। तदुक्तं—'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः। उपासकानांकार्यार्थं ब्रह्मणो रूपकल्पना॥' (रामतापनीयोपनिषद्) इति। तासां कल्पितो भेदो वास्तवं परमेश्वरस्यैकत्वं बाधितुं विरोधञ्च जनयितुं नोत्सहते। तदप्युक्तञ्च—'कल्पितोऽयं द्विजा! भेदो नाभेदं बाधते सदा। कल्पितानामसत्त्वाच्च न विरोधश्च सिद्ध्यति॥' इति। न च स्वेष्टा उपास्या मूर्तिरेव परमेश्वर इति भ्रमितव्यम्। यतः तस्याः शरीरादिवत् परिच्छिन्नत्वाज्जडत्वाद्दृश्यत्वाच्च जगत्कारणत्वव्यापकत्वसर्वज्ञत्वादिलक्षणलक्षितपरमेश्वरत्वासम्भवात्। न च घृतकाठिन्यवत् निराकारस्य विग्रहिणः परमेश्वरस्य मूर्तिलक्षणो विग्रहस्तदभिन्नः सन् परमेश्वरः स्यादिति वाच्यम्। विग्रहस्य परिच्छिन्नत्वात् विग्रहिणोऽपरिच्छिन्नत्वात् तयोर्वास्तवस्याभेदस्य वक्तुमशक्यत्वात्। न च विग्रहोऽप्यपरिच्छिन्नोऽस्तु नामेति वाच्यम् विग्रहस्य सावयवत्वेन तस्यापरिच्छिन्नत्वासम्भवात्। तर्हि मूर्तिरियं परमेश्वर इति शास्त्रलोकप्रवादः कथं प्रवृत्तः? इति चेत् उच्यते, तस्याः रजस्तमोऽनभिभूतसत्त्वप्रधानमायानिर्मितत्वात्, तदवच्छेदेन परमेश्वरधर्माणां सर्वज्ञत्वनियामकत्वादीनामभिव्यञ्जकत्वात् तत्र परमेश्वरप्रवाद उपचारादेवेति ब्रूमः। तस्य चोपासकानां तत्र प्रशस्तभावनोत्कर्षाद्यौत्पादनतात्पर्येण प्रवृत्तत्वात्साफल्यं प्रत्येतव्यम्। तेन हि—शिवविष्ण्वादिमूर्तिविशिष्टरूपेण परमेश्वरोपासनार्थं शिवादिसकलमूर्त्यनुस्यूतो जगत्कारणीभूतमायोपहितामूर्तरूप एव परमेश्वरः शिवविष्णुमहादेववासुदेवादिशब्दितः सन् उपासकानां विभिन्नां रुचिमनुसृत्य कैश्चित्पुराणादिवचनैः विष्णुमूर्तिविशिष्टरूपेण, कैश्चित् शिवमूर्तिविशिष्टरूपेण कैश्चित् शक्तिमूर्तिविशिष्टरूपेण कैश्चिद् ब्रह्ममूर्तिरूपेण च प्रतिपाद्यते इति तात्पर्यं विनिश्चीयते।

. . एवं हि वर्णितमुपलभ्यते स्कन्दपुराणेऽपि—कानिचिद्वेदवाक्यानि ब्राह्मणाः ! वेदपारगाः ! । रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥ पर्यवस्यन्ति विप्रेन्द्राः ! तथा वाक्यानि कानिचित् । विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥ आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं समाश्रित्य तथैवान्यानि कानिचित् ॥ पुराणैर्दशभिर्विप्राः ! प्रोक्तो रुद्रस्तथैव च । चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ॥ अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः । एवं मूर्तिविधानेन द्वारेणैव मुनीश्वराः ॥ प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु । स एव मोचकः साक्षात् शिवः सत्यादिलक्षणः ॥' इति ।

यदुक्तं—शिवस्य तामसी मूर्तिः सात्त्विकी मूर्तिरेवोपास्या इति । अत्राभिधीयते—यथा भागवतादिवैष्णवपुराणेषु विष्णोः सात्त्विकी मूर्तिर्वर्णिता उपलभ्यते, तथैव शिवस्कन्दादिशैवपुराणेष्वपि शिवस्यापि 'अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः ।' 'अरूपस्य शिवस्यापि मूर्तिर्ध्येयाऽस्त्युपासकैः । उमार्धविग्रहा शुद्धा त्रिनेत्रा चन्द्रशेखरा ॥' इत्यादिवचनैः सात्त्विकी मूर्तिर्वर्णिता उपलभ्यते । एवं यथा भागवतादौ शिवस्य तामसमूर्तिविशिष्टरूपेण निकर्षत्वमभिधीयते, एवं स्कन्दादिपुराणेष्वपि विष्णोः तामसमूर्तिविशिष्टरूपेण निकर्षं प्रतिपाद्यते, इत्येवमुभयत्र तुल्यमेवास्ति दूषणभूषणम् । तस्मात् यत्र यत्र तामस वेन शिवस्य वा विष्णोर्वा निकर्षप्रतिपादनपराणि वचनानि उपलभ्यन्ते, तत्र तत्र नहि निन्दान्यायेन प्रशंसापराण्येव मन्तव्यानि, न तु निन्दापराणि इति प्रथममपि समाहितम् । भागवतादौ तामसविग्रहविशिष्टत्वेन प्रतिपाद्यमानस्य शिवनिकर्षस्य 'कालमेघसमच्छायः कन्या-

शूलकपालधृत् । तेषामाविरभूच्छंभुः स्मयमानमुखाम्बुजः ॥' इत्यादि-ब्रह्माण्डपुराणवचनमनुसृत्य शिवस्यावस्थान्तरपरिगृहीतनीलविग्रहविशिष्टत्वेन चरितार्थतया 'कर्पूरगौरं करुणावतारं संसारसारं' 'शुद्धस्फटिकसंकाशं चन्द्रलेखावतंसकम् ।' 'महाकारुणिको देवः सर्वज्ञो निर्मलः शिवः ।' 'ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ।' इत्यादि-बहुतरवचनप्रमाणैः शिवस्य भगवतः स्वाभाविकशुद्धनिर्मलपरमसात्त्विकविग्रहस्योपास्यस्य सिद्धत्वात्-विष्णोरिव शिवस्याऽपि सात्त्विकी मूर्तिः श्रेयस्कामैरुपास्यैवेति सिद्धम् । तस्मात् 'अस्ति रुद्रस्य विप्रेन्द्रा ! अन्तः सत्त्वं बहिस्तमः । विष्णोरन्तस्तमः सत्त्वं बहिरस्ति रजोगुणः ॥ अन्तर्बहिश्च विप्रेन्द्राः ! अस्ति तस्य प्रजापतेः । ततोऽपेक्ष्य गुणं सत्त्वं मनुष्या विवदन्ति हि ॥ हरिः श्रेष्ठो हरः श्रेष्ठ इति हा मोहवैभवम् ॥' इत्यादिस्कान्दवचनपर्यालोचनया विष्णुत्वाशिवत्वोपाधिभूतविशेषणोत्कर्षापकर्षप्रतिपादकवचनानां तुल्यतया विद्यमानत्वेन तयोः तारतम्यस्य वक्तुमशक्यत्वात्, सकलनिगमागमसंमतभगवत्पादाभिमतकेवलाद्वैतसिद्धान्तमनुसृत्य निखिलपुराणादिवचनानामविरोधस्य समर्थनाय शिवविष्ण्वोरभेद एवाभ्युपेयः सर्वैरच्छमतिभिरास्तिकैः ।

ननु—'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' (शु.य. ३१ । २२) इत्यस्यां श्रुतौ श्रीपतित्वेन लक्ष्मीपतित्वेन च विष्णुरेव परमेश्वरतया प्रतिपाद्यते, न रुद्र इति चेन्नैवम् । 'तत्र माहेश्वरी लक्ष्मीर्मूर्तिर्मूर्तिमतः प्रभोः ।' इत्यारभ्य 'तस्याङ्कमध्यमारूढा शक्तिर्माहेश्वरी परा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥' इति वायुसंहितादिपुराणवाक्यैर्महादेव्यामुमायां रुद्रपत्न्यामपि लक्ष्मीशब्दवाच्यत्वस्य प्रसिद्धत्वात् । 'श्रियं लक्ष्मीमौपलाम-

म्बिकां' इत्यायुष्यसूक्ते 'शङ्करो भगवान् शौरिः श्रीश्च गौरी द्विजोत्तम!।' (१।८।२२) इति विष्णुपुराणे च श्रीशब्दस्य गौर्यां दृष्टत्वात्; समानप्रकरणे शाखान्तरे 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' (तै. आ. ३।१३) इति मन्त्रे ह्रीशब्दप्रयोगस्य गौर्यामुपलम्भेन वाजसनेयकमन्त्रगतश्रीशब्दस्याप्युमायां पर्यवसानाच्च श्रीपतित्वस्य लक्ष्मीपतित्वस्य च शिवविष्णुसाधारण्यात् न रुद्रव्यवच्छेदः। अत एव शाखाभेदभिन्नपाठाभिप्रायेण लैङ्गे महानारायणकृतशिवस्तोत्रे-'नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः।' इति वचनेन श्रीपतित्वेन लक्ष्मीपतित्वेन च स्तूयमानः श्रीशिवः परमेश्वरतया प्रतिपादितः संगच्छते। 'अहोरात्रे पार्श्वे (शु. य. ३१।२२) इत्यस्य 'शर्वरी त्वं, अहं दिनम्' इत्युमामहेश्वरसंवादोक्तेरर्धनारीश्वररूप एव स्वारस्यावगमाच्च। लक्ष्मीपतित्वादिकं विष्णुमात्रनिष्ठमेवेति वक्तुमशक्यः, तस्मात् समानलिङ्गतया तयोरभेद एवाभ्युपेयः।

ननु—भगवान् विष्णुस्तु विश्वस्यास्योत्पादको रक्षकश्चास्ति, रुद्रस्तु मारकत्वेन—संहारकत्वेनाभिवर्ण्यते। विष्णोः रुद्राभिन्नत्वस्वीकारे उत्पादकस्य पितुः मारकत्वं लोकविरुद्धमापद्येत। लोके हि जनको न पुत्रादीनां हन्ता, किन्तु पितुरन्यस्यैव मारकत्वं दृश्यते। तथा च मारकत्वेन हेतुना रुद्रो विष्णोर्भिन्न एवाभ्युपेय इति चेत् नैवम्। 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः।' (स्कन्दपुराण) 'नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया। गृहीतशक्तित्रितयाय।' (भा. २।३।१२) 'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमञ्जसा॥' (वामनपुराण) इत्यादिकसहस्राधिकवचनैः स्रष्टुः पातुरेव संहारकर्तृत्वमवगम्यते। ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्येन

विष्णो र्गौरवस्याप्यौचित्यात् । तस्मात् श्रुतिस्मृत्यादिशास्त्राविरोधेन संहारस्य कर्तृत्वमपि विष्णुरुद्रादिशब्दाभिधेये एकस्मिन् भगवत्येवाभ्युपेयम्। **'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः ।'** ( श्वे. उ. ३ । ४ ) इति श्रुत्या रुद्रस्याप्युत्पादकत्वादिकं निरूप्यते। **यदि स्रष्टुः रक्षितुश्च सकाशात् संहारको भिन्नोऽभ्युपेयेत, तर्हि संहारकस्यैव शक्त्याधिक्येन परमेश्वरत्वं सिद्ध्येत् । स्रष्टा रक्षिता च स्वेन सृष्टानां रक्षितानाञ्च पदार्थानां संहारं कदापि न वाञ्छति, ताभ्यामन्यो बलात् तयोः शक्ती परिभूय तान् संहरति । तत एव संहारको रुद्र एव भवन्शक्तिमान् परमेश्वरोऽभ्युपेयो न हीनशक्तिर्विष्णुः इति रुद्रापेक्षया विष्णोरुत्कर्षं साधयितुं प्रवृत्तैर्भेदवादिभिः स्वसौढ्यात् निरूपितत्वमेव साधितम् । तस्मात् यः स्रष्टा स एव पाता च संहर्ता च एक एव, न भिन्नः इतिशास्त्रयुक्तिप्रामाण्यात् शिवनारायणयोरैक्यमेव स्वीकर्तव्यम् ।**

**वेस्तां पिशङ्गं वसनं दिशो वा,**
**गरुत्मता यातु ककुद्मता वा ।**
**निद्रातु वा नृत्यतु वाऽधिरङ्गं,**
**भेदो मे न स्यात्परमस्य धाम्नः ॥**
**विष्णुं समाराधय शङ्करं वा,**
**भक्तिर्हि मुख्या न च देवभेदः ।**

---

१ अस्यायमर्थः—तत्परम धाम=ज्योतिरूप सत्यादिलक्षण ब्रह्म स्वेच्छया भक्तानामनुग्रहकाम्यया विष्णुस्वरूपेण पिशङ्ग=पीत, वसन=अम्बरं वस्तां=परिदधातु वा,

पानं सुधाया अमृतत्वहेतुः,
पात्रं न हैमं न च राजतं वा ॥

**द्वैतविशिष्टाद्वैतादिमतसमालोचनपुरःसरं केवलाद्वैतसिद्धान्तवर्णनम् ।**

अथात्र वेदोपनिषदादिशास्त्राणां द्वैते वा विशिष्टाद्वैते वा द्वैताद्वैते वा केवलाद्वैते वा तात्पर्यम्? इति भूयांसः सज्जना विजिज्ञासन्ते, तत्र विषये वयं किञ्चिदिव लेखिनीं व्यापारयाम । तत्र केचित् ते द्वैतमेव प्रतिपाद्यते इति कथयन्ति । **द्वैतं नाम द्वयोर्भावो द्विता, द्वितैव द्वैतम्, स्वार्थेऽण्, इति व्युत्पत्त्या द्वैतं भेद एव सिद्ध्यति ।** अत एव ते जीवेश्वरयोर्भेदं, जीवानां परस्परं भेदः, परमेश्वराच्च जगतोऽपि भेद इत्यादिकान् बहून् तात्त्विकान् भेदान् शास्त्रतात्पर्यविषयत्वेन प्रतिपादयन्ति । तत्र–'**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यःपिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति ॥**' (ऋ. १ । १६४ । २०) '**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।**' (श्वे १ । ६) इत्यादि-श्रुतीः, **जीवेश्वरौ भिन्नौ विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत् ।** इत्याद्यनुमानानि, नाहमीश्वर इत्यादिप्रत्यक्षादिप्रमाणानि च जीवेश्वरादिभेदप्रतिपादकत्वेन प्रत्युपस्थापयन्ति ।

---

शिवमूर्तिरूपेण दिशो वसन-दिगम्बरं वस्ताम् । गरुत्मता=गरुडेन, वाहनेन यातु=गच्छतु भवान् । वा ककुद्मता=वृषभेण वाहनेन यातु । क्षीरसमुद्रे शेषशय्यायां निद्रातु=योगनिद्रासुखमनुभवतु वाऽधिरङ्ग=महाकैलासस्थितमणिमयमरङ्गस्य रङ्गभूमौ चिदम्बरनटराजमूर्तिरूपेण ताण्डवं नृत्यं करोतु । तथापि मे=मम केवलाद्वैतसिद्धान्तानुयायिनः स्वमायाकल्पितमूर्तिभेदमात्रेण परमस्य धाम्नो भूम्नः स्वयंप्रकाशमानज्योतिःस्वरूपस्य ब्रह्मणो भेदो नैव सिद्ध्यति । इति । (श्रीमदप्पय्यदीक्षितप्रणीतमिदं पद्यम्)

अत्रोच्यते—तत्र तावत्—'द्वा सुपर्णा' इति श्रुतेः पूर्वार्धं जीवेश्वरयोर्भेदमेव न प्रतिपादयति, कुतःपुनस्तस्य तात्त्विकत्वम् ?। यतोऽत्र भेदो न प्रमेयः, तस्यापदार्थत्वात् अवाक्यार्थत्वाच, यतः केनापि पदेन वा वाक्येन वा भेदो न प्रतिपाद्यते। न च भेदवाचकपदाभावेऽपि 'द्वा' शब्देन द्वित्वं प्रतिपाद्यते, तच्च भेदमन्तरेणानुपपद्यमानं सत् भेदमाक्षिपति, इत्येवमर्थापत्तिसमधिगम्यो भेदः श्रौतः सेत्स्यति इति वाच्यम् 'द्वौ चन्द्रमसौ' इत्यत्र यथाऽर्थापत्तिगम्यस्य भेदस्य श्रौतत्वेऽपि काल्पनिकभेदानुवादकतया पारमार्थिकत्वं नाभ्युपगम्यते, किन्तु काल्पनिकत्वमेव मन्यते, तथाऽत्रापि द्वित्वगम्यभेदस्य श्रौतत्वेऽपि तत्त्वमस्याद्यभेदश्रुतिविरोधेन प्रत्यक्षसिद्धकाल्पनिकभेदानुवादकतया पारमार्थिकत्वं वक्तुमशक्यम्, अतस्तस्य काल्पनिकत्वमेवाभ्युपेयम्। अत एव तयोः समानरूपेण ख्यानद्वयस्य बोधकं 'सखायौ' इति पदमर्थतो भेदसाधकमन्यादृशख्यानत्वं प्रतिषेधति, एवं 'सुपर्णौ' इति पदं सुपर्णौ सन्तौ तौ सुपर्णत्वेन वर्णविकारादिलक्षणया निरुक्तभाषया प्रतिपादयत् सच्चिदानन्दरूपत्वेनाभिन्नत्वेन तयोरभेदमेव साधयति। ननु—एकस्य यादृशं ख्यानं तादृशमेव अन्यस्य इति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति, कथं भेदप्रतिषेधकं तादात्म्यमुच्यते ? इति न वक्तव्यम्। यतो नात्र परस्परं दृष्टान्तदार्ष्टान्तिकभावो विवक्षितः, अपि तु यत्र यादृशं ख्यानं=स्फुरणं परमात्मनः, तदेव ख्यानमितरस्यापि जीवात्मनः इति सखायौ इत्युच्यते, एकरूपप्रकाशौ इत्यर्थः, अतः उपपन्नमभेदलक्षणमैकात्म्यम्। एवं सुपर्णस्थानीयौ जीवात्मपरमात्मानौ सयुजौ=समानयोगौ, सह युज्यते सम्बध्यते इति व्युत्पत्तेः, योगो नाम सम्बन्धः, स चात्र तादात्म्यलक्षण एवाभ्युपेयः। स एवात्मा=जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा, एवमन्यस्यापि स एवात्मा—परमात्मनः स्वरूपं यस्य जीवात्मनः। एवमेकस्वरूपौ इत्यर्थः

-सिद्धः । ननु—सम्बन्धो द्विष्ठः, स च तयोः सुपर्णयोर्भेदमपेक्षते, अतः तयोः कथमैकात्म्यं वर्ण्यते इति चेन्मैवम् औपाधिकं भेदमपेक्ष्य वास्तवाभेदस्य बोधनाय प्रवृत्तत्वात्—शास्त्रस्य ऐकात्म्यवर्णनं युक्तमेव । अनेन वास्तवभेदोऽपि निरस्तः । अत एवोत्तरार्धस्यापि न तात्त्विकभेदपरत्वम् । वस्तुतस्तु पैङ्गिरहस्यब्राह्मणेऽस्य मन्त्रस्य सत्त्वक्षेत्रज्ञपरतया व्याख्यानात्[1] नास्य मन्त्रस्य जीवेशभेदपरत्वमिति आचार्यमहोदयाः । सत्त्वक्षेत्रज्ञौ बुद्धिविशुद्धसाक्षिणा । एवं 'अन्योऽन्तर आत्मा' (तै. २ । २) इत्याद्यन्यशब्दवत् 'द्वा सुपर्णे'ति मन्त्रोत्तरार्द्धगताऽन्यशब्दोऽपि नाद्वैतं प्रतिरुणद्धि । तदुक्तं—'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तमः ॥ इति ।

ननु—जीवस्य वस्तुतः परमेश्वराभिन्नत्वं तर्हि तत्र कथं कर्तृत्वभोक्तृत्वादिशोकादिलक्षणः संसारः प्रतिभाति इति चेत् ? मोहादेवेति ब्रूमः । मोहो हि अज्ञानम् । अत एव आथर्वणिकाः मुण्डकशाखिनः अमुं 'द्वा सुपर्णे' ति मन्त्रमाम्नाय अस्य शङ्कानिवर्तकमुत्तरं मन्त्रमेवमामनन्ति—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥' (मु. उ. ३ । १ । २) इति । अस्यायमर्थः । वृश्च्यते इति वृक्षो देहः, स च उभयोः—समानः=एक एव । जीवस्य भोगार्थत्वात् परमात्मना सृष्टेः महामूर्ते आरब्धत्वात्, तस्योपलब्धिस्थानत्वाच्च उभयोरपि समानः । तादृशे समाने वृक्षे—एकस्मिन्नेव शरीरे पूर्णः पुरुषः परमात्मा निमग्नः=निगूढः तत्तादात्म्यापन्नः सन् स्वयं परमेश्वरोऽपि अनीशया=

[1] 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' 'अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्न्य पश्यतीतिरः' 'तावेतौ सत्त्वक्षेत्रज्ञौ' इति पैङ्गिरहस्यब्राह्मणग्रन्थः ।

अनीशत्वबुद्ध्या—ईशभिन्नत्वबुद्ध्या वा, मुह्यमानोऽविद्याग्रस्तो मूढः सन् शोचति—अहं कर्ता दुःखीति जननमरणादिकमनुभवति। यदा तु जुष्टं=नित्यतृप्तं, उपासनया वा सेवितं, अन्यं=देहादिव्यतिरिक्तं संसारशोकातीतमसंगमीशं परमेश्वरं पश्यति=स्वानन्यतया साक्षात्करोति। तदा वीतशोको देहादिव्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्। अस्य निरस्तसमस्तोपाधिकस्य परमेश्वरस्य महिमानं=सार्वात्म्यनिरतिशयानन्दपूर्णत्वाद्वैतत्वादिमहिमानं इति=एति—प्राप्नोति। न च तद्भावानाप्तौ तन्महिमा आप्यते, अतस्तद्रूपो भवतीत्यर्थः। 'स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति।' (५।२४) इति गीतास्वप्युक्तेश्च। तस्मात् वस्तुतो जीवेश्वरौ एक एव, भेदस्तु मोहकृत इति सिद्धम्। यदाहुः भगवन्तो वेदव्यासा विष्णुपुराणादौ—विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥ यावन्मोहं तु भेदः स्याज्जीवस्य च परस्य च। ततः परं न भेदोऽस्ति भेदहेतोरभावतः॥' (६।७।९४) इति।

ननु—'जुष्टं यदा पश्यत्यन्यमीशम्' (मु. ३।१।२) इत्युत्तरमन्त्रभागयं अन्यं=स्वस्मात् भिन्नं ईशं=ईश्वरं पश्यति, न स्वभिन्नमिति स्फुटं प्रतिपादयत् जीवान्येशज्ञानमेव मोक्षहेतुः, न तु जीवैक्यैक्यज्ञानमिति स्पष्टं बोधयति इति चेन्नैवम् 'जुष्टं यदा पश्यत्यन्यमीशम्' इति वाक्ये कस्मादन्यमित्याकांक्षायां शरीरादन्यं स्वात्मानमीशं पश्यतीत्यर्थ एव प्रकृतोपयुक्तो विवक्षितः, न स्वस्मादन्यमीशं पश्यतीत्यर्थः। कुतः इति चेत्। 'समाने वृक्षे पुरुषो निमग्नः' इति पूर्वार्धे निमग्नपदेन शोकहेतुतया शरीरतादात्म्यस्योक्तत्वेनेह वीतशोकताहेतुतया प्रतिपाद्यमानस्य दर्शनस्य शोकहेतुदर्शनविरोधिन एव वक्तव्यत्वात्। देहतादात्म्यभ्रमे तु देहान्यत्वज्ञानमेव विरोधि, न तु जीवान्येशज्ञानम्। यदि तु 'अन्य-

मीशमि ' इत्यत्र स्वस्मादन्यं परमेश्वरं पश्यतीत्यर्थो विवक्षितः स्यात्, तदा पूर्वार्धे देहनिमग्नत्वादिप्रतिपादनं व्यर्थमेव स्यात्। उत्तरवाक्यस्यानुपयोगश्च स्यात्। न हि स्वभिन्नेश्वरज्ञानं विशोकताहेतुरित्यत्र देहतादात्म्यभ्रमः शोकहेतुरिति प्रतिपादनमुपयोगीति समञ्जसं केनापि वक्तुम्। देहभिन्नात्मज्ञानं विशोकहेतुरित्यभ्युपगमे तूपपत्तितया पूर्वार्धं उपयुज्यते। यतो देहात्मत्वभ्रमः शोकहेतुरतस्तद्विरोधि देहादिविविक्तात्मज्ञानं विशोकहेतुरित्यभ्युपगमे तूपपत्तितया पूर्वार्धं उपयुज्यते। यतो देहात्मत्वभ्रमः शोकहेतुरतस्तद्विरोधि देहादिविविक्तात्मज्ञानं विशोकहेतुरिति युक्तमुत्पश्यामः। अतो जीवान्येशज्ञानमेव मोक्षहेतुरिति कथनमप्रामाणिकतया तुच्छमेव। एतेन—' पृथगात्मानं प्रेरितारञ्च मत्वा ' (श्वे. १। ६) इत्यादिका श्रुतिरपि व्याख्याता, अत्रापि देहादिभ्यः पृथग्भूतमात्मानमित्यर्थ एव समञ्जस इति।

यत्तूक्तं—जीवेश्वरौ भिन्नौ विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत् ' इत्याद्यनुमानं जीवेशभेदे प्रमाणमिति। तत्र तु त्वादेर्विरुद्धधर्मस्यान्तःकरणाद्याश्रयतया स्वरूपासिद्धेः। एकस्मिन्नेव धर्मिणि निर्दुष्टस्य तु खस्वयारवच्छेदकभेदेन 'पादे मे सुखं शिरसि च वेदना ' इत्यादौ दृष्टतया धर्मिभेदासाधकत्वात्, भेदमात्रे सिद्धसाधनात्, तात्त्विकभेदसाधने दृष्टान्ते साध्यवैकल्यात्। यतः 'सर्वं खल्विदं ब्रह्म ' (छा. ३। १४। १) इत्यादिश्रुतिप्रतिपाद्यकेवलाद्वैतसिद्धान्ते दहनतुहिनयोरपि तात्त्विकभेदानभ्युपगमात्। इति। यच्चोक्तं 'नाहमीश्वरः ' इत्यादिप्रत्यक्षं जीवेशभेदे ' प्रमाणम्, तदपि न सम्यक् ईश्वरस्याप्रत्यक्षत्वेन तदनुयोगिकस्य तत्प्रतियोगिकस्य वा भेदस्य गृहीतुमशक्यत्वात्, तस्य च कल्पितभेदविषयत्वेन तात्त्विकभेदासाधकत्वात्। तदिदं उपाधिविशिष्टजीवेश्वरयोरेव भेदमवगमयति, न तु निरस्तोपाधिसम्बन्धयोरखण्ड-

चिदेकरसयो जीवात्मपरमात्मनोः' तस्य तदविषयत्वादिति । एतेन जीवात्मनां परस्परो भेदोऽपि निराकृतः । ननु—यद्येक एवात्मा, नास्त्यात्मभेद-स्तर्हि कथं सुखित्वदुःखित्वबन्धमोक्षादिव्यवस्था सेत्स्यति ? तस्या आत्मभेद-साध्यत्वात् इति चेन्नैवम् अज्ञानभेदात्तज्जन्यान्तःकरणोपाधिभेदाद्वोपपत्तेरित्याह— सदृष्टान्ता श्रुतिः—' एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ' इति । देवतिर्यङ्मनुष्यादिदेहेषु किमेक आत्मा उतानेकः ? इति संदेहे 'एक एव' इति श्रुतिर्निर्णयति, एकदा विद्यमानेषु नानासर्वदेहेषु भूतः=पारमार्थिकः सत्यः एक एवात्मा क्षेत्रज्ञो व्यवस्थितः । आत्मनो भूतत्वप्रतिपादनेनार्थादन्येषां देहाद्यनात्मनां मिथ्यात्वमुक्तं भवति । तथा च नानादेहभेदेन भ्रमप्राप्तात्मनानात्वनिषेधेन श्रुतेः आत्मैकत्वस्याज्ञातस्य ज्ञापकत्वलक्षणं प्रामाण्यं निर्वहति । तत्र योग्यं दृष्टान्तमाह—' जलचन्द्रवत् ' इति । यथा दिविष्ठे चन्द्रे विद्यमाने एकस्मिन् तत्तज्जलशरावोपाधिभेदेन बहवो जलचन्द्रा उपलभ्यन्ते, उपाधिभेदवशाद्भ्रान्त्या, तथा एकस्मिन्नद्वितीये प्रत्य-गात्माभिन्ने ब्रह्मणि विद्यमाने तत्तदन्तःकरणोपाधिषु बहवः प्रतिबिम्बकल्पा जीवाः प्रतीयन्ते भ्रान्त्या । तत्र च बिम्बभूत ईश्वरः प्रतिबिम्बभूता जीवाः । यथा चैकस्मिन् जलचन्द्रे कम्पमाने न सर्वे कम्पन्ते, तथैकस्मिञ्जीवे सुखिनि दुःखिनि वा न सर्वे तथा भवन्ति। यथा चैकोपाधिनिवृत्तौ न सर्वेषां जलचन्द्राणां बिम्बैकता भवति, किन्तु यस्योपाधिर्निवृत्तस्तस्यैव, तथा ज्ञानध्यानादिना यस्योत्पन्नस्तत्त्व-साक्षात्कारः, स एव ब्रह्मैकतां याति नान्य इति । सुखित्वदुःखित्वबन्धमुक्ति-व्यवस्था सुकरैव ।

योऽप्यभिहितः परमेश्वरात् जगतो भेदः, सोऽपि ' एकमेवाद्वितीयम् ' (छा. ६ । २ । १) इति विजातीयादिसकलभेदभेदनिराकरणपरया श्रुत्या

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र. सू. २ । १ । १४) इति सौत्र-युक्त्या च निरसनीयः । न चाद्वितीयपदे 'न द्वितीयमद्वितीयमि'ति तत्पुरुष-समासाश्रयणे न द्वितीयं किन्तु प्रथमं तृतीयं चेत्यर्थः स्यादिति वाच्यम् । तयोरपि प्रथमतृतीययोः किञ्चिदपेक्ष्य द्वितीयत्वादिति तत्पुरुषसमासार्थासम्भवात् 'न विद्यते द्वितीय यत्र' इति बहुव्रीहिसमास एवाश्रयणीयः । तेन च यावन्तो भेदा वा भेद्या वा सन्ति, तेषां सर्वेषां द्वितीयत्वात्, तान् सर्वान् 'अद्वितीयं' पदं प्रतिषेधति । नन्वेवं किञ्चिदपेक्ष्य ब्रह्मापि द्वितीयमेव, तथा च तस्यापि निषेधः स्यात् इति निरवधिकं वक्तव्यं न सम्यक्, शून्यवादापत्तेः । निरधि-ष्ठाननिषेधस्यायोगेन तदधिष्ठानस्यावश्याभ्युपगमात् अपेक्षाप्रयोजकस्य सर्वस्य दृश्यद्वैतप्रपञ्चस्य निषेधेन किञ्चिदपेक्ष्य ब्रह्मणि द्वितीयत्वापादनस्याशक्यत्वात् तन्निषेधो न युक्तः । किञ्च भो ! त्वमेव भ्रान्त्या ब्रूषे, ब्रह्म द्वितीयं, परञ्च अभ्रान्ता भगवती श्रुतिस्तु 'तत् अद्वितीयमेव' इति ब्रवीति । न चैवमद्वितीयपदेनैव भेदत्रयगर्भितदृश्यमात्रनिषेधसंभवे श्रौतैकावधारणपदयोर्वैयर्थ्यमिति वाच्यम् । 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेन तदसंकोचतापर्यार्थमादाय अद्वितीयपदेन यदुक्तं तदेव एवैकपदे द्रढयतः । तथाहि—एकपदस्य केवलार्थकत्वेन कैवल्यं किल तस्य स्वान्यशून्यत्वमेव बोधयति । एवं एवकारोऽपि तस्मिन् अन्यथाद्या-स्यन्यवच्छेदं ज्ञापयति । तथा च तत्र केनापि प्रकारेण भेदगन्धो नास्ति, सर्वप्रपञ्चरहितं, सर्वथाऽखण्डैकरसमद्वैतमेवास्ति वस्तु, नात्र शङ्का-लेशोऽप्यस्तीति सिद्ध्यति । बलीवर्दपदसन्निधाने गोपदस्य विशेषार्थे संकोच इव, तमाश्रित्य 'एक एव अद्वितीयं' इति त्रिभिः पदैर्येषं स्वगतसजातीय-विजातीयभेदत्रयनिषेधं कृत्वा तयोः सार्थक्योपपादनेऽपि न काचन क्षतिः । एवं 'ब्रह्मैवेदं २ सर्वम्' (नृ. उ. ७) 'सर्वं खल्विदं ब्रह्म' (छा.

३ । १४ । १) 'वासुदेवः सर्वमिति' (गी. ७ । १९) 'एवमेक-मिदं विश्वं न भेदि सकलं जगत् । वासुदेवाभिधानस्य स्वरूपं पर-मात्मनः ॥' (वि. पु. २ । १५ । ३५) इत्यादयः श्रुतिस्मृतिपुराणवादा अपि बाधसामानाधिकरण्येन सर्वस्य जगतो ब्रह्माभिन्नत्वं प्रतिपादयन्तः तद्भेदं निराकुर्वन्ति । अधिकमन्यत्राकरग्रन्थेष्वनुसंधेयम् ।

## तत्त्वमसिमहावाक्यविचारः

ननु-भो ! 'तत्त्वमसि' (छा. ६ । ८ । ७) इति महावाक्येन कथं जीवब्रह्मणोरभेद एव प्रतिपाद्यते । प्रकारान्तरेण तयोर्भेदस्य तेन प्रतिपादन-सम्भवात् । तथाहि—'तत्त्वमसि' इत्यत्र चतुर्थ्याः 'सुपां सुलुक्' इति पाणि-नीयसूत्रेण लोपं कृत्वा, स्वादेशं वा कृत्वा विभक्तिप्रत्ययं विधाय वा तस्मै परमेश्वराय त्वं समर्पणीयोऽसीत्यर्थः स्वीकार्यः । पञ्चम्या वा स्वादेशलोपाद्यो-नामन्यतमं स्वीकृत्य तस्माद्विश्वकारणाद्भगवतस्त्वमुत्पन्नोऽसीत्यर्थोऽभ्युपेयः । षष्ठ्या वा तत्त्रितयं स्वीकृत्य तस्य विश्वस्वामिनः परमात्मनः त्वं दासोऽसि-तत्स्वामिकोऽसीत्यर्थोऽङ्गीकार्यः । सप्तम्या वा तत्त्रितयं स्वीकृत्य तस्मिन् विश्वा-धिष्ठाने ब्रह्मणि त्वमाश्रितोऽसीत्यर्थो ग्राह्यः । अथवा 'स आत्मा तत्त्वमसि श्वेतकेतो' । इत्युद्दालकस्य स्वपुत्रं श्वेतकेतुं प्रत्युपदेशपरे वाक्ये 'आत्मा अतत् त्वमसि' इति पदच्छेदः कार्यः । अतदित्यत्र च नञर्थो भेदः, तथा च यः सत्यत्वादिगुणोपेतः स एव परमात्मा, त्वं तु अतत् । तस्मात्परमात्मनो भिन्नः परतन्त्रो जीवोऽसीत्यर्थः उपेयः । एवं च तत्त्वमसिमहावाक्येन जीवेश्वरयोर्भेद एव सिद्ध्यति ।

अत्रोच्यते—'अनन्यलभ्यो हि शास्त्रार्थः' इति न्यायेन शास्त्रादति-रिक्तेन प्रमाणेन यन्न लभ्यते, तत्रैव शास्त्रस्यास्ति तात्पर्यम् । जीवेश्वरयोर्भेदस्य

प्रत्यक्षादिप्रमाणेभ्यः सिद्धत्वेन पुनस्तस्यैव तात्पर्यतः प्रतिपादने नोत्साहं करोति शास्त्रम् । अपि च 'तत्त्वमसि' महावाक्यस्य द्वैतवादिविहित-पूर्वोक्तो भेदार्थः तात्पर्यभूताद्वैतार्थबोधक-उपक्रमोपसंहारादिगर्भित-महाप्रकरण-विरुद्धत्वात्-अप्रामाणिकतया कथमपि नोपादेयः । तथाहि-महाप्रकरणस्य तस्योपक्रमे हि-श्वेतकेतुं स्वपुत्रं गुरुकुलात् सर्वान् वेदानधीत्य गृहमागतं स्तब्धमानिनं प्रति पितुरुद्दालकस्य स्तब्धताऽपनोदनार्थोऽयं एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपबृंहितः प्रश्नः-'उत तमादेशमप्राक्ष्यः' इति अनन्यलभ्याद्वैततत्त्वविषयक एव स्पष्टमवगम्यते । जीवब्रह्मणोः जगद्ब्रह्मणोश्च वास्तविकभेदस्वीकारे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कथमपि न संगच्छेत । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च विवर्ताभिप्रायेणैव समर्थनीया न तु परिणामाभिप्रायेण । यदाहुः संक्षेपशारीरकाचार्याः-'कृपणधीः परिणाममुदीक्षतां क्षपितकल्मषधीस्तु विवर्तताम् ।' इति । न च एकविज्ञानेन तत्सदृशं तदधीनं च सर्वं ज्ञायते इत्यप्यर्थः प्रतिज्ञायाः स्यादिति वाच्यम् तथा नियमाभावे-तादृशस्यार्थस्यासंगतत्वात् । न हि गोज्ञाने तत्सदृशस्य गवयादेः, राजज्ञाने च तदधीनस्य प्रजादेर्नियतं ज्ञानं संभवति । तस्मादनियतज्ञाने तत्सदृशादेकल्पनं प्रामादिकमेव । तथा च 'अश्रुतं अमतं अविज्ञातं वियदादिक सर्वं चराचरजगत् तत्त्वतो यदभिन्न-श्रुत-मत-विज्ञात-ब्रह्मव्यतिरिक्तस्वीयतात्त्विकरूपशून्यम्, एकं ब्रह्मतत्त्वं सर्वस्याधिष्ठानमित्यर्थ एव प्रतिज्ञातः । विवर्तवादेऽधिष्ठानज्ञानेनाऽऽरोपितस्य तत्त्वतो ज्ञातत्वं संप्रतिपन्नम् । रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवत्येव, सा हि तस्य तत्त्वम् । रज्जुसाक्षात्कारानन्तरं यत्भाक् भुजङ्गतत्त्वप्रभावात् सा रज्जुरिति प्रत्ययात् भुजङ्गे रज्ज्वात्मकज्ञातस्वीयतत्त्वक-

वात्मकं रज्जुज्ञानेन तत्त्वतो ज्ञातत्वमक्षतम् । एवं हि 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां. ६ । १ । ४) इति वाक्यशेषे प्रदर्शितो दृष्टान्तोऽप्यनुकूल एव स्यात् । स च मृद्विकारस्य घटशरावादेरनृततां प्रतिपादयति । वाचाया आरम्भणं=आलम्बनमात्रमेव विकारो घटशरावादिः नामधेयं—नाममात्रं; न तु तस्य पृथग्भूता वस्तुसत्ताऽस्तीति द्योतयति नामधेयपदम् । इदं च नामपदस्याऽऽभासद्योतकत्वम्—'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ।' (गी. १६ । १७) इति । घटः सत्तियादिव्यवहारस्तर्हि कथमुपपाद्यः ? इत्यत आह—मृत्तिकेत्येव सत्यम् इति । मृत्तिकात्मनैव घटादिकं सत्यं न तु स्वरूपेणेत्यभिप्रायः । अमुमर्थं दार्ष्टान्तिके दर्शयति—'एवं सोम्य ! स आदेशो भवती'ति ।

तदुपपादनायैव—'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् ।' (छां. ६ । २ । १) इत्यभिहितम् । अनेन हि इदंशब्दोदितस्य विश्वस्य सद्ब्रह्माभेदेन सत्त्वमभिधायार्थात् सद्व्यतिरेकेणाविद्यकनामरूपात्मकस्य द्वैतस्य मिथ्यात्वं स्पष्टं प्रतिपाद्यते, एकमेवाद्वितीयमित्यनेन भेदत्रयनिषेधद्वारा तदेव समर्थ्यते । एवं 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ।' (छां. ६ । ३ । २)' इत्यनेन मध्येऽपि जीवब्रह्मणोरभेद उक्तरीत्या निष्प्रपञ्चाद्वितीयब्रह्मपरोपक्रमानुगुण एव परामृश्यते । एवं—'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ।' (छां. ६ । १६ । ३ ) इत्युपसंहारोऽप्युपक्रमानुगुण एवोपलभ्यते । ऐतदात्म्यमिदं सर्वमिति हि—'इदं सर्वं यदयमात्मा' (बृ. ४ । ५ । ७) इत्यादिश्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्र आसीत्' (छा. ६ । २ । १ ) इत्युपक्रमानुसाराच्च

स्यज्य विशेष्यमात्रस्यैवाद्वैतमित्यभ्युपगम्यते चेत् तदा तु सिद्धसाधनं विशिष्टस्याद्वैतमित्युक्तिरसंगता च स्याताम्। अपि च विशेषणोपन्यासस्य सम्भवव्यभिचाराभ्यामेवार्थवत्त्वाभ्युपगमात् न हि चिद्चिद्विशिष्टं ब्रह्मेति कथनेन कश्चित् सम्भवो ज्ञाप्यते, नापि व्यभिचारः, अतो विशेषणोपन्यासस्य व्यर्थतयाऽद्वैतस्य विशिष्टतोक्तिः सर्वथाऽसंगतैव।

ननु–'यस्य पृथिवी शरीरम्' (बृ. ३।७।३) 'यस्यात्मा शरीरम्' (बृ. ३।७।२२) इत्यादिश्रुत्या शरीरशरीरिभावनिबन्धन जीवात्मना सह, पृथिव्यादि–जडात्मना च सहाद्वितीयस्य परमात्मनो वैशिष्ट्य निरूप्यते। यस्य च यच्छरीरं भवति, स तस्य शरीरस्यात्मा भवति, अतति= व्याप्नोतीत्यात्मा, यच्च येन व्याप्यते, तत्तस्य शरीरम्। ईश्वरेण हि सजीवं सर्वं जगदन्तर्यामिरूपेण व्याप्यते, अत एव सजीवं सर्वं जगत् ईश्वरस्य शरीरम्। इयान् विशेष–जीवात्मा च ईश्वरस्यैव शरीरं भवति, जडस्य चात्मा भवति। इति। अत्रोच्यते–जीवजडयो परमात्मना सह शरीरशरीरिभावो न प्रामाणिकः न च युक्तियुक्तः। 'यस्य पृथिवी शरीरमि' त्यादौ शरीरशब्दोऽस्ति स्वरूपार्थकः 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तञ्च' (बृ २।३।१) 'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च॥' (वि. पु १।२२ ५३) इति श्रुतिपुराणादिभि तदेवानुमन्यते। लोकेऽपि दृश्यते हि–शरीरशब्द स्वरूपार्थकः 'शिलापुत्रकस्य शरीरमि'ति। शरीरं हि कर्मजन्यफलभोगायतनं लोके प्रसिद्धम्। न च परमेश्वरस्य कर्मजन्यफलभोगाः संभवन्ति। तथा च सजीवं सर्वं जगत् परमात्मनः शरीरमित्युपगमो युक्तिविरुद्धोऽपि।

ननु–अविद्यादिकं परिच्छिन्नं दृश्यं जडं तद्विपरीतस्य परमात्मनः कथं स्वरूपं स्यात्' इति चेन्नैवम्। पृथिव्यादौ अस्तित्वादिलक्षणस्य तत्स्वरूपस्य तदधिष्ठानतया विद्यमानत्वात्, पृथिव्यादिकं–'विश्वं विष्णुः' (विष्णुसहस्रनाम) 'सर्वं वासुदेवः' (गीता) इति यत् बाध-सामानाधिकरण्येन तत्स्वरूपं स्यादिति मत्वा श्रुतिः 'यः पृथिव्यां तिष्ठन्' इत्यादिकं ब्रूते (बृ. ३।७।३) अत एव 'नान्योऽतोऽस्ति विज्ञाता एष त आत्मा अन्तर्याम्यमृतोऽतोऽन्यदार्तम्' (बृ.३।७।२३) इति वाक्यशेषे अन्तर्यामि–स्वरूपव्यतिरिक्तस्याविद्याविजृम्भितस्य पृथिव्यादिद्वैतप्रपञ्चस्य मिथ्यात्वप्रतिपादनात् न चिदचिच्छरीरकं ब्रह्म, अपि तु केवलं पूर्णमद्वैतमेव तत् इति स्पष्टं प्रतिपादयति। वस्तुतः 'यस्य पृथिवी शरीरमि' त्यादौ तूपासनाविशेषार्थं 'मनसि ब्रह्मत्वमिव' पृथिव्यादौ तच्छरीरत्वं कल्पितमेव मन्तव्यम् न पार-मार्थिकम्। न च जीवात्मनोऽपि चेतनस्य तच्छरीरत्वं पारमार्थिक-मभ्युपगन्तुमुचितम्। अन्यथा 'अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छा. ६।३।२) इत्यादिका श्रुतिः जीवस्य परमात्मत्वमभिप्रेत्य प्रवर्तमाना जीवस्य शरीरतायां बाध्येत, जीवे आत्मपदप्रयोगोऽपि विरुद्ध्येत। न च श्रुतौ शरीरत्वव्यपदेशमात्रेण पृथिव्यादिकं जगत् जीवात्मा च परमात्मनो मुख्यं शरीरं स्यात्। 'तस्याः वाचः पृथिवी शरीरम्' 'अथैतस्य मनसो द्यौः शरीरम्' इत्यादावपि तत्प्रसङ्गात्। परमात्मना व्याप्यत्वे सति नियाम्यत्वात् गौणस्तु व्यपदेशो युक्त एव। मुख्ये तु शरीरभावे गौणत्वतत्त्वं तादात्म्याभिमानश्च प्रयोजकः। तदभावे च गौणमेव तस्य शरीरत्वमभ्युपगन्तव्यम्। अन्यथा जीवस्येव

मुख्ये शरीरित्वे परमात्मनः प्रियादिसंश्लेषप्रसङ्गः। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः।' (छां० उ० ८।१२।१) इति श्रुतेः। 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।' (क० १।१।२१) 'अकायमव्रण-मस्नाविरं शुद्धमपापविद्धम्' (यजु. ४०।८) इत्यादिश्रुतिभिः सिद्धं परमात्मनः पारमार्थिकमशरीरत्वम्। अत्र शरीरावस्थानकाल एवाशरीरत्वप्रतिपादनात् काल्पनिकं सशरीरत्वं स्वाभाविकमशरीर-त्वमिति गम्यते। यदाहुः—'ईशोऽनभिनिविष्टात्मा मायाऽऽविष्कृत-वर्ष्मणि। नैति प्रियादिसंस्पर्शमशरीरपदोदितः॥' इति। तथा च बृहदारण्यकीयान्तर्यामिब्राह्मणं शरीरशरीरिभावस्य पारमार्थिकतायां न प्रमाणम्। न च पृथिव्यादिनियम्यत्वमात्रेण तदपृथक्सिद्धिलक्षणं वैशिष्ट्यमपि संभवति। राजनियम्यानां प्रजानां तदपृथक्सिद्ध्यभा-वात्। सति चैवं चैतन्यस्वरूपमात्रे ब्रह्मणि द्वितीयसामान्यं निषेधन्त्यो ब्रह्मव्यतिरेकेणेतरेषामभावमेव बोधयन्त्यः 'नेह नानास्ति किञ्चन' (बृ. ४।४।१९) 'एकमेवाद्वितीयम्' (छां० ६।२।१) इत्यादिकाः श्रुतयोऽप्युपपद्येरन्।

---

■ स्नावाः=सिराः—ताभ्यः तद्रहितमस्नाविरम्। अव्रणमस्नाविरमित्याभ्यां स्थूल-निषेधे सिद्धे पुनस्तन्निषेधो लीलाधृतदिव्यविग्रहस्याप्यद्भुततत्प्रतिपादनार्थः। तथा च विश्वरूपधरस्य परमात्मनो महाभारतस्य शान्तिपर्वीयमोक्षधर्मे वचनं—'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि॥' इति। देवीपुराणे पञ्चदशाध्यायेऽप्यस्याः स्वरूपमुक्तम्—'विचित्रकार्यकरणा अचिन्तित-फलप्रदा। स्वप्नेन्द्रजालवल्लोके तेन माया प्रकीर्तिता॥' इति।

एतेन—शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्य '**देवदत्तो जानाती**' त्यादिस्थलेषु क्लृप्ततया त्वंपदस्यापि जीवशरीरिपरमात्मपरत्वात् शरीरशरीरिभावबोधकत्वाभिप्रायेण 'तत्त्वमसि' महावाक्ये सामानाधिकरण्यवर्णनमपि परास्तम् । **त्वंशब्दार्थस्य तच्छब्दार्थे विशेषणत्वाभावात् त्वंशब्दस्येश्वरशरीरभूतजीववाचकस्येश्वरे वृत्तिरभ्युपगन्तुमशक्या ।** किन्तु तच्छब्दस्यैव प्रकृतपरामर्शकस्य त्वंशब्दार्थे जीवेऽभेदसम्बन्धेन विशेषणसमर्पकत्वमभ्युपगन्तुमुचितमेव । अन्यथा 'असि' इति मध्यमपुरुषानुपपत्तेः । यतः त्वंशब्दार्थस्येतरविशेषणत्वे आकाङ्क्षाऽभावेनाऽऽख्यातसामानाधिकरण्यायोगात् । एतेन—युष्मदुपपदमात्रेण मध्यमपुरुषप्रयोगोपपत्तिः परास्ता । युष्मच्छब्दस्याऽऽख्यातसामानाधिकरण्ये एव 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति पाणिनीयसूत्रेण मध्यमपुरुषविधानात् । अतस्त्वंशब्दार्थस्यैव विशेष्यत्वमुपेयम् । तत्र च परमात्मपरतच्छब्दस्य वृत्तिः शरीरवाचकानां शरीरिपर्यन्तत्वाभ्युपगमेऽपि न संभवति । ईश्वरस्य जीवं प्रति शरीरत्वाभावात् । अतो मध्यमपुरुषोपपत्तये जीवविशेष्यकमेव सामानाधिकरण्यमभ्युपेयम् । दृश्यते च त्वमहंशब्दार्थयोर्विशेषणविशेष्यभावव्यत्यासे मध्यमोत्तमपुरुषयोर्व्यत्यासः—**त्वं वाऽहमस्मि भगवो देवते ! अहं वै त्वमसि भगवो देवते !**' इति । अपि च शरीरवाचकानां शरीरिपर्यन्तत्वं न लोकसिद्धम्, तद्धि '**अन्याय्यश्चानेकार्थत्वमि**' ति न्यायविरोधेन न शक्त्या वक्तुं शक्यम् । लक्षणयोच्यमाने देवदत्तो जानातीत्यादौ भ्रममूलकाध्यासप्रयुक्तमेव तयोः सामानाधिकरण्यम्, नाभेदप्रयुक्तमिति सम्यक् पश्यामः ।

सति चैवं '**निरञ्जनः परमं +साम्यमुपैति**' ( मु० ३ । १ । ३ )

---

\+ पारम्यविशेषितं हि साम्यं अभेद एव । तदुक्तं महागीतासु—' सर्वाकारतया साम्यं, परमाद्वैतलक्षणम् । अतः साम्यं तयोः साक्षात्

इति साम्ये पारम्यविशेषणेन, 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३।२।९) इति तदन्यभावव्यवच्छेदकावधारणाग्रानेन 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' (तै० २ । ७) 'द्वितीयाद्वै भयं भवति' (बृ० १ । ४ । २) 'अतोऽन्यदार्तम्' (बृ० ३ । ४ । २) 'विद्वान् नामरूपाद्विमुक्तः' (मु० ३ । २ । ८) इत्यादिभेदनिन्दाश्रवणेन च

---

ऐक्यमेव न चेतरत् ॥' इति । न चात्र साम्यं सादृश्यं स्यात्, न त्वैक्यं तत्र प्रयोगादर्शनादिति वाच्यम् । 'ज्ञानसमकालमुक्तः' 'समसमयवर्ती' इत्यादौ 'समानं वृक्षं परिषस्वजाते' 'समानग्रामः' इत्यादौ च समशब्दस्य तत्पर्यायसमानशब्दस्य चैक्ये प्रयोगदर्शनात् साम्यमिह ऐक्यमेव मन्तव्यम्, न सादृश्यम् । अपि च 'निर्दोषं हि समं ब्रह्म' (गी० ५ । १९) 'पण्डिताः समदर्शिनः' (गी. ५ । १८) इत्यादिगीतावचनेषु सम-शब्दः ब्रह्म, सादृशदर्शिन' इत्यर्थो न कथमपि युक्ततयाऽभ्युपेयते । न च ब्रह्मणः कथञ्चित् केनचित् सादृश्यमस्ति । 'न तस्य प्रतिमा अस्ति' (श्वे ४ । १९) इत्यादिना तत्प्रतिमायाः=सादृश्यस्य प्रतिषेधात् । न चैवं साम्यार्थे ऐक्येऽवधृते परमत्वविशेषण प्रयोजनाभावात् व्यर्थं स्यादिति वाच्यम् । सोपाधिकस्यैक्यस्य व्यावृत्तिरूपस्य प्रयोजनस्य सद्भावेन तस्याव्यर्थत्वात् । तस्मात् 'परमं साम्यम्' इत्यत्र सर्वात्मनाऽखण्डैकरसपूर्णत्वलक्षणमैक्यमेव साम्यमिति सिद्धम् । अथवा समशब्दस्य सर्वपर्यायत्वोपगमात् साम्यमिह सर्वत्वलक्षणमप्यभ्युपेयताम् । 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' (बृ १।४।१०) इत्यादिश्रुतेः । अत्रत्यस्य सर्वात्मत्ववचनं हि विदुषो ब्रह्मभावं विहाय न शक्यं गमयितुम् । अतः सर्ववत्त्वस्य ब्रह्मत्वमभ्युपेयते । स्मर्यते च भगवता गीतास्वपि—'मद्भावं सोऽधिगच्छति ।' (१४ । १९) इति ज्ञानलभ्ये सर्वत्वरूपे साम्ये आपेक्षिकत्वशङ्कामपोह्य व्यावर्तयितुं निरतिशयत्वं विज्ञापयितुं परममिति विशेषणम् । तस्मात् श्रुत्यन्तरप्रतिपादितं ब्रह्मभावाविनाभूतं सर्वात्मत्वरूपमेवात्र परमं साम्यमभ्युपेयम् । इति सर्वं सुस्थम् ।

भेदविरहितं पारमार्थिकाभेदलक्षणमेव 'तत्त्वमसि' महावाक्ये श्वेत-
केतुमुद्दिश्य तत्=सत्यं परमात्मतत्त्वं त्वमेवासि' इति प्रत्यगभिन्न-
ब्रह्मभावलक्षणविधेयाभिप्रायेणैव सामानाधिकरण्यमभ्युपेयम्। तथा
च 'जीवशरीरकः परमात्माऽस्ति' इति यत् 'तत्त्वमसि' महावाक्यार्थ-
वर्णनं तत् किल विशिष्टाद्वैतिनां दुराग्रहप्रयुक्तमतिसाहसिक्यमेव।
अद्वैततत्त्वविद्वेषमात्रेण श्रुतिः कदर्थ्यते तैः। तत्र तथ्यस्य गन्धोऽपि
नास्ति, किमस्ति केन कस्य संगतमिति समालोचयन्तु सुधियः।
तस्मादुपक्रमादिषड्विधतात्पर्यलिङ्गैः सम्यङ् विमृश्यमाना तत्त्वमसीति
श्रुतिः जीवपरमात्मनोरभेदमेवात्यन्तिकं बोधयति। एवं तस्या अभेद-
परत्वे निर्णीते तात्पर्यनिर्वाहार्थं पदद्वयलक्षणाश्रयणमपि न दोषाय। तात्पर्यानु-
पपत्तिर्हि लक्षणाबीजम्। इति। एवं च सर्वथा 'तत्त्वमसि' श्रुतेः शरीरशरी-
रिभावनिबन्धने विशिष्टाद्वैते न स्वारस्यमिति सिद्धम्।

## द्वैताद्वैतमतसमालोचनम्।

उपलभ्यन्ते हि द्विविधाः श्रुतयो द्वैतप्रतिपादिन्यः, अद्वैतप्रतिपादिन्यश्च।
'तुल्यं च साम्प्रदायिकमि'ति न्यायेन विनिगमकाभावात् द्वयोरपि
द्वैताद्वैतयोः श्रुतितात्पर्यविषयत्वमङ्गीकर्तव्यम्। तथा च श्रुतिमूलकत्वाविशेषात्
यथाऽद्वैतं पारमार्थिकमद्वैतिभिर्मन्यते, तथैव द्वैतिभिरपि मन्तव्यम्। एवं यथा
द्वैतं पारमार्थिकं द्वैतिभिः स्वीक्रियते, तथाऽद्वैतिभिरपि स्वीकर्तव्यम्। सति चैवं
तयोर्द्वयोर्वादिनोर्विवादशान्त्या सामञ्जस्यं सेत्स्यति इति।

अत्र वदामः। द्वैताद्वैतयोर्विषमसत्ताकयोर्विरोधाभावेऽपि सम-
सत्ताकयोस्तेजस्तिमिरवदत्यन्तपरस्परविरोधित्वात्, तयोर्द्वयोरपि

श्रुतितात्पर्यविषयत्वस्य साक्षात् सहस्रवदनेनापि वक्तुमशक्यत्वात्; द्वैतस्य च प्रत्यक्षादिनाऽधिगतत्वात्; 'नेह नानास्ति किञ्चन' (बृ. ४।४।१९। क. ४।११) इत्यादिश्रुतिभिश्च बाधितत्वात्, प्रयोजनासमर्पकत्वात् प्रत्युतानर्थप्रयोजकत्वाच्च श्रुतितात्पर्यविषयत्वाभावात् परिशेषादनधिगतस्याबाधितस्य सप्रयोजनस्याद्वैतस्यैव श्रुतितात्पर्यविषयत्वमभ्युपेयम्। गत्यन्तराभावात् अधिगतस्य द्वैतस्यानुवादकतया तदुक्ते गौणार्थत्वमेव मन्तव्यम्। एतेन—विनिगमकाभावेनान्यतरस्य तात्पर्यविषयत्वेऽन्यतरस्य च गौणार्थत्वेऽवश्यं स्वीकर्तव्ये द्वैतप्रतिपादकश्रुत्यनुसारात् अद्वैतस्यैव गौणार्थत्वं किं न स्यादिति प्रत्युक्तम्, विनिगमकस्य दर्शितत्वात्। शास्त्रेण हि जीवेश्वरजगदादीनामभेदलक्षणे तात्त्विकेऽद्वैते प्रतिपादिते प्रत्यक्षादिसिद्धस्य भेदरूपस्य द्वैतस्य तु समनुसृत्यैव व्यवस्था आस्थेया। तत्र चावच्छेदकभेदेन कालभेदेन वा व्यवस्थायामाश्रीयमाणायां द्वैतप्रपञ्चनिषेधकानि श्रौतस्मार्तादीनि द्वैतनिन्दाज्ञापकानि च वाक्यान्युपपद्येरन्। अनियतत्वे तु द्वैतप्रपञ्चस्य नामरूपात्मकस्योच्यमाने न कस्याप्युपरोध स्यात्। अत आनियतत्वात् द्वैतस्य न शास्त्रप्रतिपादितेन तात्त्विकेनाद्वैतेन सह विरोधिता इत्येव पक्षः समीचीनः। सति चैवं द्वैताद्वैतविरोधपरिहारसम्भवे स्वकपोलकल्पनया द्वैतस्य तात्त्विकत्वं शास्त्रतात्पर्यविषयत्वलक्षणं न किञ्चिदपि आस्थेयम्। अविद्यावस्थायां द्वैतस्याविद्यात्वं तु 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति (बृ. २।४।१४) इत्यत्र वर्तमानेन इवकारेण स्पष्टं द्योत्यते। विद्यावस्थायाञ्चाद्वैतात्ममात्रपरिशेषिता 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ. ४।५।१५) 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां

नामरूपे पुरुष इत्येव प्रोच्यते स एषोऽकलोऽमृतो भवति ।' (प्र. ६।५) 'पूर्णमेवावशिष्यते' (बृ. ५।१।१) 'ब्रह्माद्वयं शिष्यते' (श्रीमद्भागवत. १०।१४।१८) इत्यादिवचनैः स्फुटमवगम्यते । द्वैतस्य पारमार्थिकत्वमते तु श्रौत इवशब्दः, विद्यया अद्वैतात्ममात्र-परिशेषिता च विरुद्धयेताम् ।

अपि च श्रुतिप्रतिपादिते द्वैतस्याविद्याकृतत्वे मिथ्यात्वे च श्रीमद्भागवतविष्णुपुराणादीनां भूयसां वचनानामप्यस्त्युपबृंहणम् । तथा हि—'तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरु-दुःखदुःखम् । त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत् सदिवावभाति ॥' (भा. १०।१४।२२) 'अविद्यमानोऽप्यव-भाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा । तत्कर्म सङ्कल्प-विकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥' (भा. ११। २।३८) 'शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया। स्वप्नो यथा-ऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥' (भा. ११।११।२) 'न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे । अत उपमीयते द्रविणजातिविकल्पपथैर्वितथ-मनोविलासमृतमित्यवयन्त्यबुधाः ॥' (भा. १०।८७।३७) 'सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तिदृष्टिभिरात्माऽपि तथैकस्सन् पृथक् पृथक् ॥' 'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित्कदाचित् द्विज ! वस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्न-चित्तैर्बहुधाभ्युपेतम् ॥' (वि. पु. २।१२।४३) 'सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम् ।' 'तत्याज भेदं

परमार्थदृष्टिः ।' (वि. पु. २ । १६ । २३) 'रज्जावहिर्मरौ वारि नीलिमा गगने तथा । असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितम् ॥' (वायुपुराणे १०४ । ३९) इति । न च तात्त्विकं द्वैतमभ्युपेयैवगादीनि वचनजातानि क्लेशेन योजयितुमुचितानि । निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थविज्ञानानुपपत्तेश्च । निरपवादत्वं शास्त्रीयापवादरहितत्वम् । सुनिश्चितत्वम् अर्थस्य युक्तिसंभावितत्वम् । द्वैताद्वैतविज्ञानं हि द्वैतनिषेधकशास्त्रेणापोद्यते । न च युक्त्या सम्भाव्यते स पक्षः । अत एव 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव । स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥' (२ । ५४) इत्यादिगीतावचनेषु विद्वान् स्थितप्रज्ञत्वेन निरूप्यते । तत्र हि प्रज्ञायाः स्थितत्वं सुनिश्चितार्थविषयत्वनिरपवादत्वाविलक्षणमेव प्रत्येतव्यम् ।

अपि च यन्मते संसारदशायामपि भेदाभेदौ स्त, तेन वक्तव्य—मोक्षदशायां भेदोऽनुवर्तते न वेति । यद्यनुवर्तते तदा 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिशास्त्रविरोध प्रसज्येत । न चाभेदांशमादाय तदुपपत्तिः स्यात् । तस्य ज्ञानात्प्रागपि विद्यमानतया ज्ञानानन्तर तत्कथनवैयर्थ्यात् । यदि नानुवर्तते, तदा स्वपक्षहानिः परसिद्धान्तप्रवेशश्च स्याताम् । यतो मोक्षदशायामपि पारमार्थिकस्य भेदात्यन्ताभावरूपस्याभेदस्यानुवर्तमानत्वात्, तेन सह प्रपञ्चदशाया समानाधिकरणस्य भेदस्य ज्ञानबाध्यतयाऽनृततासिद्धे केवलाद्वैतसिद्धान्तादैपरीत्याभावात् । न च कालभेदेन भेदाभेदौ व्यवस्थितौ इति पक्षोऽपि युक्तियुक्त । तथा हि—बन्धदशायां वस्तुतो भिन्नस्य मोक्षदशायामभेदः इति वदता त्वया वक्तव्यं—किं स्थितस्यैव जीवस्य मोक्षदशायामभेद उत नष्टस्य । नाद्य सतो जीवस्य प्राग्भिन्नस्य मोक्षदशायामप्यभेदासम्भवात् । न हि घटपटयो-

भिन्नयोः प्राक्तनयोः कदाचिदप्यभेदो दृष्टः। नापि नष्टस्याभेदः सम्भवति। असतो विद्यमानेनैक्यासम्भवात्। अतो जीवस्य ब्रह्मणा नित्यसिद्धोऽत्यन्ताभेदः, अविद्यादशायां काल्पनिको ज्ञाननिवर्त्यो भेदः इति–अकामेनापि त्वयाऽच्छमतिना एषितव्यम्। तस्मात् द्वैताद्वैतमतमपि तत्त्वज्ञानार्जनरसिकानां विचारशीलानां सज्जनानां मनोमोदं न निदधातीति सिद्धम्।

## शुद्धाद्वैतमतसमालोचनम्।

शुद्धाद्वैतं नाम शुद्धस्य कार्यस्य जीवजगल्लक्षणस्य ब्रह्मपरिणामभूतस्य चराचरप्रपञ्चस्य मायासम्बन्धरहितस्य कारणस्य च शुद्धस्यामायिनो ब्रह्मणः अद्वैतं–ऐक्यमिति। तदुक्तं–'मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः। कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम्॥' इति। (प्रमेयरत्नार्णव पृ. २८। २४) एतन्मते वास्तविको जीवब्रह्मणोरंशांशिभावः, अविकृतब्रह्मपरिणामवादः, जगतः सत्यत्वमेव नतु मिथ्यात्वम्। श्रीमद्भागवतं परमं प्रमाणम्। इति।

अत्राभिधीयते–न हि निर्विकारस्य परमात्मनः परिणामित्वं वक्तुं शक्यम्। परिणामो नाम विकारः, अन्यथाभावः इति। 'अस्थूलमनणु'–(बृ. ३। ८। ८) इत्यादिश्रुतिवाक्यैः 'कूटस्थमचलं ध्रुवम्'–(गीता १२। ३) इत्यादिस्मृतिवचनैश्च सर्वविकारवर्जितमन्यथाभावशून्यमपरिणतमेव परमात्मतत्त्वमवगम्यते। तथा च मायासम्बन्धरहितमविकृतं परिपूर्णमक्रियं शुद्धं ब्रह्मतत्त्वं जीवजगद्रूपेण कथं वा केन वा हेतुना परिणमेत्? इति तावद्वक्तव्यम्। अथ 'तदात्मानं स्वयमकुरुत' (तै. २। ७) 'आत्मकृतेः परिणामात्' (ब्र. सू. १। ४। २६। ७) इति श्रुतिसूत्रवचनाभ्यां तदेव ब्रह्म

आत्मानं स्वस्वरूपमेव स्वयं—मायासम्बन्धं विहाय यथा स्यात्तथा अकुरुत= जीवजगद्रूपेण परिणतमकरोत्' इत्यधिगम्यते इति ब्रूपे चेत् ?, तर्हि '**मायी सृजते विश्वमेतत्**' (श्वे. ४ । ९) '**मायिनन्तु महेश्वरम्**' (श्वे. ४ । १०) '**इन्द्रो मायाभिः पुरुरूप ईयते**' (ऋ. ६ । ४७ । १८) '**आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज ।**' (भा. ४ । ७ । ५१) '**सम्भवाम्यात्ममायया ।**' (गी. ४ । ६) '**मायामात्रं तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वात् ।**' (ब्र. सू. ३ । २ । ३ । १) इत्यादिश्रुतिस्मृतिसूत्रपुराणादिशतसहस्रवचनैः तत् मायासम्बन्धदेव ब्रह्म जीवजगदात्मकनानारूपेणपरिणतं भवतीत्यप्यवगम्यते । एवं तर्हि शास्त्रवचनेषु मिथो विरोधः स्यात् ? न स्यात्, व्यवस्थया विरोधस्य परिहर्तुं शक्यत्वात् । का चास्ति सा व्यवस्था ? इति चेच्छृणु तावत्सावधानेन । सृष्टिवाक्यानि पर्यालोचयद्भिः सुधीभिः—यथा '**तस्माद्वा एतस्मादात्मनः आकाशः संभूतः**' (तै. २ । १) इत्यादिवचनैः आत्मनो विश्वोपादानकारणत्वमवबुद्ध्यते, तथैव '**मायान्तु प्रकृतिं विद्यात्**' (श्वे. ४ । १०) '**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**' (श्वे. ४ । ५) इत्यादिवचनैः तच्छक्तिभूतायाः त्रिगुणमय्याः मायाया अपि । सति चैवं सृष्टिवाक्यस्थितात्मादिपदाना मायाऽव्यक्ताजादिपदप्रतिपादितदैवीशक्तिविशिष्टपरमेश्वरपरत्वमभ्युपेत्य तदुभयविधवचनसमन्वयो विधातव्यः । यत उभयोपादानत्वस्य श्रुत्यादिशास्त्रसिद्धत्वात्, अथापि तत्र इयान् विवेकोऽवधेयः । परमात्मा हि विवर्तमानतयोपादानम्, माया च परिणममानतया । वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामः, तदसमसत्ताको विवर्त इति वा, कारणसलक्षणोऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्त इति वा, कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्य-

तिरेकेण दुर्वचं कार्ये विवर्त इति वा विवर्तपरिणामयोर्विवेकः । तथा च परिणामित्वाख्यमुपादानत्वं मायारूपविशेषणांश एव योग्यतया पर्यवस्यति । विशेष्यभूतस्य परमात्मनो निर्विकारत्वप्रतिपादनेन तदंशे तस्य बाधात्, परिशेषात् तदविकारत्वानुपमर्दकं विवर्ताख्यमेवोपादानत्वमभ्युपेयम् । एवं हि श्रुतिप्रतिपादितमात्मनोऽप्युपादानत्वं समर्थितं स्यात् । नन्वेवं तर्हि ब्रह्मसूत्रे 'आत्मकृतेः परिणामात्' ( १ । ४ । २६ ) इति व्यासेन कथमुक्तम् ? इति चेत् शृणु भो ! तद्रहस्यम् । जगत्सत्यत्वाभिनिविष्टबुद्धीनां सांसारिकाणां चेतो झटित्येव विवर्तवादे प्रवेष्टुं नार्हतीत्यनुसंधाय ताननुग्रहीतुं परिणामवादः स्थूलारुन्धतीन्यायेन वैयासिकसूत्रेषु पूर्वपक्षतयोपनिबद्धः इति स्पष्टमद्वैतिनामाकरग्रन्थेषु । इति । अत एव 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' ( ब्र. सू. २ । १ । २६ ) इत्यधिकरणे ब्रह्मणो जगदुपादनत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माभावो वा, एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्येत इति पूर्वपक्षं कृत्वा 'आत्मनि चैवं विचित्राश्च हि' ( ब्र. सू. २ । १ । २८ ) इति सूत्रेण 'यथा हि स्वप्नदृशि द्रष्टुः स्वरूपानुपमर्देनैव सर्वथा परिणामाभावेऽपि नानाविधा रथाद्याकाराः सृष्टयः प्रादुर्भवन्ति, तद्वत् ब्रह्मण्यपि स्वरूपानुपमर्देन नानाविधं देवतिर्यङ्मनुष्यादिभेदभिन्नं स्थावरजंगमात्मकं जगत् प्रादुर्भविष्यति' इति विवर्तवादमवलम्ब्यैव ब्रह्मणि जगदुपादानकारणत्वं प्रतिष्ठापयता भगवता बादरायणाचार्येण विवर्तवादः स्पष्टं सिद्धान्तितः । कथमन्यथा अस्य सूत्रस्योपपत्तिः स्यादिति सुधियो विदाङ्कुर्वन्त्वेव । तथा च मायाब्रह्मणो रुभयोः सादृशोपादानकारणत्वेऽभ्युपगते सति पूर्वोक्तोभयविधश्रुतिः, वियदादि-

सृष्टौ सत्ताजाड्यरूपोभयविधधर्मानुगतिश्चोपपद्येते। अस्ति च विवर्तपरिणामयोः स्वात्मनि कार्यजनिहेतुत्वं स्वाभिन्नकार्यजन्महेतुत्वं चोपादानस्य साधारणं लक्षणम्। विद्यते हि प्रपञ्चस्य सद्रूपेण ब्रह्मणा विवर्तमानेन, जडया मायया परिणामिन्या चाभेदः, 'सन् घटः' 'जडो घटः' इति सामानाधिकरण्यानुभवात्। न च 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र. सू. २। १। १४) इति सूत्रे 'अनन्यत्वंऽव्यतिरेकेणाभावः' (शांकरभाष्य) 'न खल्वनन्यत्वमित्यभेदं ब्रूमः किन्तु भेदं व्यासेधामः' (भामती टीका) इति भाष्यभामतीवचनाभ्यां प्रपञ्चस्य ब्रह्माभेदनिषेधात् अभेदाभ्युपगमेऽपसिद्धान्त इति वाच्यम्। तयो ब्रह्मरूपधर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्तिरजतयोरिव प्रातिभासिकाभेदाभ्युपगमेऽपि विरोधाभावात्। इत्येवं श्रुत्याद्यनुसारिण्या व्यवस्थयैवविरोध परिहारसम्भवे न तदस्वारस्यापादको ब्रह्मस्वरूपव्याघातकोऽविकृतब्रह्मपरिणामवादः कथमपि कल्पनीयः। ब्रह्मपरिणामवादे हि परिणामपरिणामिनोः वास्तवाभेदस्वीकारेण ब्रह्मणः परिणामित्वे परिणामजन्माद्योऽपि ब्रह्मणि प्रसज्येरन्, तथा च जन्ममरणादिविकारशून्यत्वलक्षणं श्रुतिसिद्धकूटस्थत्वं तस्य भज्येत। तस्मात्तस्य परिणामित्वं कथमपि न सम्भवतीति सिद्धम्।

एवं च सति ब्रह्मणो विवर्तोपादानतास्वीकारे द्वैतरूपविकारमिथ्यात्वप्रतिपादिन्यो वाचारम्भणश्रुत्याद्याः श्रुतयः, 'ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम्। विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः॥' (श्रीमद्भागवत ११। १६। ३४) 'नश्वरं गृह्यमाणं च विद्धि मायामनोमयम्।' (श्रीमद्भा. ११। ७। ७) 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तदेवार्थ-

स्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥' (श्रीविष्णु पु. १ । २ । ६) इत्याद्याः पुराणवादाश्च संगच्छेरन् ।

ननु—यदि माया अज्ञानं स्यात् तथा च **'मायिनन्तु महेश्वरम्'** (श्वे. ४ । १०) इत्यादिश्रुतिप्रतिपाद्यस्य मायिनः परमेश्वरस्याप्यज्ञानित्व-प्रसङ्गेन तस्य सर्वज्ञत्वनिरवद्यत्वादेः श्रुत्याद्युक्तस्यालौकिकसद्गुणस्यानुपपत्ति-र्जीवेश्वरयोरविशेषापत्तिश्च महद् दूषणं स्याताम् इति । तदसत् । ईश्वरस्वरूपानव-बोधात् । विशुद्धसत्त्वप्रधानायां मायायां प्रतिबिम्बमूलं हि ईश्वरचैतन्यम्, अन्तःकरणेषु तु प्रतिबिम्बितं जीवचैतन्यम् । **'कार्योपाधिरयं जीवः कारणो-पाधिरीश्वरः'** इति श्रुतेः । अत एव ईश्वरे सार्वज्ञ्यमैश्वर्यादिकञ्च मायो-पाधिनिमित्तमेव । मायोपाधेर्व्यापकतया तदुपाधिकस्येश्वरस्यापि व्यापकत्वम् । अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकस्य जीवस्य परिच्छिन्नत्वम् । वशीकृत-मायोपाधिकत्वात् न तस्य जीववदज्ञानित्वप्रसङ्गः, मलिनसत्त्वोपाध्यभावाच्च नावद्यत्वप्रसङ्गोऽपि । एतेन जीवेशयोरविशेषापत्तिश्च निरस्ता, उपाधिगत-नैर्मल्यतदभावाभ्यां दर्पणादिप्रतिबिम्बितमुखयोरिव वशीकृतोपाधित्वतदभावा-भ्यां वा जीवेशयोरज्ञत्वसार्वज्ञ्यादिरूपविशेषसम्भवात् । इति ।

## मायास्वरूपविचारः ।

माया च भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी ब्रह्मज्ञाननिवर्त्याऽनिर्वाच्याऽपि अनादिः । सा च ब्रह्मचैतन्यान्न वस्तुतो भिन्ना, ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्व-प्रतिपादकश्रुतिविरोधेन तस्यास्ततो भेदासम्भवात् । नाप्यभिन्ना, चैतन्यजडयो-रैक्यायोगात् । नाऽपि भिन्नाभिन्ना, विरोधेनासम्भवात् । एवं न तावन्माया सती, अद्वैतश्रुतिविरोधात्, नाऽप्यसती, भूतप्रकृतित्वानुपपत्तेः । नापि सदसती,

सत्त्वासत्त्वयोरेकत्र विरोधात् । एवं माया न सावयवा, तस्याः सादित्वप्रसङ्गेन तत्प्रतिबिम्बभूतेश्वरस्यापि सादित्वप्रसङ्गात्, मायायाः सादित्वे तत्प्रकृतित्वेन मायान्तरापेक्षायामनवस्थाप्रसङ्गाच्च । नापि निरवयवा प्रकृतित्वाभावप्रसङ्गात् सावयवपदार्थानामेव लोके प्रकृतित्वदर्शनात् । नाप्युभयरूपा, सावयवत्वनिरवयवत्वयोरेकत्र विरोधात् । तस्मात् सर्वप्रकारेण निर्वक्तुमशक्यतया माया अनिर्वाच्यैव । सा चाघटघटनापटीयसी, तामाश्रित्यैव भगवान् जगत्सर्जनादिकं कर्तुं शक्नोति । अन्यथा 'आप्तकामस्य का स्पृहा' इति न्यायेन परिपूर्णो निष्क्रियः परमात्मा जगत्सर्जनादौ कथं वा केन हेतुना वा प्रवर्तेत ? एतदभिसंधायैव श्रीमद्भागवते एकादशस्कन्धे देवा भगवन्तमस्तुवन्–' त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः । नैतैर्भवानजित ! कर्मभिरज्यते वै यत् स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥' ( ११ । ६ । ७ ) इति । द्वितीयस्कन्धे श्रीशुकदेवोऽपि प्रत्यपादयत्–'आत्ममायामृते राजन् ! परस्यानुभवात्मनः । न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसा ॥ बहुरूप इवाभाति मायया बहुरूपया ।' ( २ । ९ ।१–२ ) इति । एवं तत्रैव द्वितीयस्कन्धे परमेष्ठिनं पद्मभवं प्रबोधयितुं–अन्यथाभावेन भासमानो मिथ्याभूतः कश्चित् दुर्घटकारित्वलक्षणः तत्त्वानुभवावसानको मायाशब्दार्थो भगवतैव स्वयमुपदिष्टः– ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चाऽऽत्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥' ( २ । १० । ३३ ) इति । अस्यायमर्थः– प्रतीयमानस्यार्थस्याभावेऽपि यत्प्रतीयते, स्वाधिकरणे वर्तमानाभावप्रतियोगीतियावत्, तन्मायापदार्थं इति विद्यात्–जानीयात्। तस्य चाऽऽत्मैवावच्छिन्नानवच्छिन्नरूपेणाधिष्ठानमन्यस्य सर्वस्य कल्पितत्वादित्याशयेनाऽऽत्मन इत्युक्तम् । ननु–

स्वप्रकाशस्याऽऽत्मनः सद्भावनात्कथं तत्राऽऽरोप इति शङ्कायामाह—न प्रतीयेत चाऽऽत्मनीति । पूर्णानन्दस्वप्रकाशरूपात्मनि न प्रतीयते इति यत्तदपि मायेत्यर्थः । तथा च स्वप्रकाशेऽप्यप्रकाशस्य कल्पितत्वात्तन्मूलकोऽन्यस्य सर्वस्याऽऽरोपः स्वरूपाप्रकाश एव । जगदुपादनमज्ञानं मायेति भावः । अर्थाभावेऽपि प्रतीयमानत्वे दृष्टान्तमाह—यथा भास इति । यथा शुक्त्यादौ रूप्याद्याभास इत्यर्थः, प्रकाशस्वरूपे तद्भानत्वेन कल्प्यमानत्वे दृष्टान्तमाह—यथा तम इति । यथा मध्याह्नकालिकस्फीतसूर्यालोके तद्भावतयोलूकैः कल्प्यमानं तम इत्यर्थः । एवं 'मयश्च शम्बरश्चैव महामायाविनावुभौ। पर्जन्यवारुणीमाये व्यधत्ताम् ॥' इत्यादिना हरिवंशपुराणे पर्जन्यवारुणाभ्यां मन्त्रविशेषविशिष्टाभ्यां जनिते मिथ्याभूतेऽर्थे, तथा 'मायामृगं दयितयेप्सितमन्वधावत्' ( श्रीमद्भा. ११ । ५ । ३४ ) इत्यत्र मिथ्याभूतमृगे मायाशब्दप्रयोगः कृतः तमेवार्थं द्रढयति । अत एव 'यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम् ।' इति सांख्यवृद्धैः दृश्यमात्रे मिथ्यात्वमभ्युपेत्यैव मायात्वं व्यवहृतम् । तस्मात् अनिर्वचनीयं मिथ्याभूतं तत्त्वज्ञाननिवर्त्यमेव श्रुत्यादिशास्त्रप्रतिपादितं मायास्वरूपमिति सिद्धम् । एतावता मायावादः श्रुतिस्मृतिपुराणादिशास्त्रैरेव सिद्धो न केनापि व्यक्तिविशेषेण शास्त्रविरुद्धः कल्पितः इत्यपि स्पष्टं सिद्ध्यति । एतेन ये कुतर्कव्यसनिनः परेषां मिथ्याऽऽक्षेपमात्रेण स्वमतप्रचारनिपुणाः पाखण्डाः अद्वैतब्रह्मवादिनो महानुभावान् 'इमे मायावादिनः' इत्युक्त्वा कटाक्षयन्ति, ते च खल्वर्धचन्द्रप्रयोगेण निरस्ता वेदितव्याः । मायाशब्दतदर्थविशेषाभ्युपगममात्रेण यदि अद्वैतिनः तैः कटाक्षयितव्याः स्युः, तर्हि तुल्यन्यायेन पूर्वोक्तानि [illegible]णि

श्रुत्यादीनि शास्त्राण्यपि कथं न कटाक्षयितव्यानि भवेयुः ? इति त एव प्रष्टव्याः। वस्तुतो ये मायातत्कार्यमनर्थबहुलं द्वैतप्रपञ्चं सत्यतयाऽनिवर्त्यतया चाभ्युपगच्छन्ति, त एव मायावादितया अद्वैतब्रह्मविमुखतया च कटाक्षविषया भवितुमर्हन्ति, नाद्वैतिनोऽनन्तपरिपूर्णब्रह्मानन्दरसज्ञाः इत्यलं बालबुद्धीनां दुराग्रहशीलानां शिक्षणेन।

## जगन्मिथ्यात्वविचारः ।

ननु—जगत् मिथ्या कथं स्यात् ? तर्हि तत्सत्यं कथं भवेत् ? दृश्यते अत एव सत्यमुच्यते । नन्वेवं स्वप्नप्रपञ्चोऽपि दृश्यते, सोऽपि तर्हि सत्यः स्यात् ? । सत्यम्, परन्तु अस्ति तयोर्वैषम्यं बाध्यत्वाबाध्यत्वाभ्याम् । मैवं, जगदपि बाध्यते । 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे. १ । ८) 'अतोऽन्यदार्तम्' (बृ. ३ । ४) इत्याद्याः श्रुतयः दृश्यत्वजडत्वपरिच्छिन्नत्वादियुक्तयोऽपि जगतो बाध्यत्वमाहुः । 'अविद्यमानोऽप्यवभासते यो वैकारिकः' (भा. ११ । २८ । २२) 'किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् । वाचोदितं तदनृतं मनसा ध्यातमेव च ॥' (भा. ११ । २८ । ४) 'असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा । गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥' (भा. ११ । १३ । २१) इत्यादीनि तव मते परमप्रमाणभूतस्य श्रीमद्भागवतस्य भूयांसि वचांस्यपि सर्वस्य द्वैतप्रपञ्चरूपस्य जगतो मिथ्यात्वमेव प्रतिपादयन्ति । परन्तु त्वं किल तद्विरुद्धं जगतः पारमार्थिकं सत्यत्वमेवाङ्गीकरोषीत्यतिसाहसिकत्वं तव प्रतिभाति विदुषाम् । 'अविद्यमानोऽप्यवभासते' इत्यनेन रज्ज्वामविद्यमानस्य सर्पस्यावभासवत् ब्रह्मणि परमात्मनि वस्तुतोऽविद्यमानस्य द्वैतप्रपञ्चस्य माययाऽवभासत्वरूपं स्वात्यन्ताभावाधिकरणे स्वप्रती-

यमानत्वलक्षणं मिथ्यात्वं स्पष्टं निरूप्यते। एवं द्वैतं जगत्–अवस्तु, ब्रह्मवत् वस्तुभूतं पारमार्थिकं नास्ति इत्यर्थः। अत एव तदनृतं मिथ्यैवास्ति। आत्मनोऽन्येषां भावानां–पदार्थानां सत्त्वं नास्ति, इत्यादिकं केनापि प्रकारेणान्यथयितुमयोग्यं वर्णनं जगत्सत्यत्ववादे कथमानुकूल्यं भजेत? इति त्वयैव भो! अपक्षपातया धिया विचार्यताम्। सति चैवं स्वरूपेण मिथ्याभूतमपीदं जगत् चिदात्मना सत्यमेवेत्यभिप्रायेण प्रामाणिकशास्त्रेषु क्वचित् जगतः सत्यत्वं कथ्यमानं प्राप्ताप्राप्तविवेकन्यायेन चिदात्मन एव सत्यत्वे पर्यवस्यति, न नामरूपस्य बाध्यस्य जगत इत्यपि विज्ञेयम्। एतेन ब्रह्मपरिणामत्वात् ब्रह्मरूपमेवेदं जगत् सत्यमेव नानृतम्, मृद्घटयोरिव ब्रह्मजगतोरपि परमार्थतोऽत्यन्ताभेद एवेति 'सर्वं खल्विदं ब्रह्म' (छां० ३। १४। १) 'वासुदेवः सर्वमिति' (गी. ७। १९) इत्यादिकं सामानाधिकरण्यं मुख्यमेव न तु बाधायामिति प्रत्युक्तम्। एकरसस्याविकृतस्य पूर्णविज्ञानसुखघनस्य ब्रह्मणो नानारसविकृतद्वैतप्रपञ्चपरिणामित्वासम्भवात्, एकदेशेन तस्य परिणामे सावयवत्वानित्यत्वाद्यापत्तेः, सर्वात्मना च स्वरूपोपमर्दप्रसङ्गाच्चेत्यादिकमुक्तप्रायमेवेत्यलं पिष्टपेषणेन।

अपि च द्वैतस्य जगतः सत्यत्वेऽद्वैतानुपपत्तिः, वैराग्यानुपपत्तिश्च स्यात्, द्वैतसंसारे दृढतरमिथ्यात्वभावनाया एव वैराग्योत्पादकत्वात्, न च तत्सत्यत्वनिश्चयस्य किञ्चिदपि फलम्; प्रत्युत तेन तत्र रागबाहुल्यसम्भवेनाधःपातरूपो महान् अनर्थ एव स्यात्। मिथ्यात्वनिश्चयस्य मुक्तिसाधकानन्तानन्दपूर्णाभयाद्वैतसाक्षात्कार एव मुख्यं फलम्। न च जगतः सत्यत्वमनधिगतं मनुजानां येन

तत्प्रतिपादनाय श्रुत्यादिशास्त्रस्य प्रयत्नः स्यात् । यच्च संदिग्धं सप्रयोजनं तदेव प्रेक्षावत्प्रतिपित्सागोचरः । न च जगतः सत्यत्वे जीवानां कश्चित् संदेहोऽस्ति, निश्चयेन तत्रानुरागपूर्वकं प्रवृत्तिदर्शनात् । तस्मात् प्रत्यक्षानुमानश्रुतिस्मृतिपुराणादिभिर्विनश्वरत्वेन दुःखपूर्णत्वेन चाधिगतस्य मिथ्याभूतस्य रागद्वेषादिसंकुलस्य द्वैतस्य संसारस्य हानमेव विवेकिभिश्चिकीर्ष्यते । अत एव सांख्यकारिकायां 'दुःखत्रयाभिघाताज्जिज्ञासा' इत्यादिकमुक्तम् । योगसूत्रे च 'परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।' (२ । १५) इत्यभिहितम् । इत्येवं जडस्य दृश्यस्य परिच्छिन्नस्य जन्मजरामृतिरोगशोकाद्यनेकानर्थहेतोः प्रपञ्चस्य पारमार्थिकसत्यत्वं श्रुतिस्मृतिपुराणन्यायैर्निवारितमपि केन हेतुनोक्तवादिभिरभ्युपगम्यते इति न शक्यते विद्वद्भिर्ज्ञातुम् । विशुद्धेन ब्रह्मणाऽत्यन्ताशुद्धस्य जगतः पारमार्थिकं मुख्यमभेदं वदन्तोऽविकृतब्रह्मपरिणामवादिनः 'पुत्रस्य त्वमातु र्वन्ध्यात्वकथनमिव' व्याहतार्थकत्वमपि नानुसंदधते इत्यपि महदाश्चर्यम् । इति ।

तदित्थं तत्रभवतां महेश्वरपरावताराणां वेदोपनिषदर्थतदाभासक्षीरनीरविवेचनचतुरशिरोमणीनां परमहंसधुरंधराणामाचार्यप्रवराणां श्रीमच्छङ्करभगवत्पादानां प्रस्थानत्रयीभाष्यादौ विस्तरतः सुनिरूपितः–'अर्धश्लोकेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥' इत्येवमतिसंक्षेपेण बोधितो यथार्थः शास्त्रसिद्धान्तोऽस्माभिः परमतसमालोचनप्रसङ्गेन समुपपादितः, मन्त्रार्थव्याख्यानेन चात्र समुपपादयिष्यते । इत्यलम् ।

## उपासनाविचारः ।

ननु—कथं सविशेषस्यैव सगुणस्य ब्रह्मण उपासनं भवति, न तु निर्विशेषस्य, इति चेत्, अत्रोच्यते । उपासनं हि सर्वत्रारोपितगुणविशिष्टविषयं भवति । आरोपितगुणविशिष्टं सविशेषं सगुणमेव ब्रह्म । उपासनं नाम वस्तुस्वरूपानपेक्षः पुरुषेच्छामात्रतन्त्रः सजातीयमानसप्रत्ययप्रवाह इत्युच्यते । निर्विशेषस्य त्रिकालाबाध्यस्य समन्वयसूत्रे 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।' ( १ । ५ ) इति केनश्रुतिमनुरुध्य भगवत्पादैरेवोपास्यत्वस्य निषिद्धत्वात् । यत्सर्वेश्वरगानाम-विषयं येन च सर्वाणि करणानि भास्यन्ते, तदेव निर्विशेषं निरतिशयमात्मस्वरूपं पूर्णाद्वैतं भूमाख्यं बृहत्वाद् ब्रह्मेति विद्धि=जानीहि त्वं, अतिरिक्तं मा विद्धि, ततोऽतिरिक्तज्ञानाय यत्नो न कर्तव्य इति यत्नोपरम एव लक्ष्यते । नेदं येषं ब्रह्म यदिदमुपाधिभेदभिन्नमारोपितगुणविशेषविशिष्टं सविशेषमनात्मेश्वरादुपासते इति नेदमित्युपास्यप्रतिषेधाच्च इत्येवं भगवत्पादादिभिराचार्यैः भाष्यादौ पूर्वोक्ता व्याख्याता केनश्रुतिः तदेव द्रढयति । सति चैवमुपासनमतत्त्वविषयं ज्ञानञ्च तत्त्वविषयमिति ज्ञानोपासनयोर्भिन्नविषयत्वमभ्युपगच्छन्ति वृद्धाः । अन्यथा तयोरेकविषयत्वे साक्षात्कारफलसाम्येन तदैक्यापत्तेः । तथा च 'आत्मेत्येवोपासीत' इत्युत्तरतापनीयादौ श्रुतायाः निर्विशेषब्रह्माभिन्नात्मोपास्तेः 'अनेन ह्येतत्सर्वं वेद' इत्युपसंहारानुरोधेन ज्ञानपरत्वं मन्यन्ते शिष्टाः । यदाहुः—अद्वैतसिद्धौ केवलाद्वैतसिद्धान्तोद्धारधुरीणाः श्रीमधुसूदनस्वामिपादाः—'उत्तरतापनीयादौ श्रुतोपास्तेर्ज्ञानपरत्वात्, उपास्तेर्विशिष्टविषयत्वेन निर्विशेषब्रह्मविषयत्वाभावात् ।' ( द्वितीयपरिच्छेदे

ब्रह्मनिर्गुणत्वोपपत्तौ ) इति । यदप्युक्तं—मधुसूदनस्वामिभिस्तत्रैव—'सगुणोपास्तेर्विशिष्टविषयत्वेन भ्रमत्वेऽपि निर्गुणाद्युपास्तेर्निर्विशेषविषयतया भ्रमत्वाभावादि'ति । तत्समाहितं लघुचन्द्रिकाया तट्टीकाकारैर्ब्रह्मानन्दस्वामिभिः—'अभ्युपेत्येदमुक्तम्, उत्तरतापनीयादौ श्रुतोपास्तेर्ज्ञानपरत्वात्, उपास्तेर्विशिष्टविषयत्वेन निर्विशेषविषयत्वाभावादिति पूर्वमुक्त्वादि'ति ।

अत एव विषयतः फलतः स्वरूपतश्च सुदूरमेते त्रिभिद्येते ज्ञानमुपासनञ्च । ज्ञानं हि सर्वत्र प्रमाणमात्रादेवोपजायते, जायमानञ्च तत् पुरुषप्रयत्नबलान्न निवारयितुं नाऽप्यन्यथाकर्तुञ्च शक्यं भवति । उपासनन्तु तद्विपरीतम् । तथाहि—उपासनं किल 'उपासीत' (बृ. १ । ४ । ८) 'स क्रतुं कुर्वीत' (छा. ३ । १४ । १) इत्यादिनोपदिशच्छास्त्रं पुरुषप्रयत्नसाध्यतयैव कर्मवदुपदिशति । सति चैवमुपासनमितिशब्दः समानविषयमेवाविच्छिन्नं प्रत्ययप्रवाहमभिदधानं स्वार्थस्य पुरुषकृतिसाध्यत्वं द्रढयति । तथा ज्ञानं यथाभूतमेव वस्तुस्वरूपं गोचरयति । उपासनन्तु 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति ।' (छा. ३ । १४ । १) इत्यादिना तत्क्रतुन्यायोदाहरणपूर्वकं भावनाधीनं भाविफलकमभिदधाना श्रुतिः तत्र न वस्तुसद्भावनियम इति दर्शयति । भगवद्गीतास्वपि—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।' (४ । ११) इत्यनेन भगवत उपासकभावनानुसारित्वं स्मर्यमाणमुपासनस्य यथाभूतवस्तुविषयकत्वे सति नोपपद्यते । यतः पुरुषबुद्धिकल्पनाया निरङ्कुशत्वान्निर्विकारत्वाच्च परमात्मनः । अत एव भगवान् सूत्रकारोऽपि—'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं ।' (ब्र. सू. १ । २ । ७ । १) इति सूत्रे शाण्डिल्य-

विधायामुपास्यतया श्रुतौ ऋयत्पहृदयस्थानान्तर्गतत्वाणीयस्त्वरूपो गुणो व्यापके परमात्मनि नोपपद्येते, इत्याक्षेपस्य 'उपास्यत्वान्नायं दोषः प्रसरति' इति परिहारं ब्रुवन् उपास्तिविषयस्य प्रकारीभूतस्य धर्मस्य विशेष्येऽविद्यमानत्वमेव निरूपयति। तस्मात् ज्ञानमुपासनञ्च विषयतोऽत्यन्तविभिन्नमेवेति सिद्धम्।

एव ज्ञानस्य सद्य एवाविद्यानिवृत्त्या तन्मूलकद्वैतसंसारनिवृत्तौ अत्रैव एकरसब्रह्मभाव एव फलम्। 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३। २। ९) 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे' (बृ. उ. १। ४। १०) 'विद्वान्नामरूपाद्विमुक्तः' 'अत्र ब्रह्म समश्नुते' (बृ. ४। ४। ७) इत्याद्याः श्रुतयः 'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति॥' इत्याद्याः स्मृतयश्च ज्ञानसमकालमेव सद्यो निरतिशयं ब्रह्मभावफलं दर्शयन्ति। स्वरूपस्य निर्विशेषतया ज्ञानफले ब्रह्मभावे कस्यचिदवान्तरातिशयस्य कल्पयितुमशक्यत्वात्। उपासनस्य तु कर्मण इव 'एतमितः प्रेत्याभिसंभवितास्मि' (छा. ३। १४। ४) 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत।' इत्यादीनि वचांसि प्रायणोत्तरकाले देशान्तरे संसारान्तर्गतत्वेन तारतम्यापन्नं किञ्चिदतिशयं फलं प्रदर्शयन्ति। भगवान् ब्रह्मसूत्रकारोऽपि—'आप्रायणात्तत्रापि हि दृष्टम्।' (४। १। १२) इति मरणपर्यन्तमविच्छेदेनोपासनं कर्तव्यमिति व्यवस्थापयन् तदुत्तरकालेन तत्फलप्राप्तिमभिप्रैति। तस्मात् ज्ञानं फलतोऽप्यत्यन्तविलक्षणमुपासनात् इति सिद्धम्।

इदमत्राहुर्विवेक्यम्। निर्गुणब्रह्मतत्त्वस्योपासनायामानन्दादेर्विधेयस्याऽऽनन्दादेर्निषेध्यस्य गुणसमुदायस्य 'आनन्दादयः प्रधा-

नस्य' (ब्र. सू. ३ । ३ । ११) 'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्।' (ब्र. सू. ३ । ३ । ३३) इत्याभ्याम्अधिकरणाभ्यामभिहितस्योपसंहारस्य विधीयमानत्वात् क्वचित् केचित् गुणविशिष्टं तदिति, मायिकसत्त्वादिगुणवर्जनात् हिरण्यश्मश्रुत्वादिमूर्तीनामनभिधानाच्च निर्गुणमपि तदिति च व्यवहरन्ति। तथा चाभिप्रायभेदात् तद्विषयकोभयविधव्यवहारः 'इदमग्रे सदासीत्' 'असदासीत्' इतिवत् उपपद्यत एव। अत एवोक्तमद्वैतसिद्धौ मधुसूदनस्वामिपादैः—'व्यतिहारसूत्रे 'तद्योऽहं सोऽसौ योऽसौ सोऽहमि' त्युक्तस्य जीवे ईश्वराभेदध्यानस्येश्वरे वा जीवाभेदध्यानस्योपासनाप्रकरणपठितश्रुत्युक्तस्य जीवेश्वराभेदः सगुणोपासनरूपेणाऽपि दृढीकर्तव्यः इत्येवंपरतया ऐक्यस्योपासनाविषयत्वेऽपि न सत्यकामत्वादिवदतात्त्विकत्वम्।' 'सगुणप्रकरणस्थैक्यवाक्यजन्यैक्यज्ञानस्य सगुणोपास्त्यन्तर्गततया विशिष्टविषयत्वात्, स्वतन्त्रैक्यजन्यैक्यज्ञानस्य निर्विशेषविषयत्वेन विशिष्टविषयसगुणोपास्तिवैषम्यात्।' इति। व्याख्यातञ्चेदं लघुचन्द्रिकायां—'सगुणप्रकरणस्थेति—'योऽहं सोऽसावित्यादौ यादिः। विशिष्टविषयत्वात्=जीवत्वेश्वरत्वविशिष्टयोस्तादात्म्यविषयकत्वात्। इति (प्रत्यनिर्गुणत्वोपपत्तौ)। विद्यते श्रुत्वरमीमांसायां—'व्यतिहारो विशिंषन्ति हीतरवत्।' (ब्र. सू. ३ । ३ । ३७) इति व्यतिहारसूत्रम्। जीवेशयोर्मिथो विशेषणविशेष्यभावो व्यतिहारः। स चात्रोपासनार्थमुपदिश्यते। इतरवत्, यथा इतरे सत्यसत्त्वादयो गुणा उपासनार्थमुपदिश्यन्ते, तद्वत्। तथा हि विशिंषन्ति समाम्नातारः—'त्वमहमस्म्यहं च त्वमसि' इत्युभयोच्चारणेन। तच्च विशेषणं द्विरूपायां मनो कर्तव्यतायामर्थ-

वद्भवति । अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात् । अतो मति र्द्विरूपैव कर्तव्या । ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने परमेश्वरस्य संसारात्मत्वापत्तेः निकर्षः प्रसज्येतेति चेत् नैष दोषः । ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात् । उपासकस्य परमेश्वरेण सह चैतन्यांशमादाय यद्वास्तवमैक्यमस्ति, तदेव ह्यहंब्रह्मोपासनेषु व्यतिहारेण ध्यातव्यमिष्यते । परमेश्वरगतानच्छेदेन जीवगतानां संसारित्वादीनां ध्यानं तु नेष्यते, येन परमेश्वरस्य निकर्ष आपादितस्स्यात् । अपि तु परमेश्वरगता अपहतपाप्मत्वादय एव उपासके ध्येया इष्यन्ते, ते तूत्कर्षापादका एव । वचनप्रामाण्यान्नैकरूपा मतिः कर्तव्याऽपि तु द्विरूपा, तस्या अभेदाभिमानप्रयोजनकत्वात् फलतस्तयोरैक्यमेव दृढो-भवति । इति । विधेयैर्निषेध्यैश्च तैर्गुणैरुपलक्षितमखण्डैकरसं विध्वस्तनिखिलद्वैतप्रपञ्चमद्वैतानन्दपूर्णं प्रत्यगभिन्नं ब्रह्म एवाहमस्मि इत्येवं श्रद्धानिश्चयाभ्यां क्रियमाणं निदिध्यासनलक्षणमहंग्रहोपासनन्तु निर्विशेषब्रह्मविषयतया साक्षात् ब्रह्मज्ञानायत एव । अत एवाहुर्विद्यारण्यस्वामिपादाः—'ब्रह्मज्ञानायते साक्षान्निर्गुणोपासनं शनैः ।' 'सिद्धायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः ।' (ध्यानदीपे—२२ । २३) इति । विस्तारस्तु गुरुमुखादाकरग्रन्थेभ्यश्चावगन्तव्य इत्यलं पल्लवितेन ।

## जगद्भावनाविचारः ।

ननु—अद्वैतिना—'मिथ्या असारः संसारः, सर्वथैव हेयः, कारागारसदृशो बन्धनस्थानम्, जीवनं दुःखमयं क्षणभङ्गुरञ्च, सर्वे भावाः चञ्चलविद्युदिवत् क्षणिका निस्साराश्च, इत्याद्या भावना हृदयस्योल्लासं हरन्ति, नैराश्यञ्च जनयन्ति । एतत्प्रभावेणैव क्षमादयासन्तोषप्रभृतयोऽप्युदात्तगुणाः दैन्यभयालस्यादिरूपेण

नस्य' (ब्र. सू. ३ । ३ । ११) 'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ।' (ब्र. सू. ३ । ३ । ३३) इत्याभ्यामधिकरणाभ्यामभिहितस्योपसंहारस्य विधीयमानत्वात् । क्वचित् केचित् गुणविशिष्टं तदिति, मायिकसत्त्वादिगुणवर्जनात्, हिरण्यश्मश्रुसूर्यादिमूर्तीनामनभिधानाच्च निर्गुणमपि तदिति च व्यवहरन्ति । तथा चाभिप्रायभेदात् तद्विषयकोभयविधव्यवहारः 'इदमग्रे सदासीत्' 'असदासीत्' इतिवत् सङ्गच्छत एव । अत एवोक्तमद्वैतसिद्धौ मधुसूदनस्वामिपादैः—' व्यतिहारसूत्रे 'तद्योऽहं सोऽसौ योऽसौ सोऽहमि' त्युक्तस्य जीवे ईश्वराभेदध्यानस्येश्वरे वा जीवाभेदध्यानस्योपासनाप्रकरणपठितश्रुत्युक्तस्य जीवेश्वराभेदः सगुणोपासनरूपेणाऽपि दृढीकर्तव्यः इत्येवंपरतया ऐक्यस्योपासनाविषयत्वेऽपि न सत्यकामत्वादिवदतात्त्विकत्वम् ।' 'सगुणप्रकरणस्थैक्यवाक्यजन्यैक्यज्ञानस्य सगुणोपास्त्यन्तर्गततया विशिष्टविषयत्वात्, स्वतन्त्रैक्यजन्यैक्यज्ञानस्य निर्विशेषविषयत्वेन विशिष्टविषयसगुणोपास्तिवैषम्यात् ।' इति । व्याख्यातश्चेदं लघुचन्द्रिकायां—' सगुणप्रकरणस्थेति—' योऽहं सोऽसावित्यादीत्यादिः । विशिष्टविषयत्वात्=जीवत्वेश्वरत्वविशिष्टयोस्तादात्म्यविषयकत्वात् । इति (ब्रह्मनिर्गुणत्वोपपत्तौ) । विवृते सूत्तरमीमांसायां—' व्यतिहारो विशिंषन्ति हीतरवत् ।' (ब्र. सू. ३ । ३ । ३७) इति व्यतिहारसूत्रम् । जीवेशयोर्मिथो विशेषणविशेष्यभावो व्यतिहारः । स चात्रोपासनार्थमुपदिश्यते । इतरवत्, यथा इतरे सर्वात्मत्वादयो गुणा उपासनार्थमुपदिश्यन्ते, तद्वत् । तथा हि विशिंषन्ति समाम्नातारः—' त्वमहमस्म्यहं च त्वमसि ' इत्युभयोच्चारणेन । तच्च विशेषणं द्विरूपायां मतौ कर्तव्यतायामर्थ-

बद्ध्यति। अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्। अतो मति द्विरूपैव कर्तव्या। ननु स्वाम्नानस्यार्थविशेषे परिकल्प्यमाने परमेश्वरस्य संसारित्वापत्त्या निकर्षः प्रसज्येतेति चेत् नैष दोषः। ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। उपासकस्य परमेश्वरेण सह चैतन्यांशमादाय यद्वास्तवमैक्यमस्ति, तदेव ह्यहंग्रहोपासनेषु व्यतिहारेण ध्यातव्यमिष्यते। परमेश्वरत्वावच्छेदेन जीवगतानां संसारित्वादीनां ध्यानं तु नेष्यते, येन परमेश्वरस्य निकर्ष आपादितस्स्यात्। अपि तु परमेश्वरगता अपहतपाप्मत्वादय एव उपासके ध्येया इष्यन्ते, ते तूत्कर्षापादका एव। वचनप्रामाण्यान्नैकरूपा मतिः कर्तव्या- अपि तु द्विरूपा, तस्या अभेदाभिमानप्रयोजनकत्वात् फलनस्तयोरैक्यमेव दृढीभवति। इति। विधेयैर्निषेध्यैश्च तैर्गुणैरुपलक्षितमखण्डैकरसं विध्वस्तनिखिलद्वैतप्रपञ्चमद्वैतानन्दपूर्णं प्रत्यगभिन्नं ब्रह्म एवाहमस्मि इत्येवं श्रद्धानिश्चयाभ्यां क्रियमाणं निदिध्यासनलक्षणमहंग्रहोपासनन्तु निर्विशेषब्रह्मविषयतया साक्षात् ब्रह्मज्ञानायत एव। अत एवाहुर्विद्यारण्यस्वामिपादाः—'ब्रह्मज्ञानायते साक्षान्निर्गुणोपासनं शनैः।' 'विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः।' (ध्यानदीपे—२२। २३) इति। विस्तरस्तु गुरुमुखादाकरग्रन्थेभ्यश्चावगन्तव्य इत्यलं पल्लवितेन।

## जगद्भावनाविचारः।

ननु—अद्वैतिनां—'मिथ्या अपार संसारः, सर्वथैव हेयः, कारागारसदृशो बन्धनस्थानम्, जीवनं दुःखमयं क्षणभङ्गुरञ्च, सर्वे भावाः चञ्चलाश्चपलाश्च क्षणिका निस्साराश्च, इत्याद्या भावना हृदयस्योल्लासं हरन्ति, नैराश्यञ्च जनयन्ति। एतद्भावनयैव क्षमादयासन्तोषप्रभृतयोऽप्युदात्तगुणाः दैन्यमधालस्यादिरूपेण

विकृतिमापादिता इव दृश्यन्ते, अतस्ता भावनाः प्रभूतानर्थकारिण्यः सन्ति इति चेन्मैवम्; मुमुक्षूणामद्वैतसिद्धान्तरसिकानां खलु नामरूपात्मकसंसारगोचरा इमाः प्रामाणिका मिथ्यात्वादिभावना हृदयस्योल्लासं हरन्तीति कथनन्तु सर्वथैवानुभव-विरुद्धम्। उल्लासं न हरन्ति, प्रत्युत विवर्धयन्ति, इत्यनुभवसिद्धम्। सांसारिक-विविधकामनाश्चिन्तामनोरथश्रेणयो हि चेतस्यत्तीव विक्षेपं जनयन्ति, तस्य चोल्लासं हरन्ति। विक्षिप्ते च तस्मिन् मनागप्युल्लासो नावतिष्ठते इति प्रसिद्धमेतत्। मिथ्यात्वादिभावनाः किल ताः निवर्तयन्ति, वैराग्यञ्च द्रढयन्ति, विक्षेपश्चापा-कुर्वन्ति, शुद्धमुल्लासमाविर्भावयन्ति। अनन्तानन्दपूर्णस्य ब्रह्मसाक्षात्कारस्य तीव्रतमामाशां—अभिलाषां जनयन्ति। यत्तूक्तं ताः नैराश्यं जनयन्ति, तद्यदि नैराश्यं संसारविषयगोचरं स्यात्तदारिष्टमेव। उक्तं हि श्रीमद्भागवते—'आशा हि परमं दुःखं, नैराश्यं परमं सुखम्।' (११।९।४४) इति। सर्वा-त्मब्रह्मभावनासहचरिताः खलु ताः मिथ्यात्वादिभावनाः क्षमादीना-मुदात्तगुणानां दैन्यादिलक्षणां विकृतिं नापादयन्ति, प्रत्युत तान् विकासयन्ति। दैन्यादीन् विगुणान् निवारयन्ति। अर्थकामपरायणानां संसारासक्तानां मिथ्यात्वादिभावना हृदयस्योल्लासं हरन्ति नैराश्यं जनयन्तीति तु कथञ्चिदभ्युपगन्तुं शक्येत, परन्तु मुमुक्षूणां तत्त्वबुभुत्सूनां हृदयोल्लासहरणादिकं कथमपि नाभ्युपगन्तुं युक्तम्। मिथ्यात्वादिभावना यदि संसारस्य यादृक् स्व-रूपमस्ति, तस्माद्विरुद्धाः प्रमाणप्रतिकूलाश्च स्युः तदा तास्वनर्थकारित्वाशङ्का समुचिता भवेत्, परन्तु तदनुसारिण्यः प्रामाणिक्यस्ताः कथङ्कारमनर्थकारिण्यो भवेयुरिति निर्मलया धिया विचार्यम्। अपि च संसारस्य व्यावहारिकीं सत्ता-मभ्युपेत्य 'सर्वभूतहिते रतास्ते' मुमुक्षवः—'विश्वदानीं सुमनसः स्याम' (ऋ. ६।५२।५) 'जयेम संयुधि स्पृधः' (ऋ. १।८।३)

'मह्यं नमन्तां प्रदिशश्चतस्रः' (ऋ. १० । १२८ । १) 'अदीनाः स्याम शरदः शतम्' (यजु. ३६ । २४) 'रोहेम शरदः शतं, पुष्येम शरदः शतं, भवेम शरदः शतं, भूयेम शरदः शतं, भूयसीः शरदः शतात् ।' (अथर्व १९ । ६७ । ४-८) इत्याद्याः छौकाभ्युदयभावना यदि कुर्युः, तदाऽपि ताभिः साकं अद्वैतप्रतिपत्तिफलकानां द्वैतमिथ्यात्वादि-भावनानां नास्ति कथम विरोधः, विभिन्नविषयत्वात्, 'लौकिकं वैदिकं तद्वत् प्रमाणं स्याऽऽत्मनिश्चयात् ।' इत्याचार्योक्तेश्च । संसारासक्ताश्च यदि तादृशीर् भ्युदयभावनाः कुर्वन्ति चेत् कुर्वन्तु नाम, 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।' (गीता. ३ । २६) इति भगवदुपदेशमनुसृत्य न तान् निवारयामः, प्रत्युत 'जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ।' (गी. ३ । २६) इति भगवदादेशमभ्युपेत्यताननुमोदामहे इति सर्वमनाविलम् ।

## यजुःसंहितातच्छाखापरिचयः ।

वृत्तगीतिवर्जितत्वे सति अनियताक्षरपादावसानो यज्ञादिकर्मसु विनियुक्तो मन्त्रो यजुर्मन्त्रः । तेषां समूहविशेषो यजुःसंहिता इत्युच्यते । यजुःसंहिता, यजुर्वेदसंहिता, यजुर्वेदः, इमे त्रयः शब्दाः सन्ति पर्यायाः । याज्ञिकैः स्वपरिभाषयाऽयं वेदः 'अध्वर्युसंहिता' नाम्ना व्यवह्रियते । यजुर्मन्त्रै-र्यो यज्ञादिकं सम्पादयति, सोऽसौ ऋत्विक् अध्वर्युनाम्ना परिगीयते । अतस्तस्येयं संहिता तदाख्यया प्रसिद्धिं प्राप्त । शतपथब्राह्मणादिभ्योऽपि विज्ञायते— किलास्याः संहितायाः सर्वतः प्रथमं चरकाभिधानेन ऋषिणा काण्डप्रपाठकानु-वाकैर्विभज्य प्रवचनं विहितम्, अत एवेयं 'चरकसंहिता' इति नाम्नाऽपि व्यवहृता-ऽभूत् । इमामधीयानाः तच्छिष्या अपि 'चरकाः' इत्येवं प्रथिता बभूवुः । व्याकरण-महाभाष्यादौ पतञ्जलिमुन्यादिभिः 'यजुर्वेदस्य एकाधिकशतशाखाः सन्तीति,

चरणव्यूहे च तत्कर्त्रा महीदासेन 'यजुर्वेदस्य षडशीतिर्भेदाः भवन्ति' इत्यभिधीयते। परन्तु वर्तमानसमये यजुर्वेदस्य पञ्च एव शाखा उपलभ्यन्ते। 'अन्याः सर्वा विलुप्ता अभुवन्' इत्यनुपलब्ध्या विज्ञायते। ताश्च पञ्च शाखाः–'तैत्तिरिसंहिता, कठसंहिता, मैत्रायणीसंहिता, काण्वसंहिता, माध्यंदिनसंहिता इति, नामभिः सन्ति प्रसिद्धाः। तासु क्रमशः तैत्तिरीयाणां प्रथमा, चरकाणां द्वितीयतृतीये, वाजसनेयानाञ्चान्तिमे द्वे। तित्तिरि-ऋषि-शिष्याः तैत्तिरीयाः, वाजसनेय-याज्ञवल्क्य-शिष्याश्च वाजसनेया इत्युच्यन्ते।

तत्र यजुर्वेदस्य तैत्तिरीयसंहितायाः वाजसनेयसंहितायाश्च पृथक्तयाऽऽविर्भावो महीधराचार्येण भागवतावलम्बकृतभाष्ययोक एवं वर्ण्यते–'व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच–मदधीतं त्यजेति। स योगसामर्थ्यान्मूर्तां विद्यां विधायोद्वयाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालबौधेयकाण्वमाध्यंदिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्। तथा च श्रुतिः–'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते, (बृ. ५।५।३३) इति। अस्यार्थः–आदित्यादधीतान्यादित्यानि। शुक्लानि=शुद्धानि। वाजस्य=अन्नस्य सनिः=दानं यस्य स वाजसनिस्तदपत्यं वाजसनेयः=याज्ञवल्क्यः, तेन शिष्येभ्य आख्यायन्ते=कथ्यन्त इत्यर्थः। तत्र मध्यन्दिनेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषो माध्यन्दिनः। यद्यपि याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः, तथापि ईश्वरकृपया मध्यन्दिनसंबन्धितया लोके प्रख्यायते। तं

माध्यन्दिने वेदे येऽधीयते—विदन्ति वा शिष्यपरम्परया वर्तमानास्तेऽपि माध्यन्दिना उच्यन्ते ।' इति । अस्यैतिहास्येदं तात्पर्यमनुमीयते—यत् बुद्धिविद्याबलसम्पन्नतया नम्रत्वाभावात् साभिमानो याज्ञवल्क्यो गुरुशिष्यसम्बन्धं विहायाचार्यकुले आचार्यादधीतं परम्परागतं यजुर्वेदमपि च परितत्याज । अयमेव परित्यागो भागवतादौ उद्वमनशब्देन वर्णितः । तेन त्यक्तस्य यजुर्वेदस्य वैशम्पायनाचार्य्याज्ञया तदन्यशिष्याः तैत्तिरिप्रमुखाः साग्रहं ग्रहणस्य तत्प्रचारस्य च दृढं व्रतं परिजगृहुः । इदमेवोद्वान्तस्य यजुर्वेदस्य भक्षणं विज्ञायते ।

अस्यान्यत्तात्पर्यं निरुक्तालोचने सत्यव्रतसामश्रमिपण्डितेन निरूप्यते—'गुरुमुखतोऽधीताऽपि तत्परित्यक्ता प्राचीनतमा चरकाध्वर्य्युसंहितैवान्यैरान्ध्रादिदेशीयैस्तित्तिर्य्यादिसंज्ञकैर्गृहीता । तस्या वाजसनेयीतोऽप्युत्कर्षं चिकीर्षुभिर्यत्प्रकरणे ये मन्त्राः पठितास्तत्रैव तदुत्तरं तत्तद्विधायकादिब्राह्मणवचनानि च सङ्गृहीतानि । तथा च यथा पृथक्पृथग्भुक्तानि चान्नव्यञ्जनानि सम्मर्दितानि चेद्वान्तं तद् विमिश्रमन्नव्यञ्जनमेव भवति । एवं तत्तित्तिर्यादिभिर्मन्त्रा ब्राह्मणश्रुतयश्च पृथक् पृथगधीता अपि यज्ञकार्येषु तद्व्यवहारसौष्ठवं साधयितुं विमिश्रीकृता इति द्वावेव मन्त्रब्राह्मणग्रन्थौ वान्तपूर्णाविव सम्पन्नौ । अत एव कृष्णेति व्यपदेशभागिनौ ।' इति ।

पश्चात् याज्ञवल्क्यो भगवन्तं विश्वसाक्षिणं विवस्वन्तं समाराध्य तदनुग्रहात् शुक्लानि यजूंषि प्राप्तवान् । उक्तं हि श्रीमद्भागवते—'एवं स्तुतः स भगवान् वाजिरूपधरो हरिः । यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥' (१२ । ६ । ७३) इति । सूर्यपुराणेऽपि च—'याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम् । यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥ एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः । अयातयामछंदांसि यानि वेत्ति न तद्गुरुः ॥ याज्ञवल्क्यस्ततो ब्रह्मन् ! स्वशिष्येभ्य उवाच ह ।

हरिः ॐ तत्सत्।

यजुर्वेदशतकम्

# शुक्लयजुर्वेद-संहितोपनिषच्छतकम्

(शुक्लयजुर्वेदवाजसनेयिमाध्यन्दिनीयसंहितोपनिषच्छतकम्)

। अध्यात्मज्योत्स्नाविवृत्तिसमलङ्कृतम्।

सत्यं ज्ञानमनन्तं यत् परानन्दमगोचरम्।
शिवं शान्तं समं शुद्धं ब्रह्माद्वयमुपास्महे ॥ १ ॥

गणेशान—महेशान—रमेशानाम्बिकारुणान्।
इष्टसिद्ध्यै नमस्कुर्मः पञ्च देवान् परावरान् ॥ २ ॥

जयेन्द्रगिरिशाङ्घ्र्यब्ज-परागाः पान्तु पावनाः।
निस्तमस्क—सदानन्द—साक्षात्कृतिहेतवः ॥ ३ ॥

धर्मादिबोधकोऽनन्त—विद्यः सर्वशिवङ्करः।
सनातनोऽनवद्यश्च वेदोऽजस्रं जयेदिह ॥ ४ ॥

यजुर्वेदस्य शुक्लस्य वाजसनेयिसंहिता।
तस्याः शाखा प्रसिद्धा या माध्यन्दिनीयसंज्ञका ॥ ५ ॥

तस्यामवस्थिता मन्त्राः कतिचित् हृदयङ्गमाः ।
अध्यात्मज्योत्स्नया तेऽमी विभूष्यन्ते हि व्याख्यया ॥ ६ ॥

विस्तराद्विभ्यतां क्षिप्रं सारमादातुमिच्छताम् ।
मन्दानामुपकाराय प्रयत्नः क्रियते मया ॥ ७ ॥

विजयते किलानन्तपूर्णविद्यालक्षणो नित्यः सदाऽभ्रान्तो हि भगवानतिधन्यो वेदः । युगान्ते प्रलयेऽप्ययमक्षरमक्षणि स्थूलरूपेण विलीनोऽपि सूक्ष्मरूपेणावतिष्ठत एव । पुनः पुनः सृष्ट्यादौ भगवता नारायणेन प्रकाशितो ब्रह्मादिपरम्परया सर्वमनुजहितमयमादरादावहति । सोऽयं प्रथितमहत्त्वः सत्त्वादिभिः त्रिभिर्गुणैः कृत्वा विश्वस्यास्य सृष्टिस्थित्यन्तान्, अध्यात्माधिभूताधिदैवलक्षणैस्त्रिभिर्भेदैः कृत्वा धर्मार्थकाममोक्षाख्यान् साङ्गोपाङ्गान् चतुर्विधान् पुरुषार्थानभिवर्षयति । अत एव सकलविद्यानिधानस्य महनीयस्यास्य वेदस्य गम्भीरगा रुचिरा प्रत्येकश्रुतिः—आध्यात्मिकादित्रिविधभावमभिव्यञ्जयन्ती सर्वमनुजहृदयवर्तमानमलविक्षेपावरणलक्षणत्रिविधरोगनिवारकत्रिविधभेषजसदृशकर्मोपासनज्ञानानि समाधिलौकिकपरकीयलक्षणाभिस्त्रिविधाभिर्भाषाभिर्निरूपयति । तथा चाहुः शिष्टाः—'यथा दुग्धञ्च भक्तञ्च शर्कराभिः सुमिश्रितम् । कल्पितं देवभोगाय परमान्नं सुधोपमम् ॥ तथा त्रैविध्यमापन्नः श्रुतिभेदः सुखात्मकः । नयते भारतं नित्यं ब्रह्मानन्दं परात्परम् ॥' इति ॥ त्रैविध्यं=अध्यात्माधिदेवाधिभूतलक्षणमित्यर्थः ।
'समाधिभाषा प्रथमा लौकिकीति परा मता । तृतीया परकीयेति शास्त्रभाषा त्रिधा मता ॥' (भारद्वाजसंहितायाम्) गुप्तरहस्यभूताध्यात्मतत्त्वबोधिका परमामृतानन्दलक्षणमोक्षप्रापिका या सा प्रथमा समाधिभाषेत्युच्यते । लोकरुचिमनुरुध्य लौकिकार्थकामप्रयोजिका या भाषा सा द्वितीया लौकिकीत्यभिधीयते । पारोक्ष्येण

निखिललोकहितमभिदधाना पापनिवारिका पुण्यकर्मसम्पादिका या भाषा सा तृतीया परकीयेति कथ्यते। अत एव शुक्लयजुर्वेदसंहितोपनिषच्छतकेऽस्मिन् व्याचिख्यासितानां श्रुतीनां यथायथमाध्यात्मिकादयो भावाः प्रकटिता भवेयुस्तथा तथाऽस्माभिः समाध्यादिभाषया समादरेण व्याख्यास्यन्ते—

१)

( ससाधनसफलब्रह्मविद्यालाभाय, सुष्ठुधनरसबलारोग्यादिसिद्धये गवादिसंरक्षणाय च परमेश्वरप्रार्थना )

'रुचीनां वैचित्र्यादि'ति न्यायात्, तां स्वां स्वामनुरुध्य विविधा जनाः स्वस्वाभीप्सितार्थसिद्धये परमेश्वरमभ्यर्थयन्ते। तत्र तावज्जिज्ञासवः ससाधनसफलब्रह्मविद्यार्थमेव तमनन्यचेतसा भजन्तो, देवर्ष्यादीनामाशीर्वादसदुपदेशादिकञ्च गृहीत्वा तां साधयितुमेव प्रयतन्ते इत्याह—

**ॐ इषे त्वोर्जे त्वा, वायवः स्थ, देवो वः सविता प्रार्पयतु, श्रेष्ठतमाय कर्मणे आप्यायध्वम्, अघ्न्या इन्द्राय भागं, प्रजावतीः अनमीवा अयक्ष्माः, मा वः स्तेन ईशत, मा अघशंसः, ध्रुवा अस्मिन् गोपतौ स्यात, बह्वीर्यजमानस्य पशून् पाहि ॥**

( शुक्लयजुर्वेदसंहितायां १।१ ) ( शतपथब्राह्मण. १।५।४।१-८ )

हे स्वप्रकाश ! पूर्णानन्दमहोदधे ! इषे=इष्यते—याऽभिलष्यते सर्वैर्मुमुक्षुभिर्ब्रह्मात्मतत्त्वबुभुत्सुभिरिति सा, इट्—इष्यमाणा—ब्रह्मविद्या, तस्यै तादर्थ्ये चतुर्थी-

विभक्तिः—ब्रह्मविचार्यमित्यर्थः—तत्सिद्ध्यर्थमिति यावत्, इषतीति गतिकर्मसु निघण्टौ पठितत्वात् (२ । १४) इष इत्यनेन विज्ञानमवगम्यते, गतेर्ज्ञानत्वात्। तच्च विज्ञानमत्र ब्रह्मविद्यैव। त्वा=त्वां—सत्यं ज्ञानमनन्तमद्वैतं परं ब्रह्म, अचलामलातुलप्रणयभरेण वयमजस्रमनुसन्दधाराभयामः—भजामः—स्मरामः—ध्यायाम इति कर्तृक्रियोपदाध्याहारः। 'इषेरिच्छार्थस्य कर्मणि क्विप्, चतुर्थ्येकवचनं इषे इति। ब्रह्मसाक्षात्कारजनकसाधनसामग्र्यां भगवद्भक्तेर्गुरुतरसाधनत्वात्, तथा तदर्थं प्रयतामहे, 'भक्तिर्ज्ञानाय कल्पते' 'भक्त्या मामभिजानाति' (गी. १८।५५) इत्युक्तत्वादिति भावः। तथा ऊर्जे=ऊर्जति—बलयति—तत्त्वसाक्षात्कारसाधकबलयुक्तान् मुमुक्षून् करोतीति ऊर्क्—विवेकादिसाधनचतुष्टयसम्पत्—तस्यै—तत्सिद्ध्यर्थम्, त्वा=त्वामेवानन्तदिव्यमहिमपूर्णं परमेश्वरमेकं शरणीकृत्य वयं साधका यज्ञदानादिभिः सत्कर्मभिः पूजयामः, दुरहंकारपङ्कं यत्नेन प्रक्षाल्य मनोवाक्कायकर्मभिश्च प्रह्वीभवाम इत्यध्याहारः। तदुक्तमभियुक्तैः—'यज्जिज्ञासा यज्ञदानादिभिः स्यात्, श्रुत्या मत्या चिन्तया यत्प्रबोधः। यस्मिन् बुद्धे बाध्यतेऽनर्थमूलं, तं भूमानं भावये स्वस्वरूपम्॥' इति। 'ऊर्ज—बलप्राणनयोः' धातोः कर्तरि क्विपि रूपं ऊर्क्—इति। ततः तादर्थ्ये चतुर्थी विभक्तिः पूर्ववत्। यद्वा ऊर्जे=रसाय—ब्रह्मसुखाय ब्रह्मविद्याफलभूताय—तत्सिद्ध्यर्थमिति यावत्। त्वा=त्वां—भगवन्तं वयं याचामहे इत्यध्याहारः। 'ऊर्क् वै रसः' (शत, ५। १ ।२।८) इति वाजसनेयकब्राह्मणश्रुतेः। रसः—सुखं—आनन्दः, इति अनर्थान्तरम्। अत एव श्रुतिषु आनन्दवचनो रसशब्दः प्रयुज्यमान उपलभ्यते। 'रसो वै सः' (तै. उ. ८। ७) 'रसेन तृप्तो न कुतश्चन ऊनः' (अथर्व, १० । ८ । ४४) इति।

अपि च, एक एवाद्वितीयोऽरूपोऽपि भवान् भगवान् माययाऽनेक इव,

बहुरूप इव च विभाति, अतस्त्वामेव विविधरूपैरपि सर्वत्र सदा वयं भावयाम इत्याह–यूयं वायवः=यान्ति–सर्वत्र गच्छन्ति–समनुगता भवन्तीति वायवः–सर्वगताः, स्थ=भवथ इत्यर्थः। गतिकर्मणो वातेः कर्तरि औणादिके उनि वायव इति बहुत्वे रूपम्। तत्रैतत्समाम्नातं भवति–' नमो ब्रह्मणे नमस्ते वायो ! ' ( तै. उ. १ । १ ) 'उपाधिना क्रियते भिन्नरूपः' ( ब्र. विं. उ. १२ ) इति च। वायुरिति निघण्टौ पदनामसु पठितत्वात्–पद्यते गम्यते यत्तत्स्वरूपं समनुगतं पदं वायुरित्यनेनाभिधीयते। अत्रोपाधिभेदानुवृत्त्या बहुवचनं नाऽऽभेदाभिप्रायेण। यथा' ते ब्रह्मलोकेषु परान्तकाले ' ( मुं. ३ । २ । ६ ) (कै. उ. १ । ४) इति, अत्र 'साधकानां बहुत्वाद्धैव लोको ब्रह्मलोक एकोऽप्यनेकवत्–दृश्यते–प्राप्यते वा, अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्मणीत्यर्थः। ' इति भगवत्पादैर्व्याख्यातं, तद्वदिहापि बोध्यं वायुरसीति। नहि वायुरूपब्रह्मरहितः कश्चन पदार्थोऽस्ति। तदुक्तं भगवत्पादाचार्यैः शङ्करस्वामिभिः–' त्वमर्कस्त्वमग्निस्त्वमिन्दुस्त्वमापः, त्वमाकाशभूवायवस्त्वं चिदात्मा। त्वदन्यो न कश्चित्पदार्थोऽस्ति सर्वं, सदानन्दसंवित्स्वरूपं तवेदम् ॥ ' इति।

अथ प्रच्छन्नाः सिद्धाः–महर्षयः–मन्त्रद्रष्टारः–योगीश्वराः–देवाः–ब्रह्मनिष्ठाः सद्गुरवश्च जिज्ञासुभक्तान् शुभाशीर्वादैनानुगृह्णन्ति–तत्कर्तव्यमुपदिशन्ति च, इत्याह–वः=युष्मान्, सविता=सर्वस्य प्रसविता–जनयिता–प्रजापतिः, देवः=देवानां देवोऽन्तर्यामिरूपेण सर्वत्र द्योतमानः–प्रकाशमानः–परमेश्वरः कृपासुधादृष्ट्या प्रार्पयतु=भवदभीप्सितां ससाधनां सफलां भक्तिचर्यां प्रकृष्टतया समर्पयतु इत्यर्थः। किञ्च यूयं, श्रेष्ठतमाय=अतिप्रशस्ततमाय–सर्वान् संगान् परित्यज्यानन्यभावेन भगवदाराधनलक्षणाय–अतिशोभनतमाय कर्मणे–तत्कर्म कर्तुमित्यर्थः। आप्यायध्वं=वर्धध्वं–वृद्धया–तीव्रश्रद्धोत्साहसंवेगेन संयुक्ता भवत इत्यर्थः। 'ओ-

इत्याह—वः=युष्माकं जिज्ञासुभक्तानामिन्द्रियाण्यपहर्तुं—आक्रमितुं वा स्तेनः=काम-चौरः, मा ईशत=ईश्वरः समर्थो मा भूत्—मा भवतु, अत्र लोडर्थे लङ्, बहुलं छन्दसीति शपो लुगभावः। मुग्धनयनानां नितम्बिनीनां सुन्दरीणां नितम्बाद्यङ्गेष्वधिरूढो हि मदनः तान्यङ्गानि पश्यतां जनानां विवेकविरागवतां ज्ञानिनामपि मनांसि बलादपहरति—हठादाक्रमते इति तस्य पाटच्चरत्वमतिप्रसिद्धम्। तथैतदत्रोक्तं—'कामिनीं यामिनीं कृत्वा मोहनिद्रां समर्प्य च। चैतन्यशून्यतां तेषामापाद्य ज्ञानिनामपि॥ शमदमाख्यानि रत्नानि महायत्नैश्चितान्यपि। कामचौरो महाक्रूरो क्षणेनापहरत्ययम्॥' इति॥ तथा अघशंसः=योऽघं—पापं शंसति—तनोति सः—घातुकः क्रोधोऽनर्थकारी मा ईशत—समर्थो माभूत्। स्तेनाघशंसपदगम्यौ सर्वानर्थमूलभूतावेतावनयुजौ कामक्रोधौ महापाप्मानौ स्तः, ताभ्यां प्रेरितो महदपि पापं करोति जनः, अतस्तौ वैरिणाववश्यं हन्तव्यौ, तयोर्विजयाय महता प्रयासेन भवितव्यमित्यभिसन्धिः। तथा च स्मर्यते भगवता गीतासु—'काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥' (गी. ३।३७) इति।

अपि च तस्मिन् त्वयि गोपतौ=गवामिन्द्रियाणां पत्यौ—स्वामिनि यजमाने—भगवदाराधके, सामान्यापेक्षमेकवचनं वर्तमानाः बह्वीः=बह्व्यः, बहुविधा गावः, कर्मेन्द्रियाणि—हस्तादीनि, ज्ञानेन्द्रियाणि—चक्षुरादीनि, मन आदीनि—अन्तरिन्द्रियाणि, ध्रुवाः=विहितप्रवृत्तावेव स्थिराः, भगवन्तमाराधयितुं निश्चलाः, स्यात=भवत। गोपदाभिधेयानि साधकस्य तव सर्वाणीन्द्रियाणि विहितमार्गगामिन्येव परमार्थसाधनैककामाणि च भवन्तु इत्याशयः।

किञ्च ते दयालवः साधकजनहिते रताः पूर्वोक्तं शुभाशीर्वादं सदुपदेशञ्च

विधाय विश्वेश्वरं प्रार्थयन्ते—हे दिव्यानन्तशक्तिसम्पन्न ! प्रभो ! यजमानस्य—परमेश्वरं त्वां यष्टुं शीलस्य साधकस्य पशून्=इन्द्रियरूपान् अश्वान् 'इन्द्रियाणि हयानाहुः' ( १।३।४ ) इति कठोपनिषच्छ्रुतेः । पाहि=गोपाय, यथा ते विरुद्धमार्गगामिनो न भवेयुः । किन्तु ते सद्वशे भवेयुः, तथा तान् निषिद्धविषयेभ्यः कामादिभ्यश्च रक्षस्व । 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' ( गी. २ । ६१ ) इति भगवदुक्तेः ।

ननु—'इषे त्वोर्जे त्वे' त्यादिमन्त्राणां कर्मसु विनियुक्तत्वात्, कथमेषामेवाद्दशमाध्यात्मिकविवरणं भवद्भिर्विधीयते इति चेत् ? भवतु नामैषां कर्मविनियोगो याज्ञिकैर्विधीयमानः, नास्माभिर्विनिवार्यते, तथापि परमेश्वरनिःश्वासभूतानां सर्वज्ञकल्पानां वेदमन्त्राणां महामहिमशालितया निखिलपुमर्थसाधनोपयुक्तत्वात्, परमगम्भीरत्वेनाध्यात्मिकाधिदैविकाधिभौतिकाधियज्ञादिविविधार्थबोधकत्वस्याविरुद्धत्वात्, पूर्वोक्तमाध्यात्मिकं विवरणं विशिष्टाधिकारिणां जिज्ञासूनां कृते परमपुरुषार्थसाधकतया समुपयुज्यत एव । तदर्थमेवः प्रयासः, यतो लोकास्तेषां विविधार्थमधिगम्य तेषु विशिष्टश्रद्धालवो भू वैहलौकिकपारलौकिकपारमार्थिकाभ्युन्नतिमासादयन्तु । अपि च विशिष्टमर्थमनुसन्धाय पाठविधाने महान् लाभः सिद्ध्यतीति नातिरोहितम् । न च तेषां विविधार्थाधिगमे सति संशयः स्यात्—इतिवाच्यम्, भिन्नविषयत्वेन संशयाभावात् । एकस्यैव मन्त्रस्य विनियोजकानेकप्रमाणबलाधास्यानेकार्थत्वस्य सर्वसम्मतत्वात् । लोकेऽप्येकस्यैव पदस्य प्रयोगभेदेनानेकार्थपरत्वस्योपलम्भात् । तद्वदत्रापि—आध्यात्मिकादिप्रयोगभेदेनानेकार्थप्रतिपादनस्य सम्भवात् वस्तुविरोधाभावाच्च, कर्मसु विनियुक्तानामप्येतेषां मन्त्राणामाध्यात्मिकव्याख्यानं संगतमेव । तदुक्तं माधवभट्टेन—'अन्योऽन्योऽविरुद्धश्चेत् इष्टेऽर्थे विनियुज्यते ।' (ऋग्वेदार्थानुक्रमणी) इति । नानाविधैरभिप्रायैर्मन्त्रा दृष्टा

महर्षिभिः । भूयांसो तेषु विज्ञातो भवत्यर्थो यथा तथा।' (ऋग्वेदानुक्रमणी) इति सर्वं सुस्थम्।

अथवाऽनेनापरे लोकाभ्युदयकामाः वृष्ट्यादिकमेव परमेश्वरात्प्रार्थयन्ते। इत्याह–हे परमेश्वर ! हे निजजनप्रार्थितार्थसार्थपूर्त्तीकरणचिन्तामणे ! प्रभो ! इषे=वृष्ट्यै–इष्यते–कांक्ष्यते सर्वैः व्रीह्यादिधान्यनिष्पत्तये या सा इट् वृष्टिः–तस्यै–तदर्थम्। त्वा–त्वां भगवन्तं निष्प्रतिमासीमतमकृपानिधानं सर्वान्तर्यामिणं, वयं तावकाः प्रार्थयामहे इति कर्तृक्रियापदाध्याहारः। 'वृष्ट्यै तदाह यदाहेषे त्वा' (श. ब्रा. १।५।३।१५) इति श्रुतेः। तत्रैतत्समाम्नातं भवति–'निकामे निकामे नः पर्जन्यो वर्षतु' (शु. य. २२।२२) इति। सर्वतः प्रथमं वृष्टिः प्रार्थ्यते, यतस्तया विना धान्यादिनिष्पत्त्यसिद्धेः, तामन्तरेण शरीरादिनिर्वाहासम्भवात्, तस्मादृते चतुर्विधेषु धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु नान्यतमोऽपि पुरुषार्थः सिद्धयतीति, अतः परम्परया सर्वपुरुषार्थसाधिका वृष्टिरादावभ्यर्थनीया भवतीति भावः। एवं–ऊर्जे त्वा। ऊर्जे=ऊर्जति सर्वान् मनुष्यपश्वादीन् बलयति–भक्षणादिना दृढशरीरान् करोति, बलवतः प्राणवतो वा करोतीति–ऊर्क्–बलकान्तिस्वास्थ्यादिसमर्पकं प्रभूतमन्नं तस्मै–अन्नाय–तदर्थम्। त्वा–त्वां शरण्यामगण्यं विश्वेश्वरं प्रार्थयामहे वयमिति शेषः। 'ऊर्गित्यन्ननाम' (नि. ९।२७) इति यास्कः। यद्वा इषे–अन्नाय, निघण्टौ अन्ननामसु पठितत्वात्। ऊर्क्–क्षीरदधिघृतादिमधुरादिरसः–तस्मै–तदर्थम्। 'ऊर्जे रसः' (श. ब्रा. ५।१।२।८) इति श्रुत्या, ऊर्जति–प्राणयति–प्रकर्षेण चेष्टयतीति व्युत्पत्त्या च वृष्टिजलधान्ययवादिपरम्परया प्राप्तो बलकान्त्यादिवर्धको मधुरादिरस ऊर्ग् शब्देनोच्यते। तत्रैतद्ब्राह्मणश्रुत्या समाम्नातं भवति–'यो वृष्ट्यादूर्ग्रसो जायते तस्मै तदाह' (श. ब्रा. १।५।३।१५) इति। एतन्मंत्रद्वयजपानुष्ठानेन

स्वच्छन्दया प्रार्थितो दयासुधासिन्धुर्भगवान् सर्वजनेप्स्यमाणां वृष्टिमन्नं क्षीरादि-रसञ्च वितरत्येव। एवं परमेश्वरं प्राथ्यं देवानपि तत्स्वरूपवर्णनेनानुकूलयन्ति—हे देवाः! यूयं वायवः=यान्ति—यज्ञादौ समर्पितं हविरादिकं ग्रहीतुं साधुजनान् धर्मनीतिपराननुग्रहीतुं, पुण्यशालिभ्यः तदभीप्सितार्थान् सम्पादयितुं वा गच्छन्तीति वायवः—सर्वत्र गमनशीलाः—सर्वप्राणिकर्मसाक्षिणो महेशानशासनपालनतत्पराः स्थ=भवथ, वायुमधिष्ठाय प्रवर्तमाना इन्द्रादयो देवा वायुशब्देनाभिधीयन्ते। तदुक्तं भगवता गीतासु—'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः'। (गी.३। १२) इति। अन्यत्राप्युक्तम् 'ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः।' इति।

एवं तद्गुणवर्णनगम्यस्तुत्या प्रसन्ना देवाः पुण्यकर्मणरतान् सज्जनान् शुभाशीर्वादादिना भावयन्तीत्याह—हे सज्जनाः! वः=युष्मान्, सविता=सुवति तत्तदखिलव्यापारे सर्वान् प्रेरयतीति सविता 'षू प्रेरणे' स्मरणात्, यद्वा विश्वस्य प्रसविता—सर्वजगदुत्पादको विश्वेश्वरः सविता इत्यर्थः। देवः=सर्वेषां सुखानां दाता, सर्वविद्याद्योतकः—दानादिगुणयुक्तः परमेश्वर इत्यर्थः। 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा' इति यास्कः (नि.७। १५) प्रार्पयतु=स्वाभीष्टपदार्थान् समर्पयतु—संगमयतु—प्रकृष्टतया—संयोजयतु इत्यर्थः। प्र उपसर्गः, ऋ गतौ 'णिच् पुक्।' येन प्रभूतधनधान्यादिस्वाभीप्सितपदार्थान् परमेश्वरानुग्रहात् प्राप्य भवन्तः सर्वे भूयो भूयः श्रेष्ठतमाय कर्मणे, अतिप्रशस्ततमाय यज्ञाय कर्मणे, 'तादर्थ्ये चतुर्थी'। तादृशकर्मार्थमित्यर्थः। तत्कर्म कर्तुमिति यावत्। प्रवर्त-मानाः समर्थाश्च भवन्तु इति क्रियापदाध्याहारः। 'यज्ञो वै श्रेष्ठतमं कर्म' (श. ब्रा. १। ७। १। ५) इति श्रुतेः। यज्ञस्थाने कथितत्वं तत्तत्स्वरूपविस्ता-रस्थाभेऽभिपात्यते, अनेन हीनकर्मत्यागपूर्वकं श्रेष्ठतमसत्कर्मानुष्ठानमेवासंशयं

चित्तशुद्धिद्वारा सद्वस्तुप्रापकं भवतीति सूचितं भवति । केचनात्र विवेचयन्ति– चतुर्विधं कर्म, अप्रशस्तं, प्रशस्तं, श्रेष्ठं, श्रेष्ठतमञ्चेति । लोकशास्त्रविरुद्धं–परपीडाचौर्यव्यभिचारानृतादिकमप्रशस्तम्, लोकैः श्लाघनीयं–बन्धुवर्गज्ञातिवर्गपोषणादिकं प्रशस्तम्, स्मृत्युक्तं वापीकूपतडागानाथालयादिकं लोकोपकारकं श्रेष्ठम् । वेदोक्तं यज्ञादिरूपं श्रेष्ठतममिति । अन्ये पुनः–स्वस्वकीयोपकारकं विहितं पराऽर्थनिघातकं यत्स्वार्थं कर्म तदप्रशस्तम्; स्वार्थं परोपकारकं परार्थं च यत्कर्म तच्छ्रेष्ठम्; सर्वोपकारकं सर्वार्थं यत् यज्ञकर्म तच्छ्रेष्ठतमं कर्म । येन खलु क्रियमाणेन कर्मणा सर्वे मनुष्याः सर्वे प्राणिनः सर्वे च देवाः उपक्रियन्ते, सर्वथा स्वार्थमपि परित्यज्य परार्थमेव यत्क्रियते, तत्सर्वाभ्युदयस्वनिःश्रेयसोभयसाधनत्वेन श्रेष्ठतमं यज्ञकर्म परिगीयते । तदैतत्समाम्नातं भवति–'सर्वेषां वै एष भूतानां सर्वेषां देवानामात्मा यत् यज्ञः' ( श. ब्रा. १४ । ३।२।१ ) इति । अपरे पुनः–स्वस्य सर्वस्वहारि अधर्मानीत्यादिकं कल्मषं परित्यज्य लौकिकं, स्मार्तं, श्रौतञ्च सर्वं सत्कर्म मानयशःपुण्येच्छया कृतं प्रशस्तमित्युच्यते । मानादीच्छां विहाय परमेश्वरप्रसादाय स्वान्तशुद्धये च श्रद्धाविवेकविनयादिपुरःसरं कृतं तच्छ्रेष्ठमित्यभिधीयते । कर्तृत्वाभिमानं फलेच्छां च परित्यज्य निष्कामभावनया कर्तव्यबुद्ध्या लोकसंग्रहाय तत्त्वविद्भिः कृतं तच्छ्रेष्ठतममिति परिगीयते । तथा चैतत्समाम्नातं श्रेष्ठतमं कर्म भगवता पुरुषोत्तमेन गीतासु सात्त्विकत्वेन समर्थ्यते– 'नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥' (गी. १८ । २३) इति । तादृशकर्मकर्तुः स्वरूपमपि प्रतिपाद्यते–'मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥' (गी. १८ । २६) इति ।

एवं श्रेष्ठतमकर्मकरणाय प्राप्तपदार्थविनियोगं यूयं कुरुत इति देवानामा-

देशो महता प्रयत्नेन सज्जनैः परिपालनीय इति । एवं श्रेष्ठतमकर्मसु प्रवर्तमानाः स्वपरहितैषिणो भवन्तः, आप्यायध्वं=ऐहलौकिकपारलौकिकाभ्युदयेन वर्धमानाः सन्तः समन्तात् सर्वानप्यन्यान् जनान् वर्धयतेत्यर्थः । प्यायी वृद्धौ हेतुमति णिचो लोपः ।

यज्ञादिकर्मणि गोक्षीरादिकमप्युपयुज्यते, अतो गा अभिलक्ष्याह—हे अघ्न्याः != गावः ! गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्या कैश्चित्कर्हिचिदपि ना अघ्न्या इत्युच्यन्ते । अघ्न्या—अहन्तव्याः ( नि. ११ । ४३ ) इति समाख्यानिर्वचनम् । अत एव तद्वधतन्मांसभक्षणादिनिषेधस्तु मन्त्रेषु ब्राह्मणेषु च सर्वत्र सहेतुकः समाम्नायते—'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥' (ऋ. ८ । १०१ । १५) 'देवीं देवेभ्यः पर्येयुषीं गां, आ मा वृक्त मर्त्यो दभ्रचेताः ।' (ऋ. ८ । १०१ । १६) इति । अयमर्थः—रुद्राणां= क्षत्रियाणां, माता=जननी, वसूनां=वैश्यानां दुहिता=पुत्री, आदित्यानां=ब्राह्मणानां, स्वसा=भगिनी, गौरस्ति । अपि च सा अमृतस्य=समुज्जनजीवनस्य पयसो वा नाभिः=आधारभूताऽस्ति । यद्वा ऐहिकस्यामुष्मिकस्य च सुखस्य नाभिरथानीयाऽस्ति । अतः—कारणात् चिकितुषे=ज्ञानयुक्ताय जनाय=लोकसमुदायाय नु= क्षिप्रं प्रवोचं=अहं मन्त्रद्रष्टा प्रकर्षेण कथयामि । किं कथ्यते ? तदुच्यते— अनागां=अपराधरहितां अदितिं=अखण्डनीयां गां=धेनुं, मा वधिष्ट=हे जनाः ! अस्या वधं मा कुरुत इत्यर्थः । देवेभ्यः=देवार्थं परि—एयुषीं—अवगच्छन्तीं मा= मां गां=धेनुं दभ्रचेता =अल्पबुद्धिः, परि आ अवृक्त=परिवर्जयति—तिरस्करोतीत्यर्थः । 'धेन्वश्च अनडुहश्च नाश्नीयात् धेन्वनुडुहौ वै इदं सर्वं बिभृतः ।' (श. ब्रा. ३ । २ । २१) बिभृतः—धारयतः पोषयत इत्यर्थः । इति । यूयं गावो

यज्ञार्थं परमेश्वरेण संयोजिताः स्थ, अतः इन्द्राय=इन्द्रं—परमेश्वरमुद्दिश्य, इन्द्रप्रभृतीन् देवान् चोद्दिश्य, क्षीरादेः समर्प्यमाणं भागं आप्यायध्वमित्यनुवर्तते। समन्ततो वर्धयध्वं प्रभूतेन हविर्भागेन देवान् यूयं संतर्पयतेति यावत्। तृप्ताश्च देवा युष्मभ्यं भवत्पालकेभ्यश्चेष्टान् भोगान् प्रदास्यन्ते इति भावः

किञ्च सन्ति गावस्त्रैलोक्यमातरः, यतस्तद्रसैर्जीवन्ति त्रिभुवनवासिनः सर्वे। अत एव ताः परिपालनीया जननीमिव सर्वैरपि। अपि च कृषिप्रधानस्य भारतस्यास्य देशस्य गोधनमेवामूल्यमस्ति धनम्। तथा चाम्नायते प्रश्नोत्तराभ्याम्—'कस्य मात्रा न विद्यते ?' (शु. य. २३। ४७) 'गोस्तु मात्रा न विद्यते' (शु. य. २३। ४८) मात्रा=मूल्यमित्यर्थः। यतः प्रवर्तते गोमूलमेव यज्ञकृषिवाणिज्यादिकं मज्जबुद्धिसुमसंततयादिकञ्च, अतो भारतीयानां गोभिस्तुल्यमपरं धनं नास्ति। तस्माद्गोरूपस्य महाधनस्यासुभिरपि वसुभिरपि तैः सदा रक्षा विधेया, रक्षिते हि तस्मिन् सर्वमेव रक्षितं स्यादित्यभिप्रेत्याह—वः=युष्मान् गाः, अपहर्तुं स्तेनः=चोरः, माईशत=मा इष्टां—ईश्वरः समर्थो मा भूत्। तथा अघशंसः=अघेन तीव्रपापेन तन्मांसभक्षणादिना निमित्तेन यः शंसति—हिनस्ति—घातुको भवति सोऽघशंसो नरपिशाचः चाण्डालः, 'शंसु हिंसायामि'ति स्मरणात्। व्याघ्रादिरपि मा ईशत—नो हिंसको मा भूत्। कीदृशीर्युष्मान् ? इत्याह—प्रजावती'—बहुजीवदपत्याः, भूयस्यः प्रशस्ताः प्रजा वर्तन्ते यासु ताः—भूम्नि प्रशंसायां वा मतुप्। अनमीवाः—अमीवा—व्याधिः न विद्यते यासु ताः कृमिमशकदष्टत्वादिस्वल्परोगादिरहिताः। 'अम रोगे' इत्यस्माद्बाहुलकादौणादिक ईवन् प्रत्ययः। अयक्ष्माः=यक्ष्मा—क्षयः—प्रबलो रोगराजो न विद्यते यासां ताः प्रबलरोगरहिता इत्यर्थः। यद्वा अनमीवाः—सकलसामान्यविशेषरोगरहिता इत्यर्थः। अय—क्ष्मा, अयनं—अयः गमनमित्यर्थः, क्ष्मा—हरिततृणादिसंकुला सस्यश्यामला

पृथिवी इत्यर्थः । तस्यां अघो यासां विद्यते घासभक्षणाय ताः अघ्न्याः—सर्वत्रा-निवारितपादप्रचारा इति यावत् । अयक्ष्माः—मनुजैः सर्वैरपि अपहरणवधादि-कष्टवर्जिताः सामान्यविशेषरोगसंस्पर्शरहिताः समां समां विजायमाना जीवद्-वत्सकाः कुण्डोध्न्यः प्रलम्बस्तनाः परिपुष्टदीर्घकाया दर्शनीयवर्तुलशृङ्गाः प्रभूतघन-घनीतक्षीराः स्वच्छन्दगमनरुयो यथेष्टहरिततृणादिभक्षणशीलाः सर्वलोकोपकारिण्यो गावः प्रयत्नेन सम्पादनीयाः, विशिष्टरीत्या पालनीयाः वर्धयितव्याश्चेति । श्रेष्ठगोधनप्रार्थनप्रख्यापको निगमोऽपि भवति—'**आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे । प्रजावतीः पुरुरूपा इह स्यु-रिन्द्राय पूर्वीरुषसो दुहानाः ॥**' (ऋ. ६ । २८ । १) इति । अयमर्थः—गावः=पूर्वोक्तलक्षणा धेनवः, आ—अग्मन्=अस्मदीयं गृहमागच्छन्तु । उत—अपि च, आगत्य ताः अस्माकं भद्रं=भजनीयं शुभं कल्याणं अक्रन्=कुर्वन्तु । तथा गोष्ठे—अस्मदीये गवास्थाने सीदन्तु=उपविशन्तु । तदनन्तरं अस्मे=अस्मान् रणयन्तु=रमयन्तु इष्टान् भोगान् ददत्विति शेषः । अपि च—इह=अस्मिन् गोष्ठे, पुरुरूपाः—नानावर्णा गावः, प्रजावतीः—प्रजावत्यः—संततिसहिताः, पूर्वीः—बह्व्यः, इन्द्राय—इन्द्रार्थं—इन्द्राराधनाय, उषसः=उषःकाले, दुहानाः=दुग्धदोग्ध्र्यः—प्रभूतं पयः प्रदात्र्यः स्युः=भवेयुः । अत एव वदति भगवान् गोपालकृष्णः—'गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे सर्वतः सन्तु गवां मध्ये वसाम्यहम् ॥' इति । शिष्टा अप्याहुः—'गावः स्वस्त्ययनं महत्' इति ।

अथवा अघ्न्या—इति द्वितीयाबहुवचनम्—तद्विशेषणानि—प्रजावतीः—अन-मीवाः, अयक्ष्माः, पुनः कीदृशाः ताः इन्द्राय भागं, इत्यपि तद्विशेषणम् इन्द्राय=षष्ठ्यर्थे चतुर्थी 'सुपां सुपो भवन्ती' तिनियमात् परमैश्वर्यवतः—पर-मेश्वरस्य सर्वप्रसवितुः—प्रजापतेः भागं=ऐश्वर्यस्य मुख्यभागरूपाः, भागमिति

सामान्ये नपुंसकम्। प्रशस्ता गावो हि भगवदैश्वर्यस्य भागभूताः वेदितव्या इति यावत्। अतएव श्रीरूपत्वेन तासामाख्यानं श्रूयते—'श्रीर्वै पशवः' (श. १।८।३।३६) इति। श्रीः—ऐश्वर्यमित्यर्थः। तादृशीः ता यथा सामर्थ्यं यूयं आप्यायध्वं—प्रवर्धयध्वं—पालयध्वमित्यर्थः। गवां प्रशस्तधनत्वमिन्द्रत्वं इन्द्राराधनसहायकारित्वञ्चापि श्रुत्यन्तरे समाम्नातं भवति—'**गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः। इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम्**'॥ (ऋ.६।२८।५) इति। गाव एव मे=मह्यं भगः=प्रशस्तं धनं भवन्तु। इन्द्रः=परमेश्वरश्च मे=मह्यं गावः=गाः अच्छान् यच्छतु। गावः, प्रथमस्य=इविषां श्रेष्ठस्य सोमस्य भक्षः=भक्षणं भवन्तु। अभिषुतस्य हि सोमरसस्य गव्येनाज्यादिना संस्क्रियमाणत्वात्। हे जनासः! जनाः! इमा=एवंभूता या गावः सन्ति, स=ताः इत्यर्थः। ता एव गावः इन्द्रो भवन्ति। तदैश्वर्यस्य भागभूतत्वात्तासामिन्द्रत्वम्। दधिघृतादिरूपेण इन्द्रस्याप्यायनत्वाद्वा। एवंभूतं इन्द्रं हृदा=श्रद्धाभक्तियुक्तेन तदुत्थादिजनितसात्त्विकज्ञानमयेन मनसा चित्=अपि, इच्छामि-इत्=कामये एव, साधनभूताभिर्गोभिः=इन्द्रं=परमेश्वरं यष्टुं=आराधयितुमिच्छामीत्यर्थः।

किञ्च यूयं गावः, गोपतौ=गवां युष्माकं पत्यौ—पालकेऽस्मिन्—वर्तमाने धार्मिके सज्जने, ध्रुवाः=निश्चलाः, बह्वीः=भूयस्यः स्यात=भवत इत्यर्थः। सम्प्रति गवादिपशुरक्षायै परमेश्वरं प्रार्थयन्ते—हे जगदीश्वर! यजमानस्य=यजति—देवान् पूजयति-सत्सङ्गं दानञ्च करोतीति य स यजमानः तस्य धार्मिकस्य सद्वृत्तस्य पशून् पाहि=गोपाय—रक्षस्वेत्यर्थ.। ते अमी पशवो द्वेधा विभज्यन्ते श्रुत्या—'**पशून् तान् चक्रे वायव्यान् आरण्या ग्राम्याश्च ये।**' (ऋ. १०। ९०।८) (शु. य. ३१।६) इति। पशूनां वायुदेवत्यत्वात् वायव्यत्वम्।

सप्त ग्राम्याः पशवः सप्तारण्याः।' (श. ब्रा. ३। ८। ४। १६) इति च। गावः, अश्वाः, अजाः, अवयः, महिषाः, खराः, उष्ट्रा इति सप्त ग्राम्याः पशवः। लोके तेषामेव सप्तानां यथाशक्ति पालनस्य दृष्टत्वात्। हरिणगवयप्रभृतयः सप्त *आरण्याः। तत्र ग्राम्याः प्रशस्ताः, अप्रशस्ताश्चारण्याः। 'अपशवो वै एते यद् आरण्याः।' (तै० ब्रा. ३। ९। १) इतिश्रुतेः। अपशवः अप्रशस्त-पशव इत्यर्थः। नञ् अप्राशस्त्येऽर्थेऽत्र। तान् पशून् गोमांसादिभक्षकेभ्यो गवादिघातुकेभ्यो नराधमेभ्यः पापेभ्यः चोरव्याघ्रादिभ्योऽपि रक्ष। सौभाग्यसमृद्धिप्रदान् सकलजगत्पोषकान् परोपकारपरायणान् निरपराधान् गवादिपशून् घृशंसा मनुजाधमा दुष्टा यथा न पीडयेयुः–न मारयेयुः, गोचरस्थलानि गोपेय-पयःसरांसि च यथा रक्षितानि स्युः, यथेष्टं यथाकालं वृष्ट्यादिकञ्च प्रभवेत्। यथा वा सर्वे प्राणिनः सुखिनः परस्परसुखहेतवश्च भवेयुः तथा भगवता दया-लुना दया विधेयेति प्रार्थना इति।

अथवा–परमेश्वरेण मनुजानामुपादनं कस्य कस्य विशिष्टस्य कार्यस्य विधानाय क्रियते इति तदुपदिशति–मन्त्रदृक् ऋषिः–इषे=प्रजायै, 'प्रजा वै इषः' (श. ब्रा. १। ७। १। १४) इति श्रुतेः। त्वा=त्वां मनुष्यं, सवितृपदसान्निध्यादत्र सूते इति क्रियापदाध्याहारः कर्तव्यः। सूते=जनयति–उत्पादयति। कः? सविता=सर्वस्य प्रसविता परमपिता भगवान्। कर्माधिकृतेन त्वया मनुजेन प्रथमं तावद्ब्रह्मचर्याश्रमं प्रविश्य विविधा विद्याः समधिगम्य पञ्च-विंशतिवर्षानन्तरं सल्लक्षणां सवर्णां युवतितमां भार्यां परिणीय यथामर्यादं यथा कालं विशिष्टबलबुद्ध्यादिसम्पन्ना भूयस्यः प्रशस्ताः प्रजा उत्पादयितव्याः इति,

* महाभारते एवं निरूप्यते—'सिंहा, व्याघ्रा, वराहाश्च, महिषा, वारणास्तथा। ऋक्षाश्च, वानराश्चैव सप्तारण्याः स्मृता नृप॥

तदर्थमेव तयोरुत्पादनं परमेश्वरेण विहितमिति त्वं जानीहि। तथा च श्रुत्यन्तरमपि—'गृहस्थेन प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या' इत्याह—'प्रजातन्तुं मा व्यवच्छेत्सीः' (तै. उ. १। ११) इति। प्रजातन्तुं=प्रजासन्तानमित्यर्थः। अपि च गृहमेधिनः प्रशस्तया प्रजयैव पूर्णता समाम्नायते—'प्रजया हि मनुष्यः पूर्णः' (तै. ब्रा. ३। ३। १०) 'अर्धो ह वै एष आत्मनो यद् जाया, तस्मात् यावत् जायां न विन्दति, नैव तावत् प्रजायते, असर्वो हि तावत् भवति, अथ यदा एव जायां विन्दते, अथ प्रजायते, तर्हि हि सर्वो भवति' (श. ब्रा. ५। २। १। १०) सर्वं वै यत्तत् पूर्णम्' (श. ब्रा, ४। २। ३। २) इति। पूर्णो भवन्नेव मानवोऽभ्युदयसुखमुपलब्धुं पारयते, नान्यथेति भावः। अपि च यथा मनुष्यो द्विजः सब्रह्मचर्यां विद्यामधिगच्छन् ऋषिऋणात्, यज्ञांश्च कुर्वन् देवऋणात् विमुच्यते, तथा प्रजां प्रजनयन् पितृऋणात् विमुक्तोऽनृणः सम्पद्यते। यत्रेदं समाम्नातं भवति—'**जायमानो वै ब्राह्मणस्त्रिभिः ऋणैः ऋणवान्—जायते ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, एष वै अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी**' (तै. सं. ६। ३। १०) इति। अत्र जायमानः=गृहस्थः सम्पद्यमान इति व्याख्येयम्। अन्यथा—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' (जा. उ. २। ९) इति श्रुतिविरुध्येत। इतरथा=रागाभावे इत्यर्थः। अत एवावगम्यते—वीतरागस्य तत्त्वविविदिषो ब्रह्मचारिण ऋणानि न सन्ति, येनाऽयं तदपाकरणार्थं यज्ञविवाहादिकर्मानुतिष्ठेत्। परन्तु एतादृशः शुद्धसत्त्वो मोक्षैककामो ब्रह्मचारी दुर्लभतमः सहस्रेषु कश्चिदेक एव। तथैतन्मनुनाऽपि स्मृतं भवति—'अनधीत्य द्विजो वेदान् अनुत्पाद्य तथात्मजान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः।' (मनु. ६। ३७) सरागः त्रीणि ऋणान्यनपाकृत्य वेषपरिवर्तनमात्रसंन्यासान्मोक्षं

कामयमानो दाम्भिकाचारेण सरसं भैक्ष्यमासादयन् प्रमादेन कान्तयापनं बहुमन्यमानो विवेकविरागादिवर्जितो नूनमधोगतिं गच्छतीत्यर्थः । तस्मात्पूर्णतालाभाय स्वगापाकरणाय संयमिना गृहमेधिना धर्म्यं नियममास्थायावश्यं प्रशस्ताः प्रजाः समुत्पादनीया इति ।

तथा–ऊर्जे=रसाय–अभ्युदयसुखोपभोगाय त्वा–त्वां मनुष्यं सविता देवः सूते=उत्पादयति । तथा च त्वया निर्भिक्षस्याभ्युदयसुखस्योपभोगाय सयमसदाचारहितकरान्नरसादिना परिपुष्टशरीरेन्द्रियादिकं विधातव्यम् । आलस्यञ्च परिहाय लोकशास्त्राविरुद्धप्रयत्नेनाभ्युदयसुखसाधनानि सम्पाद्यानि, तदर्थमेव त्वं परमेश्वरेणोत्पादितोऽसीति यावत् । अत एवाथर्वसंहितायामेतत्समाम्नातं भवति–‘ऊर्जे त्वा बलाय त्वा ओजसे त्वा सहसे त्वा । अभिभूयाय त्वा राष्ट्रभृत्याय त्वा पर्यूहामि शतशारदाय ॥’ (१९ । ३७ । ३) अहं परमेश्वरः त्वा–त्वां=मनुष्यं, ऊर्जे=सुखोपभोगाय-प्रयोजनाय, बलाय=तत्साधनशरीरेन्द्रियादिसामर्थ्याय, ओजसे=तत्साधकाष्टमधातवे विशिष्टान्नरससंयमसदाचारादिना जनितविद्युत्प्रभूतवीर्योत्पादितविशिष्टतेजसे इत्यर्थः । सहसे=अभ्युदयसुखसाधनसम्पादकप्रयत्नाय, अभिभूयाय=अभिभूय–अभिभवन तस्मै, आलस्यादिम्लेच्छादिबाधान्त शत्रुजयाय, एवं राष्ट्रभृत्याय=राज्यभरणप्रयोजनाय, राष्ट्रमुपलक्षणं ज्ञातिगोत्रबन्धुभगादेः, तथा शतशारदाय=शतशरत्पर्यन्तजीवनाय, पर्यूहामि=परि–ऊहामि–परिवहामि–भूमिमण्डलं प्रापयामि–जनयामीत्यर्थः ।

तथा, यूयं वायवः=वातसः–भूमिमण्डले सर्वत्र गतिमन्तः स्थ=भवत इत्यर्थः । यत सर्वेयं भूमिः खलु सर्वदेवायतनत्वेन, यज्ञवेदित्वेन च समाम्नायते ‘पृथिवी वै सर्वेषां देवानामायतनम्’ (शा. ब्रा. १४ । ३ । २ । १)

इति । 'सा वै सर्वा एव वेदिः' (तै. सं. ६ । २ । ४) इति । अपि च लौकिकविविधसुखसाधनानामेकत्र देशभेदे–भूमिखण्डेऽलभ्यत्वेन हेतुना यत्र यत्र भूप्रदेशे तान्यभीप्सितानि साधनान्युपलभ्येरन्, तत्र सर्वत्र भूमिमण्डले–वैदिकस्य सत्यसनातनार्यधर्मस्य समुदारान् सिद्धान्तान् दृढया श्रद्धया परिगृह्य, स्वधर्मपरिरक्षणसामर्थ्यमवाप्य सदाचारपरायणा भूत्वा यथारुचि–यथाप्रयोजनं यूयं निःशङ्कं गच्छत; नास्ति कश्चित्प्रतिरोधः । ये खलु केचन समुद्रमार्गेण वाऽऽकाशमार्गेण वा भूमिमार्गेण वा गन्तुमिच्छेयुः, तेऽमी तेन तेन मार्गेण बाष्पयानादिसाधनेन यथाऽभिलाषं गच्छेयुः, तत्र लोकानां हितकाम्यया वैदिकस्य सत्यधर्मस्य प्रचारोऽपि अवश्यं विधातव्य इति । अत एव श्रुत्याऽऽम्नायते– '**समुद्रं गच्छ स्वाहा, अन्तरिक्षं गच्छ स्वाहा, द्यावापृथिवी गच्छ स्वाहा**'–(शु. य. ६ । २१) स्वाहा=सु–आह–आ=समन्ततः सम्यक्तया कथयति परमेश्वर इत्यर्थः । अत एव ऋक्संहितायां–'**वसिष्ठं ह वरुणो+ नाव्याधादृषिं**' (ऋ. ७ । ८८ । ४) '**प्र यत्समुद्रमीरयाव मध्यम्**' (ऋ. ७ । ८८ । ३) इत्येवमादि–ऋग्भिर्महर्षेर्वसिष्ठस्य द्विजोत्तमस्योपादेय-चरितस्यापि–'**तुग्रो ह भुज्युमश्विनोदमेघे**' (ऋ. १ । ११६ । ३) '**समुद्रस्य धन्वन्नार्द्रस्य पारे**' (ऋ. १ । ११६ । ४) इत्येवमादि–ऋग्भिश्च राजर्षिकुमारस्य भुज्योः क्षत्रियस्य च, तदितरेषां मन्वादीनामप्यन्यत्र मन्त्रेषु समुद्रमार्गेण नावमारुह्य द्वीपान्तराभिगमनवृत्तान्तः समाम्नायते 'न तु

+वरुणः नावि=नौकायां समुद्रतरणसाधनभूतायां वसिष्ठं=महर्षिं, आधात्=आरोहयदित्यर्थः । यत्=यदा समुद्रं मध्यं=समुद्रस्य मध्ये प्रईरयाव=प्रकर्षेण गमयाव वसिष्ठवरुणौ आवाम् इतिशेषः । तुग्रः=अश्विनोः प्रियः कश्चिद्राजर्षिः, भुज्युं=एतत्संज्ञं प्रियं पुत्रं, उदमेघे=उदकं मिह्यते–सिच्यते इति उदमेघः समुद्रः तस्मिन् । अश्विना=अश्विनौ अरक्षतामिति शेषः ।

श्रुत्यापि वेदमंत्रे ' समुद्रयानादिकं न कुर्यादि ' त्येवं प्रतिषेधः श्रूयते । ' समुद्रयानगमनं ब्राह्मणस्य न शस्यते ' (परा. स्मृ.) ' यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणम् । अगम्यगामिता यत्र तं देशं परिवर्जयेत् । ' (परा. स्मृ.) इत्यादिस्मृतिवचनेष्वप्रशस्यमानः प्रतिषेधस्तु स्वधर्मस्य सदाचारस्य च सर्वत्र परिरक्षणमेव बोधयति । तथा च स्वधर्मं परिरक्षितुं समर्थेषु स्वसमानधर्मिभिर्भूयोभिर्मिलित्वा समुद्रयानमारुह्य धनमुपार्जयितुं देशान्तरं गच्छत्सु तत्रापि पेयस्यैव पानं भक्ष्यस्यैव भक्षणं गम्यस्यैव गमनं कुर्वत्सु सदाचारपरायणेषु सद्धर्मप्रचारशीलेषु कथमपि न शक्यः पतितशब्दियोगोऽभिसन्धातुम् । इति ॥

किञ्च देवो वः=युष्मान् सविता श्रेष्ठतमाय यज्ञलक्षणाय कर्मणे प्रार्पयतु=प्रार्पयति–प्रेरयति–आज्ञापयतीत्यर्थः, लकारव्यत्ययः । सर्वत्र भूमिमण्डले युष्मान् सर्वान् श्रेष्ठतमं विविधं वैदिकं यज्ञकर्म नियमेन कर्तुमाज्ञापयति भगवान् इति यावत् । तस्मात्–भक्ताः सर्वे मनुजा भगवदाज्ञां शिरसि निधाय श्रेष्ठतमं यज्ञकर्म श्रद्धयाऽनुतिष्ठेयुः, तद्विपरीतमप्रशस्तं कर्म च परिजह्युरिति । अयमेवाभ्युदयसुखस्य पन्था इति ।

आप्यायध्वं अघ्न्याः इन्द्राय भागं प्रजावतीः अनमीवाः अयक्ष्माः इति पूर्ववद्विज्ञेयम्, नास्त्यत्र कश्चिद्विशेषोऽर्थः ।

अपि च यूयं सर्वे बुद्धिमन्तः शक्तिमन्तो मिथः संघटिताश्च भूत्वा राष्ट्रकार्याण्यपि दैनंदिनं प्रतिपलं निरीक्षध्वम् । कश्चन म्लेच्छो युष्मद्धनस्य धर्मस्य स्वातन्त्र्यस्य चापहर्ता स्तेनो दुष्टो युष्माकमुपरि यथा न शासनं विदध्यात्, तथा यूयं स्वदेशस्य स्वातन्त्र्यं विपुलेन प्रयत्नेन परिरक्षत । योऽस्माकोऽगोऽपि राजा प्रजापालनलक्षणात्स्वधर्माद्यथा न प्रमाद्येत्, अन्याये पथि वर्तमानः प्रजाभ्यो

नानुचितं धनमाददीत, दुःखावहामन्याय्यामाज्ञां यथा न विदधीत, तथा यूयं प्रयतध्वमित्याह–मा=निषेधार्थमव्ययम् । वः=युष्मान्–मनुजान्, स्तेनः=चौरः –धनस्य धर्मस्य स्वातन्त्र्यस्य चापहर्ता कश्चन दुष्टो म्लेच्छः,* मा ईशत=मा ईशिष्ट=युष्माकं शासक ईश्वरो राजा मा भूत् । तथा अघशंसः=अघस्य पापस्य दुःखस्य वा शंसकः–इच्छुकः ' शसि इच्छायां ' कर्तरि अन् प्रत्ययः, पापकर्ता, दुःखावहान्याय्याज्ञाकर्ता राजा युष्मान् मा ईशिष्ट–युष्माकमीशनं मा कार्षीदित्यर्थः । एतदर्थसाधिका भगवत्प्रार्थनाऽपि ऋग्वेदे समाम्नाता भवति–' यो नः पूष-न्नघो वृको दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥ अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम् । दूरमधि स्रुतेरज ॥ त्वं तस्य द्वया-विनोऽघशंसस्य कस्यचित् । पदाभि तिष्ठ तपुषिम् ॥ ' (ऋ. १ । ४२ । २–३–४) इति । अयमर्थः–हे पूषन् !=परमेश्वर ! यः, अघः=पापः–आहन्ता–ताडयिता, वृकः=अस्मदीयस्य स्वातन्त्र्यस्य आदाता अपहर्तेत्यर्थः । ' वृक आदाने ' वर्कते इति वृकः इगुपधलक्षणः कः । दुःशेवः=सेवितुं–दुःशक्यो दुष्टसुखो वा, दुःखेन सेव्यते इति दुःशेवः वर्णव्यत्ययेन सकारस्य शकारः, दुः=दुष्टं परिणामे महादुःखप्रदं शेवं–आपातसुखं यस्याऽसौ सः तथोक्त इति व्युत्पत्तेः । एवंभूतो यः प्रतिपक्षी म्लेच्छः, नः=अस्मान् आदि-देशति=आज्ञापयति–शासनं करोति, तं तादृशं प्रतिपक्षिणं, पथः=स्वदेशमार्गात्, अप जहि स्म=अवश्यमपाकुरु–स्वदेशशासकं विधर्मिणं विदेशीयं दुष्टं सपदि दूरीकुरु इति यावत् । त्यं=तादृशं, प[illegible] –आपान्यसुखमातेध[illegible] मुषीवाणं=तस्कररूपं, मुषीवा इति तस्करस्य नाम ' मुषीवान् [illegible]

*गोमांसखादको यस्तु विरुद्धं [illegible]

[illegible]स्वभिधीयते ॥

(नि. ३ । २४।११) इति तन्नामसु पाठात् ।पुनः कीदृशं ? हुरश्चितं=कौटिल्यानां सञ्चेतारं–संचयकर्तारम्, सुतेः=अस्माकं मार्गात्, पृथक्कृत्येति शेषः । अधि–दूरं=अत्यन्तदूरदेशं प्रति, अप अज=अपगमय । मुषीवाणं–मुषस्तेये, मोषणं मुषिः, औण दिको भावे किप्रत्ययः, मुषिं वनति–संभजते इति मुषीवा, वन–षण–संभक्तौ विच् प्रत्ययः, ' अन्येषामपि दृश्यते ' इति पूर्वपदस्यापि दीर्घत्वम् । हुरश्चितम्=' हुर्च्छा कौटिल्ये ' भावे क्विप्, छकारलोपः, हुरश्चिनोतीति हुरश्चित् । चिनोतेः क्विप्, तुगागमः, अलुक् । सुतेः=सृगतौ क्तिच्, ' अज गतिक्षेपणयोः '। तस्य=स्वातन्त्र्यमपहर्तुः चोरस्य, द्वयाविनः=प्रत्यक्षापहारः परोक्षापहारश्चेति यद् द्वयं तद्युक्तस्य, अघशंसस्य=अस्मासु–अघं–अनिष्टं–दुःखसन्तापादिकं शंसतः–अभिलषतः–कुर्वतो वा । अघशंस इति, तस्करनाम, ' मलिम्लुचः अघशंसः वृकः ' (नि. ३ । २४ । १३) इति तन्नामसु पाठात् । कस्यचित्=अनिर्दिष्टविशेषस्य कस्यापि, तपुषिं=परसन्तापकं पापिनं देहं, पदाभितिष्ठ=भवदीयेनातिबलवता पादेनाऽऽक्रम्य तिष्ठ, तं संचूर्णय–विध्वंसयेति यावत् । इत्येवं स्वातन्त्र्यापहर्तुः–दुष्टस्य म्लेच्छस्य विध्वंसायास्माभिः प्रार्थनेयं विधीयते, द्वयाविन=द्वयमस्यास्तीति द्वयावी, मत्वर्थीयो विनिः, दीर्घत्वम् । अघे–पापे शंसो मनस्यभिलापो यस्य सोऽयमघशंसः । तापयत्यनेनान्यमिति तपुषिः । औणादिक उषिन् प्रत्ययः । इति ।

किञ्च यूयं सर्वे मनुजाः सर्वस्रष्टरि परमपितरि सर्वलोकेश्वरे परमेश्वरे परमश्रद्धालवस्तदाज्ञायामचलविश्वासाश्च भवत । श्रद्धाविश्वासाभ्यामेव सर्वाणि लौकिकानि पारलौकिकानि च कार्याणि सिद्ध्यन्ति नान्यथेत्याह–अस्मिन्=एतस्मिन् सर्वप्रसवितरि गोपतौ=लोकपतौ परमेश्वरे । ' इमे वै लोका गौः '

तदचिरेण सम्पद्यत एव। अत एवाहुर्भगवत्य श्रुतयः—'[illegible] मनसा ध्यायेद्, यद्वा अहं किञ्चन मनसा ध्यास्यामि, तथैव तद्भविष्यति, तद्ध स्म तथैव भवति' (गोपथ. ब्रा. पू. १ । ९) इति। ध्यायेत्—चिन्तयेत्, इत्यर्थः। ध्यै चिन्तायां स्मरणात्। 'मनीषिणः प्रभरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम्।' (ऋ. १० । १११ । १) हे मनीषिणः=मनसो नियन्तारः! स्वकीयां मनीषां=बुद्धिं सत्येन सुविचारेण प्रभरध्वं=ऋतम्भरां तां कुरुत इत्यादेशो भगवतो वेदस्य। यतो नृणां=मनुष्याणां यथा यथा=यादृश्यो यादृश्यो यादृग्भावनावत्यो मतयो भवन्ति तादृशास्ते मनुष्या भवन्तीत्यर्थः। 'क्रतुमयोऽयं पुरुषः' (श. ब्रा. १० । ६ । ३ । १) इति। 'स क्रतुं कुर्वीत' (छां. ३ । १४ । १) इति च। क्रतुः=दृढः सङ्कल्पः—प्रतिज्ञा। 'स यदेव मनसा कामयते 'इदं मे स्याद् इदं कुर्वीय' इति स एव क्रतुः' (शत. ब्रा. ४ । १ । ४ । १) इति ब्राह्मणश्रुतेः। यं किल विदेशीया आङ्गला—'विल-पॉवर' इति नाम्ना कथयन्ति। यतोऽतुलप्रभाव-श्चायमिति मतिमतामतिरोहितम्। ततोऽभ्युदयकामैर्मनुजैः कुचिन्तनं विहाय सच्चिन्तनमेव विधेयम्। दुःखफलानि चानृतव्यभिचारादीनि पापानि कर्माणि परिहातुं, सुखफलानि सत्यब्रह्मचर्यादीनि पुण्यानि च व्रतानि समादातुं दृढा प्रतिज्ञा विधातव्या। तस्याः निर्विघ्नसाफल्यायासकृत्परमेश्वरोऽभ्यर्थनीयः। तथाहि—यथा सर्वशक्तिमान् भवान् भवान् सत्यव्रतपालकत्वाद् व्रतपतित्वेन प्रसिद्धः, तथा वयमपि भवदनुग्रहलब्धेन दृढेन पुरुषार्थेन यथाशक्यं सत्यव्रतादीनां यथावत्समाचरेण व्रतपतयो भवितुमभिलषामः, वेदेषु यत्परमेश्वरेण भवता निषिद्धं विरुद्धं पापं कर्म तत्परिहातुं परिहापयितुं च तथा समुपदिष्टं सर्वहितकरत्वेन सत्यलक्षणान्वितत्वेन पक्षपातादिदोषरहितत्वेन च हेतुना परमप्रामाणिकं सत्यधर्मजातं परि-

ग्रहीतुं परिग्राहयितुं च प्रतिजानीमहे, यथा वयं समर्था भवेम, सर्वाभीप्सितानि धर्मार्थकाममोक्षफलानि प्राप्तुं च शक्नुयाम, तथा भगवता दयानिधिना दया विधेयेति। इत्येवं खल्वयं मानवो यथा यथा सत्यादियमनियमादीनि बहूनि व्रतानि समादिसति, तथा तथा प्रमादकृतेभ्योऽनृतादिपापेभ्यो निवर्तमानः क्रमशः स्वान्तःशुद्धयादिमापद्यमानः सत्यं महत्तत्त्वं समुपैनीत्याह—

ओ३म् अग्ने ! व्रतपते ! व्रतं चरिष्यामि,
तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि ॥

(शुक्लयजु. १।५) (श. ब्रा. १।१।१।६)

हे अग्ने !=परमात्मन् ! हे व्रतपते !=सत्यादीनां व्रतानां पालक ! त्वदुपदिष्टवेदशास्त्रानुज्ञया त्वत्कृपया व्रतं=सत्य–ब्रह्मचर्य–अहिंसा–अस्तेय–युक्ताहार-विहार–सन्ध्या–मन्त्रजप–ध्यान–याग–दान–अक्रोधादिलक्षणं अभ्युदयनिःश्रेयससाधनं, चरिष्यामि=अनुष्ठास्यामीत्यहं त्वत्समक्षं प्रतिजाने इति शेषः। तत् शकेयं=त्वत्प्रसादलभ्यदृढपुरुषार्थात् तत्तद्व्रतमनुष्ठातुं शक्तो भवेयम्। तन्मे=मम, तत्=तस्य तस्य व्रतस्य निर्विघ्नमनुष्ठानं फलपर्यन्ता पूर्तिश्च राध्यतां=संसाध्यतां–संसिद्धयतु, समृद्धिं गच्छतु वा, इत्यहं भक्तं भगवन्तं प्रार्थये। अहं साधकः त्वद्भक्तः, अनृतात्=न विद्यते ऋतं–यथार्थमाचरणं यस्मिन्–तस्मात् अत्यन्ताधोगतिहेतुभूतात्–असत् कर्मणः–असद्भाषणात्–असद्विचारात्–असत्सङ्गात्–मिथ्याभिमानात्–मिथ्याज्ञानाच्च–उद्धृत्य-पृथग्भूत्वा, इदं=शास्त्रप्रसिद्धं-साधक-प्रत्यक्षं वा सत्यं=सत्कर्म–सद्भाषणं–सद्विचारं सत्सङ्गं–सदभिमानं–सदात्मज्ञानञ्च यत्खलु वेदादिशास्त्रेण, प्रत्यक्षादिप्रमाणेन, विदुषां सत्सङ्गेन स्वान्तःशुद्धया

सुविचारेण च सम्यक् परीक्ष्य यन्निश्चितं, यत्किल समेषां सुखकरं हितकरञ्च तदहं उपैमि=अनुप्राप्तुं प्राप्नोमि इति । '**वृजिनमनृतं दुश्चरितं, ऋजुकर्म सत्यं सुचरितम्**' (तै. ब्रा. २।३।७।१०) इति श्रुतेः । यद्वा अनृतं= मनुष्यशरीरं शीघ्रविनाशित्वात्, यथा स्वप्नपदार्थाः शीघ्रं निवर्तमानाः अनृताः कथ्यन्ते, सत्यं=देवस्वरूपं बहुकल्पस्थायित्वात् देवाराधनया उपैमीत्यर्थः । '**मृत्युर्वा असत्, सदमृतम्**' '**मृत्योर्माऽमृतं गमय**' (बृ. १।३।२८) इति बृहदारण्यकश्रुतेः । यद्वा अनृतं=मिथ्याभूतं देहेन्द्रियादिकार्यकरणसंघातमनात्मजातं धृत्वा, परिच्छिन्नत्वाद्दृश्यत्वाज्जडत्वाच्च तस्मात् 'ल्यब्लोपे पञ्चमी' तादृशमनृतं विहाय तत्रात्मबुद्धिं त्यक्त्वा यदिदं सत्यं=प्रत्यगात्माभिन्नं ब्रह्मतत्त्वं पारमार्थिकं त्रिकालाबाध्यं चिदानन्दपूर्णं तदहं स्वस्वरूपमुपैमि=एकमात्रतच्चिन्तनतत्कथन-तदेकपरो भवामीत्यर्थः ।

## ( ३ )

**( कामादीनामाभ्यन्तराणां, सर्वभूताभिद्रोग्धॄणां दुष्टानां बाह्यानां वा शत्रूणां विध्वंसाय भगवत्स्तुतिपुरस्सरं तदभ्यर्थनम् )**

व्रतानुष्ठानस्य प्रतिबन्धकापनोदनमन्तरेणासम्भवात्, प्रथमं प्रतिबन्धकं शत्रुभूतं कामादिदोषजातमपनोदितुं भगवन्तं सर्वसामर्थ्योपेतं प्रार्थयते—

**ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं,**
**योऽस्मान् धूर्वति यं तं धूर्व वयं धूर्वामः ।**
**देवानामसि वह्नितमꣳ सस्नितमं**
**पप्रितमं जुष्टतमं देवहूतमम् ॥**
( शु. य. १।८ ) ( श. ब्रा. १।१।२।१० )

हे परमात्मन्! महेश्वर! त्वं धूरसि=धूः-असि-हिंसकोऽसि। तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः, धुर्वेतेः क्विप्। प्रलयकाले सर्वस्य जगतः संहर्तृत्वात्, अहर्निशञ्च मृत्युरूपेण प्राणधारिणां मारकत्वाच्च। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' (क. उ. १। २। ४) 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः।' (गी. ११। ३२) इति श्रुतिस्मृतिभ्यां तव हिंसकत्वप्रसिद्धेः। यतो धूरसि, अतो धूर्वन्तं=हिंसन्तं नः पाप्मानं ज्ञानविज्ञाननाशकं प्रबलं कामाख्यमरातिं धूर्व=विनाशय-हिन्धि। किञ्च यः क्रोधलोभादिः ज्ञानोपासनयोगादिपुण्यसाधनविरोधेनास्मान् व्रतसिषाधयिषून् धूर्वति=हिंसितुमुद्युक्तस्तमपि धूर्व=विनाशय। यं च वयं धूर्वामः तमपि धूर्व=यं आलस्यप्रमादादिरूपं वैरिणं वयं व्रतानुष्ठातारः साधकाः धूर्वामः=हिंसितुमुद्यतास्तमपि धूर्व=विनाशय। एवं भगवतः शत्रुविनाशं प्रार्थ्य तत्साधनाय तस्य विशुद्धं पूर्णमद्वैतं सत्यज्ञानानन्दघनं स्वस्वरूपं स्तुत्या विभावयति-हे महादेव! त्वं देवानां=इन्द्रादीनां-पृथिव्यादीनां-विदुषां वा सम्बन्धी=जनकः स्वामी-पालको वा असि=भवसि। पुनः कीदृशं तत्त्वं त्वमसि? वह्नितमं=वहति-प्रापयति-सर्वेषां प्राणिनां कर्मफलानि यथास्वं अतिशयेनेति सर्वकर्मफलाध्यक्ष इति यावत्। यद्वा त्वमत्काभीष्टं यथत्, तत्सर्वं यथायोग्यं वहत्यतिशयेनेति, भक्तकामपूरककल्पतरुरितियावत्। 'वह प्रापणे' स्मरणात्। तथा सस्नितमं='ष्णा शौचे' अतिशयेन शुद्धमपापविद्धं निर्लेपं निर्विकारमितियावत्। यद्वा 'ष्णै वेष्टने' सस्नितमं=स्वकारेन सर्वजगदतिशयेन संवेष्ट्यावस्थितमित्यर्थः। तथा पप्रितमं='प्र पूरणे' सत्त्वेन चित्त्वेनानन्दभावेन च सर्वत्रातिशयेन सदा पूरितं-पूर्णमिति यावत्। तथा जुष्टतमं='जुषी प्रीतिसेवनयोः'- देवानामिन्द्रनुवर्तने-दैवीसम्पद्विशिष्टानां विदुषां साधकभक्तानामतिशयेन प्रियं, यद्वा इन्द्रादिभिः तादृशैर्देवैर्वा अतिशयेनाभिप्रेतं

सेविततमं वा यत्तत्त्वं तत्त्वमसीति शेषः। पुनः किं भूतं? देवहूतमं=देवाना-
ह्वयतीति देवहूः 'ह्वञ् स्पर्धायां शब्देच' देवानां विदुषां भक्तानामतिशयेनाह्वातृ—
कृपापूर्णं त्वां विचिन्त्य देवा आहूता इव शीघ्रं तत्र दर्शनाय सेवनाय चाग-
च्छन्ति। यद्वा देवैः=विद्वद्भिः त्वं सकृदतिशयितप्रेमश्रद्धाभ्यामाहूयत इति
देवहूतमं त्वमसीतियावत्। '**विद्वांसो वै देवाः**' (श. ब्रा. ३। ५। ६।
१०) इति श्रुतेः।

अथवाऽनेन परमेश्वरात्, बाह्यानां स्वधर्मस्वातन्त्र्यधनादिलक्षणामूल्य-
रत्नापहर्तॄणां शत्रूणां विध्वंसः प्रार्थ्यते—त्वं धूरसि=सर्वेषां दुष्टानां दस्यूनां पापाना-
मासुरीसम्पद्वतां संहारकोऽसि—'**विनाशाय च दुष्कृताम्**' ( गी. ४। ८ )
इति स्मरणात्। अतस्त्वं धूर्वन्तं=हिंसाशीलं—सर्वभूताभिद्रोहिणं प्राणिनं धूर्व=
हिंसय। तथा योऽस्मान्=धार्मिकान् सर्वभूतहितेरतान् धूर्वति=हिनस्ति, तं=
दुष्टं दस्युं स्वधर्मस्वातन्त्र्यापहर्तारं धूर्व=हिंसय। यं=पापिनं वयं पुण्यकर्माणः
सर्वभूतमित्राः धूर्वामः=हिंसामः तमपि धूर्व इति। शिष्टं समानम्। अस्य-
मन्त्रस्य जपानुष्ठानेन चिन्तितस्य प्रार्थितस्य परमेश्वरस्य प्रसादात् शक्त्या वा
बाह्याभ्यान्तरशत्रूणां विध्वंसोऽवश्यं भवत्येवेतिविज्ञेयम्।

कश्चिद्भौतिकाग्निप्रभावपरत्वेनैवमिमं व्याचष्टे—यो भौतिकोऽग्निः, धूः=सर्व-
पदार्थच्छेदकत्वाद्धिंसकः, असि=अस्ति, व्यत्ययेन प्रथमःपुरुषः। तं हे शिल्प-
विद्यानिपुण! कलाकौशलेन लोहादिधातुनिर्मितयन्त्रेषु संयोजनीयं देवानां=पृथि-
व्यादिपदार्थानां मध्ये वह्नितमं=प्रकाशादिप्रापकतया प्रशस्ततमं, सस्नितमं=
अतिशयेन शुद्धिकारकं, पप्रितमं=अतिशयेन स्वेष्टसिद्धिपूरकं, जुष्टतमं=कलाप-
रक्षतैर्वैज्ञानिकैः सेविततमं देवहूतमं=देवैः कलानिपुणैः प्रज्ञावद्भिरतिशयेन

## ( ५ )

### ( मृत्युबन्धनाद्विमुक्तयेऽमृतत्वप्राप्तये च श्रीत्र्यम्बकेश्वरस्य महादेवस्य समर्चनं ध्यानञ्च कर्तव्यम् )

अज्ञानमृत्युमूलस्यास्य दुःखमयसंसारदुःखस्य समूलविनाशाय, अनन्तानन्दपूर्णामृतस्वरूपसाक्षात्काराय च विश्वेश्वराराधनसंजात तत्त्वप्रबोधा विद्यते एवैकोऽभ्युपायो नान्य इतीद 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।' (शु. य. ३१ । १८) (श्वे. उ. ३ । ८+६ । १५) इत्यादि श्रुतिशतप्रमाण—जातेन सुनिर्णीतमेव । तथा च यस्य खलु पुण्यकर्मणो महाभागस्य मृत्युसमाख्यबन्धनान्मुमुक्षाऽतितीव्रा तदमृतस्वरूपस्य दिदृक्षा च सुदृढा समुपावर्तते, सोऽसौ किलावश्यमेव तदुभे अप्रमादलभ्यं तत्साधकतमं महामहिम्नो विश्वेश्वरस्य महादेवस्य समाराधनं दृढाभ्यां श्रद्धाभक्तिभ्यां कृत्वा तत्प्रसादात्तत्त्वबोधं समवाप्य बन्धनान्मुक्तो भवन् अमृतोऽभयो भवतीत्यभिप्रेत्य मन्त्रद्रष्टा महर्षय आहुः—

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥**

(शु. य. ३ । ६० । ऋ. ७ । ५९ । १२ । अथर्व. १४ । १ । १७ । तै. स. १ । ८ । ६ । २ । श. ब्रा. २ । ५ । ३ । १२ + १४ । तै. आ. १० । ५६ । नि. १४ । ३५)

वयं मोक्षामृतार्थिनः, त्र्यम्बकं=अम्बकं—नयनं—दृष्टिः—त्रीण्यम्बकानि यस्य स तं सूर्यादिनेत्रत्रयोपेतं श्रीरुद्रमित्यर्थः । यद्वा त्रिषु लोकेषु भूरादिषु, त्रिषु कालेषु भूतादिषु वा, तिसृषु जाग्रदाद्यवस्थासु वा, अम्बकं=ज्ञानरूपा प्रज्ञा-

शिका ध्रुवा दृष्टिर्विद्यतेयस्य सः, तं शाश्वतपूर्णज्ञाननेत्रमित्यर्थः । यद्वा त्र्यम्बकं= त्रयाणां ब्रह्मविष्णुरुद्राणां त्रिमूर्णां महालक्ष्मीमहाकालीमहासरस्वतीनां वा त्रयाणां लोकानां वा अम्बकं पितरं परात्परं परमेश्वरमित्यर्थः । यद्वा त्रिषु लोकेषु अम्ब = शब्दो वेदलक्षणः सर्वसत्त्वसुखहितावहः सदुपदेशात्मको विद्यते यस्य स, तं सर्वलोकोपदेष्टारं जगद्गुरुमित्यर्थः । 'अबि शब्दे' 'कर्मण्यण्' संज्ञायामिति कन्प्रत्ययः । यद्वा त्र्यम्बकं=तिस्रः—अम्बाः—लोकमातरः—द्यौ भूमिरापो यस्य निवासाय सोऽसौ त्र्यम्बकस्तं सर्वलोकतत्स्थनिवासिनमित्यर्थः । यद्वा त्रय = अकारोकारमकाराः प्रणवमात्रा अम्बा:=शब्दो—वाचका यस्य सः, तं ओमिति प्रणवप्रतिपाद्यमित्यर्थ । तादृशं महामहत्त्वोपेतं विश्वेश्वरं महादेवं यजामहे= पूजयाम —चिन्तयामः इत्यर्थः, समाराधयाम इतियावत् । किं लक्षणं तमित्यत आह—सुगन्धि=शोभनदिव्यगन्धोपेतं मर्यधर्मविहीनमित्यर्थः । शोभनः शुद्धो गन्धो यस्मिन् वा यस्माद्वा तमिति व्युत्पत्तेः । समासान्त इकारादेशः । यद्वा सुगन्धि=शोभनो विस्तृत —सर्वविदितः पुण्यगन्धः शुद्धयशो यस्य सोऽसौ सुगन्धिः तमित्यर्थः । सर्वत्र प्रसारितपुण्यकीर्तिमिति यावत् । **'यथा वृक्षस्य सुपुष्पितस्य दूराद्गन्धोवात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ।'** (तै. आ. २ । ११ ) इति श्रुतेः । पुन किं विशिष्टं, पुष्टिवर्धनं=जगद्बीज-भूता उरुशक्तिः पुष्टिः तामुपासकस्याभीष्टार्थसिद्धिविषयां वर्धयतीति पुष्टिवर्धनः तमित्यर्थः । यद्वा लौकिक्याः शरीरेन्द्रियादिसामर्थ्यपुष्टेः, पुत्रधनधान्यादिपुष्टेः विवेकवैराग्याध्यात्मिकपुष्टेश्च वर्धयितारमित्यर्थः । तदेतदन्यत्राप्याम्नातं भवति—**'पुष्टिवर्धनः सुमित्रः सोम ! नो भव ।'** ( ऋ. १ । ९१ । १२ ) इति । पुष्टे लौकिक्याः पारमार्थिक्याश्च सम्पदः, वर्धयिता सन् हे सोम= उमासहित परमेश्वर ! नः=अस्माकं त्वं सुमित्रः=शोभनसखा—सर्वोत्तमहितकर्ता

भवेत्यर्थः । अथेदानीं यजनेन प्रसन्नो महादेवो मृत्युबन्धना-मुक्तयेऽभ्यर्थ्यते—स निरवधिककरुणाब्धिर्भगवान् अस्मान्—स्वाराधकान् उर्वारुकमिव बन्धनात्=इव—यथा उर्वारुकं=कर्कटीकर्कन्ध्वादेः फलमत्यन्तपक्वं सत्, बन्धनात्=स्वस्य प्रसवबृन्तात्—अनायासेन प्रमुच्यते, तद्वत् न सौमप्रणयप्रसादशालिभिः सर्वापद्न्मूलिभि कृपाकटाक्षैः, मृत्यो.=अविद्यात्मकस्तंसारलक्षणात्—बन्धनात् मुक्षीय=मोचयतु इत्यर्थ । पुरुषवचनव्यत्यय. छान्दसः । 'व्यत्ययो बहुलमि'ति नियमात् । अमृतात्=लौकिकपारलौकिकपारमार्थिकसुखरूपात्—अभ्युदयनिःश्रेयसरूपफलद्वयात्, मा मुक्षीय—मा मोचयतु=मा वियोजयतु इत्यर्थः । यद्वाऽहं महादेवप्रसादात् मृत्योः मुक्षीय=मुक्तो भूयासं, एकवचनमिदं 'यजामहे' इत्युपक्रमानुरोधेन बह्वर्थेऽपि विज्ञेयं मुक्षीमहि=मुक्ता भूयास्मेत्यर्थ । अमृतात्=मोक्षसुखान्मा मुक्तो भूयासं, मम भ्रंशो मा भूदित्यर्थ । बह्वर्थे मा मुक्षीमहि—न भ्रिमुग्यामहे मुक्ता मा भूयास्म इति यावत् । ऋग्विधाननाम्नि ग्रन्थे मृत्युञ्जयस्यास्य मन्त्रस्य लौकिकं—जपफलमाह—शौनको महर्षिः—'समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा । एतत्पर्यशतं कृत्वा जीवेद्वर्षशतं सुखी ।' इति ।

## ( ६ )

### ( महापुरुषाणां सदाचारो मे प्राप्तो भूयादिति, इन्द्रियादेः सुसंस्कृतं जीवनं मे सम्पद्यतामिति च प्रार्थनम् )

यतः श्रुतिस्मृतिन्यायोक्तस्य सदाचारस्य महत्त्वं सुप्रसिद्धं विद्यते । सदाचारः प्रथमः परमश्च धर्मः, परमं तपश्च । यदाहुः—भगवन्तो बादरायणाचार्याः

भारते–' आचारमेव मन्यन्ते गरीयोधर्मलक्षणम् । ' इति । सर्वस्य तपसो मूलमाचारं जगृहुः परम् । ' इति च शान्तिपर्वणि । सदाचारादायुर्वर्धते सम्पद्यते च शान्तं प्रसन्नं जीवनम्। रोगरहितं पुष्टं बलवत्कान्तिमच्छरीरं भवति । सदाचाररतो हि पुरुषः श्रियं कीर्तिं मेधाञ्च लभते, शास्त्रोक्तपुण्यसाधनफलभाग्भवति । सदाचारभ्रष्टो दुराचारो जनो लोके निन्दितो व्याधिग्रस्त, शोकसन्तापदुःखसमाक्रान्तोऽल्पायुर्भवति । अतो दुराचारत्यागपूर्वकस्य देवर्षिमहर्षिसेवितस्य परमधर्मस्य सदाचारस्य समवाप्तये भगवन्तं विश्वेश्वरं प्रार्थयन्ते—

**ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।**
**यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥**

( शु. य. ३ । ६२ । मा. श्रा. २ । ५ । ४ । १ + ७ )

जमदग्नेः=सुप्रसिद्धस्य महाबलपरशुरामपितुः–महर्षेः–यत्–त्र्यायुषं=बाल्ययौवनस्थाविराणामायुषां समाहारस्त्र्यायुषं विशिष्टगुणसम्पन्नं निरवद्यं तदवस्थात्रयमसुखकरमासीत् । तथा कश्यपस्य=एतन्नामकस्य महाप्रतापशालिनः प्रजापतेः, यत् त्र्यायुषमासीत्, यस्य महत्त्वं श्रुत्याऽपि स्वयमाख्यायते–' **कश्यपः पश्यको भवति यत्सर्वं परिपश्यतीति सौक्ष्म्यात्** । ' ( तै. आ. १ । ८ )*, तथा देवेषु=इन्द्रादिषु विद्वत्सु अभयसत्त्वसंशुद्ध्यादिकल्याणगुणगणसमलङ्कृतेषु वा

---

* यत्=यस्मात्कारणात्, अत्यन्तसूक्ष्मयोर दिव्यदृष्ट्या सर्वमतीतानागतादिक परितः पश्यति, तस्मात्, आद्यन्तयोरक्षरयोर्व्यत्यासेन पश्यकः कश्यप इति नाम्नाऽभिधीयते इत्यर्थः ।

निराकुर्वाणः कश्चन तद्विदामग्रे वेदस्वरूपानवबोधनिबन्धनं स्वीयं मौढ्यमेवाविष्करोतीत्यलम् ॥

## ( ७ )

### (दुराचारनिवृत्तये सदाचारप्राप्तये च पुनः पुनर्भगवानग्निः प्रार्थनीयः)

अतो दुश्चरितनिवृत्तिसाध्यं हि सुचरितम् । तन्निवृत्तिमन्तरेण तस्य लाभो न संभवति कथमपि, ततः सुचरितसिद्धिकामेन प्रथमं दुश्चरितस्य साधनीया निवृत्तिः, तथैव सिद्ध्यति सुचरितम् । तेन किल सम्पद्यते शोभनमुत्कृष्टं देवानुसरणशीलं प्रशंसनीयं जीवनम् । तादृशे तस्मिन्नेव शाश्वतः करकमलामलकवत्प्रत्यक्षः सिद्ध्यति मोक्षामृतानन्दानुभवः, तस्मादेवायं भवति कृतार्थः । अतः तादृशं जीवनं सम्पादयितुं मतिमता कर्त्तव्या दृढा प्रतिज्ञा, पुनः पुनः परमेशानः प्रार्थनीयः, प्रत्यश्च प्रयत्नो विधातव्य इत्याशयमभिव्यञ्जयन्नाह—

**ॐ परि माऽग्ने ! दुश्चरिताद्बाधस्वा मा सुचरिते भज ।**
**उदायुषा स्वायुषोदस्थाममृताँ॥ अनु ॥**

(शु य. ४ । २८ । श. ब्रा. ३ । २ । ६ । ११+१४)

हे अग्ने !=हे कृपालो ! जगदीश्वर ! मा=मां, दुश्चरितात्=पापसंकल्पात्—पापाचरणाच्च, परिबाधस्व=परि—सर्वतो निवारयेत्यर्थः । पापे संकल्पे कार्ये च मे मनसः इन्द्रियाणां शरीरस्य च प्रवृत्तिर्यथा मा भूत्तथा मां त्वं साधनसामर्थ्यसम्पादनेन कृपया परितः त्रायस्वेति यावत् । तथा सुचरिते=सदाचाररूपे शोभने चरिते पुण्ये कर्मणि शिवसंकल्पे च मा=मां त्वच्छरणापन्नमनन्यगतिकं, आभज=स्थापयेत्यर्थः । एवं प्रार्थ्य विशिष्टं जीवनं साधयितुं प्रतिजानीते—

उदायुषा=उत्—उत्कृष्टेन सत्यब्रह्मचर्यपरोपकारादिशोभनव्रतविशिष्टेन चिरजीवन-लक्षणेनायुषा निमित्तेन, तथा स्वायुषा=सु—यागदानादिविशिष्टेन शोभनेन प्रशंसनीयेनायुषा निमित्तेन, अमृतान्=देवान्—अमृतत्वसाधनदैवीसम्पद्विशिष्टान्—प्राज्ञान्—प्राप्तमोक्षामृतानन्दान्—सदेहान्—विदेहान् वा महापुरुषधौरेयाँश्च, अनु=अनुसृत्य, उदस्थाम्=अहमुत्थितवानस्मि, तिष्ठतेर्लुङि रूपम् । देवानां शिवसंकल्पसदाचारमयं जीवनं यापयितुं दृढां प्रतिज्ञां विधाय स्वाभ्युदयायाहमुत्थितोऽस्मि । अतो ममैतां कृपया त्वं हे दयालो ! सामर्थ्यप्रदानेन सफलां विधेहीति, पुनः पुनः प्रार्थनमिदमिति भावः । यद्वा यथाऽहं सुचरितसाम्येनोदायुषा स्वायुषा हेतुना, उत्=उत्कृष्टान्—निरतिशयान्, अमृतान्=मोक्षामृतानन्दान् अनु=अनुभवन्, अस्थां=सदा तिष्ठेयम् । तथा त्वं हे प्रणतपाल ! भगवन् ! तद्धेतुसम्पादनानुकूलो भव मां च कृतार्थय इति यावत् ॥

## (८)

### ( कल्याणमार्गस्वरूपस्य तल्लाभस्य च वर्णनम् )

वेदबोधिते—महद्भिः ऋषिमुनिवैश्चातिश्रद्धया सेवितेऽतिप्रशस्ते कल्याणमार्गे स्वच्छन्दतो गच्छन्तो मानवाः भवन्ति प्रसन्नाः पुष्टा आनन्दिनश्च । तेषां निखिला विघ्ना दोषाः सन्तापाश्च दूरे प्रपलायन्ते । यदभीप्सितं प्रकृष्टं प्रयोजनं तल्लभन्ते इत्याह—

> ॐ प्रति पन्थामपद्महि स्वस्तिगामनेहसम् ।
> येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥

( ऋ. अ. ४ । २९ । ऋ. म. १ । २ । ६ । १५+१६ ) ऋ. ६ । ५२ । १६ ।

## (९)

### ( प्रत्यगभिन्नब्रह्मस्वरूपस्य विचारचिन्तनोपदेशादिकं कर्तव्यम् )

अस्ति किमपि वेदादिशास्त्रतात्पर्यप्रतिपादितं विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजमजरममृतमभयं नित्यशुद्धबुद्धमुक्तस्वभावं पूर्णानन्दस्वरूपं चैतन्यं ज्योतिः सर्वप्रकाशकम् । 'अस्तीत्येवोपलब्धव्यः' (क. ६ । १०) इति श्रुतेः । अत एव तदनुमीयतेऽपि—यतो ज्ञानं विना देहेन्द्रियादयो घटपटादयश्चार्था न प्रतीयन्ते, तान्विनापि प्रतीयते द्रष्टृस्वरूपं ज्ञानम्, ततस्तेषामर्थानां, सत्ताप्रतीत्यो-र्नित्यसापेक्षत्वात्, तेभ्यो विविक्तो निरपेक्षमिद्धिक स्वयंज्योति स्वरूपोऽन्तरात्मा घटाद्भिन्नो घटद्रष्टेवाऽस्तीति । सोऽयमात्मा ग्राहकग्रहणग्राह्यविभागसाक्षित्वात् कारकादिहानोपादानसाक्षित्वाच्चाविभक्तः सर्वत्रानुस्यूतो हानोपादानवर्जितोऽस्ती-त्यप्यवगम्यते । यद्यप्ययं हानोपादानधर्मिणां बुद्धिवृत्तिसहस्राणां भावाभाव-साक्षितया तद्वृत्त्याऽपि न द्रष्टुं शक्यते, तथापि तस्य स्वशास्वतसत्ताप्रयुक्त-प्रकाशमानत्, देशादिव्यवधानाभावाच्चाप्रकाशो न युक्तः, तस्याप्रकाशे जगदा-न्ध्यप्रसङ्गात् । 'दृश्यते त्वग्र्यया बुद्ध्या' (क. १ । ३ । १२) इत्यनया श्रुत्या बुद्धिविषयतया तस्य दर्शनं भवतीति नाभिधीयतेऽपितु 'विज्ञातारमरे केन विजानीयात्' (बृ. ४ । ५ । १५) 'अप्राप्य मनसा सह' (तै. २ । ९) 'न विद्मो न विजानीमः' (के. १ । ३) इत्यादिश्रुत्येकवाक्य-तावलेन 'दण्डजन्यावरकपात्रध्वंसाभिव्यक्तप्रदीपस्य दण्डेन प्रकाश इव' अखण्ड-ब्रह्माकारया बुद्धिवृत्त्याऽविद्याद्यावरणनिवृत्तिमात्रेणाविषयस्य तस्य स्वतःप्रकाशस्य दर्शनमुपचर्यत इति विज्ञेयम् । अपि चैवंलक्षणोऽप्ययमात्मा सर्वेषां विविधानां स्फुरतां भावानां सत्तास्फूर्तिरूपः सन्नेकोऽपि नानारूपैः विजृम्भते, सोऽयमाऽ-

विद्यामप्याऽसर्वोऽपि सर्वः सन् अविग्रहोऽपि विविधदेवादिविग्रहः सन् विशृङ्खलं खेलति । एवंभूतं तमनिर्देश्यमचिन्त्यं स्वस्वरूपं त एव प्रभवन्ति साक्षात्कर्तुम् । ये खलु दम्भदर्पाद्यासुरीसम्पदो दूरे वर्तमानाः संमार्जितस्फटिकशिलाकल्पस्वच्छस्वान्ताः, रागद्वेषातिमहद्वडिशानाकृष्यमाणाः प्रत्यगात्ममात्रचिन्तनैकतानाः शास्त्राचार्यप्रसादभाजो भवन्ति, इत्यभिप्रेत्याह—

ॐ नमो मित्रस्य वरुणस्य चक्षसे
महो देवाय तदृतꣳ सपर्यत ।
दूरे दृशे देवजाताय केतवे
दिवस्पुत्राय सूर्याय शꣳसत ॥

( शु. य. ४ । ३५) ऋ. १० । ३७ । १ । तै. सं. १ । २ । ९ । १ । श. ब्रा. ३ । १ । २ । ४)

सूर्याय=चराचरात्मने '**सूर्य आत्मा जगतस्तस्थुषश्च ।**' (शु. य. ७ । ४२) (ऋ. १ । ११५ । १) इत्याम्नानात् । 'षू प्रेरणे ' सुवति—प्रेरयति कार्यकरणसंघातं स्वसत्तास्फूर्तिप्रदानेनेति, विशिष्य बुद्धिवृत्तीर्वेति सूर्यः '**धियो यो नः प्रचोदयात्**' (ऋ. ३ । ६२ । १०) इति गायत्रीश्रुतेः । तस्मै निखिलजडवर्गप्रवर्तकायाखिलबुद्धिवृत्तिसाक्षिणेऽन्तरात्मने नमः=सोऽहमस्मीति तदैक्यानुसन्धानपूर्वकं तदेकप्रवणतालक्षणः प्रह्वीभावो भवतु इत्यर्थः । किंलक्षणाय तस्मै इत्यत आह—मित्रस्य=रूपग्राहकस्य चक्षुरधिदैवतस्य सवितुः, वरुणस्य=रसग्राहकस्य रसनाधिदैवतस्य, चक्षसे=द्रष्टे—साक्षिणे—प्रकाशकाय—दर्शियरूपाय इतियावत् चष्टे—प्रकाशते—प्रकाशयतीति चक्षास्तस्मै इति व्युत्पत्तेः।'

यद्वा 'अयं वै लोको मित्रोऽसौ वरुणः' (शतपथ ब्राह्मण) इति श्रुतिवचनमनुरुध्य मित्रस्य=अस्य लोकस्य, वरुणस्य=अमुष्य लोकस्य चक्षसे परोक्षापरोक्षसर्वलोकप्रकाशनाय इत्यर्थः। उपलक्षणञ्चैतत् लोकिनामपि। तथा चाह श्रुत्यन्तरमपि—'**नान्योऽतोऽस्ति द्रष्टा**' (बृ. ३।७।२३) इति। अतः=अस्मात्—अन्तरात्मनोऽन्यो द्रष्टा नास्तीत्यर्थः। गीतावाक्यञ्च—'**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥**' (१३।३३) इति। यद्वा मित्रस्य वरुणस्येति चतुर्थ्यर्थे षष्ठ्यौ, मित्राय—जगतां हितकारिणे इत्यर्थः। वरुणाय=स्वसत्तया स्वस्फूर्त्या—स्वानन्देन च सर्वं जगदावृण्वते इत्यर्थः। वृणोति=आवृणोतीति वरुण इति व्युत्पत्तेः। पुनः कीदृशाय? महः=महसे—पूज्यतमायेत्यर्थः। 'सुपां सुलुक्' इति विभक्तिलोपः। मह्यते—पूज्यते देवैरपीति 'मह पूजायां' स्मरणात्। देवाय=द्योतमानाय—स्वयंप्रकाशस्वरूपाय। तथा दूरेदृशे=दूरे—रागद्वेषाद्यासुरीसम्पदो दूरे वर्तमानैः विवेकादिसाधनसम्पन्नैः शुद्धसत्त्वैः सूक्ष्मतत्त्वदर्शिभिः पण्डितैः दृश्यते—साक्षात्क्रियते, य इति दूरेदृक् तस्मै। '**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः**' (क. उ. १।३।१२) इति श्रुतेः। देवजाताय=जाताः समुत्पन्ना इन्द्रादयो देवा यस्मात्तः, तस्मै, सर्वदेवकारणायेति यावत्। देवशब्देन सर्वं जगल्लक्ष्यते, तस्य सर्वं जगत्कारणतायाः प्रसिद्धत्वात्। 'वाहिताग्न्यादिषु' इति सूत्रेण जातशब्दस्य परनिपातः। यद्वा देवानुग्रहाय रामकृष्णादिरूपेण जातो देवजातः, लीलया साकारविग्रहधारकायेति यावत्। केतवे=विज्ञानघनाय 'केतुरिति प्रज्ञा नाम' (नि. ३।८।१) यत्रैतदाम्नातं भवति—'**स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव।**'

(बृ. ४ । ५ । १४) इति । दिवस्पुत्राय=दिवः=स्वर्लोकान् तद्वास्तव्यदेवांश्च पुरु बहुकृत्वः त्रायते रक्षति इति दिवस्पुत्रस्तस्मै, दिवः पालकायेति यावत् ।' इत्येवं भूतैर्विशेषणैर्विशिष्टस्य सूर्यस्य प्रत्यगात्मनो मन्त्रदृक्कर्तृको नमस्पदगम्यः प्रह्वीभावो निरूपितः । अथेदानीं शिष्येभ्यो जिज्ञासुभ्योऽपि तमुपदिशति-हे श्रद्धालवस्तत्त्वबुभुत्सवः । तत्=प्रसिद्धं, ऋतं=सत्यं प्रत्यगभिन्नं ब्रह्मतत्त्वं, यूयं सपर्यत=परिचरत-परिसेवध्वं-सर्वात्मदृष्ट्या=परि-समन्ततो भजत इत्यर्थः । 'सपर्यतिः परिचरणकर्मा' (नि. ३ । ५ । ३) परिचरणं-सेवनं भजनमित्य-नर्थान्तरम् । अथैवं ब्रह्मात्मविद्वराणामाचार्याणां कर्तव्यमुपदिशति-शंसत, इत्यनु-वर्तते । शंसत=प्रशंसत यूयं विधिवदुपसन्नाय-उपरतदर्पादिदोषाय सर्वतो विर-क्ताय तत्त्वजिज्ञासवे शिष्याय जगज्जनिरक्षाप्रलयकर्तृत्वभक्तसंरक्षणधर्मसंस्थापकत्व-दुष्टनिबर्हणकर्तृत्वादिविशिष्टब्रह्मगुणानां, सत्यचित्सुखानन्दत्वाद्वैतत्वपूर्णत्वासङ्ग-त्वादिविविक्तप्रत्यगभिन्नब्रह्मगुणानाञ्च कथनरूपया स्तुत्या तमुपदिशत इत्यर्थः । यथावत्तदुपदेशं कुरुत इति यावत् । 'शंसु स्तुतौ' स्तुतिर्नाम गुणकथनम् । अविद्यामहोदधेः सद्ब्रह्मज्ञानप्लवेन सच्छिष्यनिस्तारणमाचार्यस्य ब्रह्मविद्गुरो र्नियमेनास्ति कर्तव्यमिति भावः ।

अथाधिदैवम्-परब्रह्मरूपेणादित्यमवगम्य नमस्कारं विविधविशेषणगम्य तत्स्तवनञ्च कृत्वा मन्त्रदृक् अन्येभ्यः कथयति-सूर्याय=प्रसिद्धाय-रश्मीनां प्राणानां रसानां स्वीकरणात्सूर्यः तस्मै समण्डलपुरुषाय नमः=नमस्कारः प्रण-तिपरम्परा भवतु । किम्भूताय मित्रस्य=मित्राय-विश्वहितकारिणे-वरुणस्य= वरुणाय-स्वरश्मिभिः सर्वं जगदावृण्वते-विश्वप्रकाशकायेत्यर्थः । चक्षसे=चष्टे पश्यतीति चक्षा तस्मै चक्षुष्मते सर्वं विश्वं पश्यते । महः=महसे-तेजोरूपाय,

देवाय=द्योतमानाय, दूरेदृशे=दूरे वर्तमानैः प्राणिभिः दृश्यत इति दूरेदृक् तस्मै । यद्वा पृथिव्या अतिदूरे स्थितोऽपि यः पश्यतीति दूरेदृक् तस्मै । देवजाताय=देवात्–द्योतमानात् परमेश्वराज्जायते सोऽसौ देवजातः तस्मै । केतवे=प्रज्ञारूपाय दिवस्पुत्राय=द्युलोकस्य पुत्राय द्युलोकात्सूर्यो जायते इति, प्रसिद्धम् । यद्वा पुत्रशब्दोऽपत्यार्थे यथा । एवंविधाय सूर्याय तत्=प्रसिद्धं ऋतं=सत्य अवश्यं भावित्वात्कर्मफलं तत्प्रसादावाप्तये समर्प्येति शेषः । हे मनुष्याः ! यूयं नमस्कारार्चनादिना यज्ञदानादिवैदिकशुभकर्मानुष्ठानेन स्ववर्णाश्रमधर्मानुष्ठानेन च सपर्यत=सपर्यां सेवां कुरुत, सूर्यकृपालाभाय फलसमर्पणेन शुभकर्मानुष्ठानं कुरुत इति यावत् । यद्वा तत्=ऋतं सूर्यरूपं सत्यं ब्रह्म सपर्यत–परिचरत–परिभजत इत्यर्थः । तथा शंसत=सूर्यं स्तुत प्रशंसत, वेदमन्त्रादिना तस्य पुनः पुनः स्तुतिं कुरुत इति यावत् ॥ '

## ( १० )

### ( अनन्तापारपराक्रमशालिनो भगवतो विष्णोः परममहत्त्ववर्णनम् )

सर्वो लोकस्तावत्पश्यति–प्रभूताश्चर्यास्पदामतिकुशलशिल्पिसहस्रैर्मनसाऽप्यचिन्त्यरूपां विचित्रामिमां चराचरजगद्रचनाम् । दृश्यमानेयं न खल्वचेतनकर्तृका कर्हिचिदुपपत्तुमर्हति, लोकेऽदृष्टत्वात्, दृष्टानुसारित्वाददृष्टकल्पनायाः । यत्कारणमचेतनं न चेतयते किञ्चित्, अचेतयमानस्य च स्फुटा प्रवृत्त्यनुपपत्तिः, तदनुपपत्त्या च सुतरां रचनानुपपत्तिः । चेतना. पुनर्जीयमानोऽल्पज्ञ नाऽल्पशक्तिवान्यां न तां कथञ्चिद्विधातुमीशते । तस्मादभ्युपगम्यतेऽनुमीयतेऽस्ति कश्चित्सर्वज्ञः सर्वशक्तिश्चेतनो जगदीश्वरो येनेयं संकल्पमात्रेणायत्नेनाऽमुना विविधा जगद्-

चना विहिता च विधीयते च। अपि च विचित्ररचनाश्रया इमा वियदादिसृष्ट्यो विचित्रशक्तियोगात्परमदेवोद्भवन्त्यः तस्मिन्नेव परमेश्वरे तद्वास्तविकं स्वरूपमनुपमृद्यैव तिष्ठन्ति, पुनश्चान्ते तस्मिन्नेवापियन्ति, यथा जीवात्मनि विचित्राः स्वाप्नरथादिसृष्टयः, यथा च मायाविनि विचित्रा हस्त्यश्वादिसृष्टयः तस्मादेव विचित्रशक्तियोगादुद्भवन्त्यः स्वरूपानुपमर्देनैव तस्मिन्नेव तिष्ठन्ति पुनश्चान्ते तस्मिन्नेवापियन्ति, तथा च सर्वसृष्टुः सर्वाधारस्य तस्याभिन्ननिमित्तोपादानकारणत्वं व्यापकत्वमविक्रियत्वं पारमार्थिकसत्त्वं चास्य स्फुटमवगतं भवति। तस्यैतस्य भगवतोऽतिविस्मयकराणि तन्महामहत्त्वव्यापकान्यनन्तान्यपाराणि वीरकर्माणि श्रवणकीर्तनादिना स्मारंस्मारं मतिमन्तोऽतितिष्ठः तस्मिन्नेवातिभक्तिभराः सततं तन्मनस्काश्च भवन्तीत्यभिप्रेत्य लोकहितमुद्दिश्य मन्त्रदृष्टा तान्यभिधत्ते—

ॐ विष्णोर्नु कं वीर्याणि प्र वोचं<br>
यः पार्थिवानि विममे रजांसि।<br>
यो अस्कभायदुत्तरं सधस्थं<br>
विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा॥

(ऋ. म. ५। १८। ऋ. १। १५४। १। अथर्व. ७। २६। १। तै. स. १। २। १३। २। श. ब्रा. ३। ४। ३। २१)

'विष्णवे त्वा' इति यजुः, न ऋक्। विष्णोरेव=व्यापनशीलस्यैव=परमात्मनः, वीर्याणि=दिव्यपराक्रमयुक्तानि=शोभनकर्माणि=श्रवणकथनस्मरणादिभिः पावनकराणि=तन्महामहत्त्वसूचकानि=तस्मिन्नतिभक्तिवर्धकानि, अहं मन्त्रद्रष्टा प्रवोचं=प्रवदामि कथयामीतियावत्। प्रपूर्वस्य वचेर्लुङि वचेरुम्—अडभावः। नुकमिति निपातद्वयं अवधारणार्थकं क्षिप्रार्थकं वा। कानि वीर्या-

णीत्याह—योऽनन्तवीर्यो विष्णुः स्वविचित्रशक्त्या पार्थिवानि=पृथिव्युपलक्षितानि —सर्वाणि—पृथिव्यन्तरिक्षादीनि रजांसि=लोकस्थानानि—विममे=निर्ममे निर्मितवानित्यर्थः रचितवानितियावत् । 'लोकाःरजांस्युच्यन्ते' ( नि. ४ । १९ ) इति यास्कोक्तेः । रजःशब्दो लोकवाचकः । यद्वा 'तिस्रो भूमीः' ( ऋ. २ । २७ । ९ ) इति मन्त्रवर्णे एकैकस्य लोकस्य त्रित्वसंख्यायाः श्रवणात्, 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐ.ब्रा. २ । १७ ) इत्यत्र ब्राह्मणे एकैकस्य त्रिवृत्करणश्रवणाच्च 'द्वितीयस्यां पृथिव्यां तृतीयस्यां पृथिव्यां' ( तै. सं. १ । २ । १२ । १ ) इत्यत्र पृथिव्याः अनेकविधत्वश्रवणाच्च पार्थिवानीत्यत्र पृथिवीपदेन पृथिव्यन्तरिक्षद्युलोका उच्यन्ते । तेषु पृथिवीपदगम्येषु त्रिषु लोकेषु भवानि रजांसि=ज्योतींषि—अग्निविद्युत्सूर्यात्मकानि पार्थिवानि कथ्यन्ते पृथिवीशब्दाद्भवार्थेऽण्प्रत्ययः, तानि विममे=निर्मितवान् । यद्वा यो भगवान् सर्ववेदनशक्त्या पार्थिवानि—रजांसि=पार्थिवपरमाणून् विममे= परिगणितवान्, अनेन भगवतस्तस्यासंभवसंभवकरणसामर्थ्यं सूचितं भवति, यश्च विष्णुः—उत्तरं=उपरितनं, सधस्थं=देवानां सहवासस्थानं द्युलोकादिरूपं, अस्कभायत्=यथाऽधो न पतेत्, तथा स्तम्भितवान्—अधारयदित्यर्थः 'स्कम्भरोधने' सह देवाः तिष्ठन्ति यस्मिन् तत्सधस्थम् । सहस्य सधादेशः । यद्वा उत्तरं=उत्कृष्टतरं सर्वेषां लोकानामुपरिगतम् । अपुनरावृत्तेः तस्योत्कृष्टत्वम् । सधस्थं=उपासकानां सहस्थानं—सत्यलोकं, अस्कभायत्=स्कम्भितवान्—ध्रुवं स्थापितवानित्यर्थः । अथवा यो विष्णुः पार्थिवानि=पृथिवीसंबन्धीनि रजांसि= पृथिव्या अधस्तनसप्तलोकानित्यर्थः; विममे=विविधं निर्मितवान् । किञ्च यश्चोत्तरं=उद्गततरं—उत्तरभाविनं सधस्थं=सहस्थानं—पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकं अस्कभायत्=स्कम्भितवान् सृष्टवानित्यर्थः । त्रेधा विचक्रमाणः=

त्रिप्रकारं स्वपृथग् लोकान् विविधं क्रममाणः, विष्णोस्त्रेधा क्रमणं 'इदं विष्णुर्विचक्रमे त्रेधा' ( ऋ. १ । २२ । १७ ) इत्यादिश्रुतिषु प्रसिद्धम् । यद्वा त्रेधा विचक्रमाणः=त्रिषु भूरादिषु लोकेषु अग्निवायुसूर्यरूपेण पदत्रयं निदधान इत्यर्थः । यद्वा त्रिविक्रमावतारं धृत्वा वामनरूपो विष्णुः, तथा चाम्नायते 'वामनो ह विष्णुरास' ( श. ब्रा. १ । २ । ५ । ५ ) इति । त्रिषु पृथिव्यन्तरिक्षस्वर्गाख्येषु लोकेषु त्रेधा विचक्रमाणः=पादत्रयं निदधानः—त्रिभिः पादन्यासैः तान् लोकान् आक्रममाणोऽद्भुतचरितो विश्वकायो विराड्रूपो भगवान् उत्तरं=सर्वोपरितनं—सधस्थं ब्रह्मलोकमपि अस्कभायत=अवरुद्धवान् इत्यर्थः । य एवं साश्चर्यरचनं विश्वं स्तोतव्यमद्भुतं चरितञ्च कृतवान् तादृशस्य विष्णो वीर्याणि प्रवोचमिति पूर्वेणान्वयः । एतेन भगवतस्तस्य सर्वशक्तिमत्त्वं सर्वविश्वं च सूच्यते । अतएव स उरुगायः=यस्यामृतसारवद् भूयोभूय आस्वाद्यमनन्तमपारं मोक्षसाधनं दिव्यं यशः उरुभिः=भूयोभिः श्रुत्यादिभिर्महात्मभिर्विद्वद्भिश्चाजस्रं गीयते सोऽसौ, अतिप्रभूतं स्तूयमानो भगवान् 'उरुगायः' इति नाम्नाऽभिधीयते । तदुक्तमभियुक्तैः—'नारायणस्य महिमानमनन्तपारमास्वादयन्नमृतसारमहं नु मुक्तः ।' इति । इमं मन्त्रं कथञ्चिदनुवदन्तो भगवन्तो बादरायणाचार्या भागवतपुराणे प्राहुः—'विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि । चस्कम्भ यत्स्वरंहसा स्खलता त्रिपृष्ठं यस्मात्त्रिसाम्यसदनादुरुकम्पयानम् ॥' ( भा. २ । ७ । ४० ) इति । एवंभूताय विष्णवे=विश्वव्यापकाय—विश्वरूपाय—विश्वेश्वराय सर्वात्मभावेनानुसन्धेयाय तस्मै भगवते तद्भावापत्त्यर्थं हे मनः ! त्वां=त्वा समर्पयामीतिशेषः । मनःसमर्पणेनाप्यकल्याणसम्भवात्, यतोऽभिहितं 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।' ( त्रा. उ.

५ । ७ ) इति । संसारे निवेशितं मनो बन्धकारणं परमात्मनि निवेशितञ्च सद्विमुक्तिकारणं भवतीति भावः । तदेतत्स्मृतं भवति गीतासु भगवता वेदपुरुषेण 'मय्येव मन आधत्स्व' ( गी. १२ । ८ ) इति । 'मन्मना भव' ( ९ । ३४ ) 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।' ( १२ । २ ) इति च । यदाहुर्मधुसूदनस्वामिपादाः—'सदा सदानन्दपदे निमग्नं मनो मनोभावमपाकरोति । गतागतायासमपास्य सद्यः परापरातीतमुपैति तत्त्वम् ॥' ( गी. गू. दी. ) इति । अस्कभायदिति—'स्कम्भु रोधने' 'क्र्यादिभ्यः श्ना' 'हलः श्नः शानज्झौ' इति हेरनुवृत्तौ 'छन्दसि शायजपि' इति । यद्यपि हौ परे श्नाप्रत्ययस्य शायजादेशोऽविहितस्तथाप्यत्र 'व्यत्ययो बहुलम्' इति लङ्यपि श्नः शायजादेशो अस्कभायदिति रूपम् । विचक्रमाणः इति विपूर्वस्य क्रमतेः 'लिटः कानज्वा' इति कानचि रूपमिति ।

## ( ११ )

### ( धनप्राप्तये भगवतो विष्णोरभ्यर्थनम् )

धर्मादिलाभप्रयोजनस्य लौकिकस्य धनस्य प्राप्त्यर्थं याचककल्पद्रुमं भगवन्तं विष्णुं सकामा अभ्यर्थयन्ते—

ॐ दिवो वा विष्ण उत वा पृथिव्या
महो वा विष्ण उरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ
दक्षिणादोत सव्यात् विष्णवे त्वा ॥
( शु. य. ५ । १९ । श. ब्रा. ३ । ५ । ३ । २२ )

हे विष्णो ! दिवः=द्युलोकात्, उत=अपिच, पृथिव्याः=भूर्लोकात्, वा=अपिच महो=महतः, उरो=विस्तीर्णात् अन्तरिक्षात्–अन्तरिक्षलोकाद्वा, एतेभ्यः त्रिभ्यो लोकेभ्यः, अन्यतो वा यतः कुतश्चित् समानीतेन वसुना=द्रव्येण धनेन, उभा हि हस्ता=उभावपि स्वकीयौ हस्तौ पृणस्व=पूरयस्व, ततो धनपूर्णाद् दक्षिणादुत सव्यात्=वामाद्धस्तात्, उभाभ्यां हस्ताभ्यां आप्रयच्छ=बहुकृत्य आवृत्याऽनुरागतया प्रकृष्टं मणिमुक्तास्वर्णादिकं धनमस्मभ्यं धार्मिकेभ्यः सुनीतिमद्भ्यः परोपकारपरायणेभ्यो देहीत्यर्थः । विष्णवे=विष्णुप्रीत्यर्थं हे धन ! त्वा=विष्णुप्रसादलब्धं त्वां वयं सत्कार्यसिद्ध्यर्थं वितरिष्याम इति प्रतिजानीमहे इति शेषः । भगवत्कृपया हि धनं लब्ध्वाऽऽपातरमणीयेषु रोगादिदुःखजनकेषु क्षणभङ्गुरेषु विषयभोगेषु 'विट् गर्ते शूकरादिवत्' समासक्तिर्न विधेया, वृथाभिमानोऽपि न कार्यः, पापकार्ये तं कथमपि न योजयेत्, यथामर्यादं तेन स्वस्वकीयनिर्वाहं कुर्वन्–परिशिष्टेन यज्ञहोमादिरुग्णदरिद्रदेशसेवादिप्रशस्तकार्याणि साधयेत्, यतो देवदुर्लभस्य पुण्यफलस्य मोक्षद्वारस्य मनुजदेहस्य धर्मसञ्चयादेवास्ति साफल्यम्, धर्महीनो धनलाभो विमोहाय, विमोहो नरकाय च प्रभवतीति ध्येयम् । तदुक्तं–'धनेन च शरीरेण प्रतिक्षणविनाशिना । ध्रुवं यो नार्जयेद्धर्मं सशोच्यो मूढचेतनः ॥' इति । अनेन मन्त्रेण परोपकारादिधर्मसञ्चयमुद्दिश्य कियत्कालं भगवन्तं चिन्तयतः प्रार्थयतो यथायोग्यं लौकिकप्रयत्नमपि कुर्वतो-मनुजस्य धनलाभो भवतीति ज्ञेयम् ॥

## ( १२ )

### ( अखिलशासकस्य निखिलभूताधिवासस्य भगवतो विष्णोर्महिम्नः स्तुतिः )

यो ह्यनाकारः परमेश्वरः स एव मायया नानाकार इव प्रतीयते, तत्रापि

विशुद्धसत्त्वन्मायोपाधिमङ्गीकृत्य लोकानुजिघृक्षया वामननृसिंहादिनानावतारान् गृहीत्वा देहवानिव जात इव च लक्ष्यते । तथापि नायं परिणामी भवितुमर्हति येन तत्रानित्यत्वादिक प्रसज्येत । तर्हि कुतो नानावताराकारा ? ते किं त्वया स्वरूपे मन्यन्ते ? हन्त भो ! उपाध्याविद्धास्ते । यथा वारि चतुष्कोणे चतुष्कोणं, वृत्ते वृत्तं लम्बे च लम्बं, वस्तुतो न वारिण्याकाराश्चतुष्कोणादयः । वारि तथा तथोपाधिधर्माविद्ध दृश्यते । दृश्यतां किं तेन ? तथा शुद्धसत्त्वाद्युपाधिधर्माविद्धा नानावताराकारा, न स्वरूपस्यानाकारस्य । तथा च स्वेच्छानिर्मितेन मायामयेन विविधेन दिव्येन विग्रहेणानेकशक्तिमान् सर्वलोकशासको निखिलभूताधिवासः परमस्वतन्त्रो मायापतिर्भगवान् लोकानुग्रहाय स्वोत यानि दिव्यानि पावनानि चरितानि वितनोतीत्यभिसन्धाय तस्य महिमानं स्तुवन्नाह—

ॐ प्र तद्विष्णुः स्तवते वीर्येण मृगो
न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति
भुवनानि विश्वा ॥

( शु. य. ५ । २० ) ( ऋ. १ । १५४ । २ ) ( अथर्व ७ । २६ । १+२ ) ( तै ब्रा २ । ४ । ३ । ४ ) ( श ब्रा ३ । ४ । ३ । २१ )

तत्=स प्रसिद्धो विष्णुः, लिङ्गव्यत्यय, वीर्येण=असाधारणेन—स्वकीयेन दिव्यवीरकर्मणा निमित्तेन स्वमहिम्नेति यावत् । प्रस्तवते=प्रस्तूयते, स्तौतेः कर्मणि व्यत्ययेन यकः स्थाने शप् छा दस., 'नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे । विश्वस्य सर्गस्थितिसंयमान् गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥' (भा. ७ । ८ । ४०) इत्या-

दिना वचःपुञ्जेन सर्वैर्ब्रह्मदेवादिभिरपीति शेषः। प्रकर्षेण स्तूयमानो विष्णुः किम्भूत इत्यत आह—मृगः=म्रष्टि—शोधयति स्वध्यायिनां स्वान्तानिति मृगः—स्वयंशुद्धोऽपहतपाप्मा भगवान् परानपि केनापि भावेन स्वाभिमुखमागतान्—शुद्धान्—कल्याणभाजो विदधातीत्यनेन तस्यानुपमेयदयालुत्वं सूच्यते। 'मृजूष् शुद्धौ'। तदुक्तं—'अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी। लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम॥' (भा. ३। २। २३) इति। 'न' इत्यनर्थको निपातः पादपूरणः। पुनः कीदृशः? भीमः=बिभ्यति बिभेत्यस्मादसौ भीमः, सर्वं हि जगद्भयवद् दृश्यते, तस्माज्जगतो भयदर्शनाद्विज्ञायते नूनं भयकारणमस्ति तस्य प्रशास्तृ भगवानन्तदिव्यपराक्रमवत्। तत्रैतदाम्नातं भवति—'विश्वे देवा अनमस्यन् भियानास्त्वामग्ने! तमसि तस्थिवांसम्।' (ऋ. ६। १०। ७) इति। हे अग्ने! परमेश्वर! तमसि=अन्धकारेऽज्ञानलक्षणे पटावरणे इव तस्थिवांसं=स्थितवन्तं अदृश्यरूपेण वर्तमानं त्वां भगवन्तमवगत्य त्वत्तो भियानाः=भीताः सन्तः विश्वे देवाः=सर्वे देवाः सूर्यादयः अनमस्यन्=नमस्कुर्वन्ति इत्यर्थः 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम॥' (तै. उ. २।८) इति। पुनः किंभूतः? कुचरः=कौ—पृथिव्यां रामकृष्णादिविविधावताररूपेण चरतीति कुचरः। गिरिष्ठाः=गिरि—वेदवाण्यां प्रतिपाद्यत्वसम्बन्धेन तिष्ठतीति गिरिष्ठाः—सर्ववेदवेद्य इति यावत्। यद्वा गिरौ—कैलासे श्रीशङ्कररूपेण तिष्ठतीत्यनेन गिरिशकेशवयोरैक्यं सूचितं, तत्रैतत् स्मृतं भवति—'रुद्राणां शंकरश्चास्मि' (गी. ११। २३) इति। 'यो विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः। इति मत्वा भजेद्देवं स याति परमां गतिम्॥' इति कूर्मे स्मरणात्। यद्वा देहोऽपि गिरिरुच्यते तस्मिन् प्रत्यगात्मतया तिष्ठतीति गिरिष्ठाः।

अथवा वीर्येण स्तूयमानत्वे दृष्टान्तः, न इवार्थः । मृगो न=सिंह इव, भीमः=भयङ्करः सन् स्तम्भगर्भान्नृसिंहावतारं धृत्वा प्रह्लादस्य भक्तस्य परित्राणाय दुष्टस्य हिरण्यकशिपोर्विध्वंसनाय च यो भगवान् कुचरः=धराधामसंचारी सन् स्वकार्यं विधाय पश्चात् यो गिरिष्ठाः=सिंहगिरिनिवासी बभूवेति । तदुक्तं चित्सुख-मुनिना—'स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्यातत्तद्वैभवो, यः पाञ्चा-ननपाञ्चजन्यवपुषा व्यादिष्टविश्वात्मतः । प्रह्लादाभिहितार्थतत्क्षण-मिलद्दृष्टप्रमाणो हरिः । सोऽव्यान्नः शरदिन्दुसुन्दरतनुः सिंहाद्रिचूडा-मणिः ॥' (चित्सुखी तत्त्वप्रदीपिका) इति । एवं स विष्णुः नरहर्यवतारस्य वीर्येण=अद्भुतपराक्रमप्रतिपादकेन तत्स्तवनात्मकेन—'नमो भगवते तुभ्यं पुरुषाय महात्मने । हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥' (भा. ७ । १० । १०) इत्यादिना वचनजातेन स्तूयत इत्यन्वयः, विषयेण विषयिलक्षणात् वीर्यं तद्बोधकवचःपरमत्र ज्ञेयम् । उपमार्थकोऽत्र नकारः, यथा स्वविरोधिनो मृगयिता—अन्वेष्टा सिंहः भीमः=भीतिजनकः कुचरः=कुत्सितहिंसादिकर्ता, दुर्गमप्रदेशगन्ता वा गिरिष्ठाः=पर्वताद्युन्नतप्रदेशस्थायी सन् वीर्येण स्तूयते । तद्वदयमपि मृगोऽन्वेष्टा शत्रूणामसुराणां भीमो भयानकः सर्वेषां भीत्यपादानभूतः 'रक्षांसि भीतानि दिशो द्रवन्ति' (गी. ११।३६) इति स्मरणात् । कुचरः=शत्रुवधादिकुत्सितकर्मकर्ता, कुषु=सर्वासु भूमिषु लोकत्रये वा संचारी । तथा गिरिष्ठाः=गिरिवदुच्छ्रितलोकस्थायी । यद्वा गिरि=मन्त्रादिरूपायां वाचि सर्वदा वर्तमान इत्यर्थः । यस्य विष्णोः—उरुषु लोकत्रय-व्यापकत्वेनातिविस्तृतेषु त्रिषु विक्रमणेषु—पादप्रक्षेपणेषु विश्वा=विश्वानि=सर्वाणि—भुवनानि—चराचरभूतजातानि, अधिक्षियन्ति=अधि—आश्रित्य—निवसन्तीत्यर्थः । 'क्षि निवासे'। सः—सर्वलोकव्यापकः सर्वभूताधारो विष्णुः स्तूयते इत्यन्वयः । अथवा कुचरो भूमौ वर्तमानो भीमो भयङ्करो मृगो न=सिंहो यथोर्ध्वमुत्प्लुत्य

गिरिष्ठाः=पर्वतस्थो भवति । तथा यस्य विष्णोः पूर्वं वामनस्य पश्चात् त्रिविक्रमत्वं गच्छन उरुषु विस्तीर्णेषु त्रिषु विक्रमणेषु स्थित्वा भुवनानि—सर्वे लोका भूरादयः, अधिक्षियन्ति—अभिनिवसन्ति, स विष्णुः—स्तूयते इत्यन्वयः । यद्वा यद्यपि मृगः=सिंहो विष्णुः दुष्टानां कृतेऽस्तीति शेषः । तथापि भक्तानां कृते तु न भीमः न भयङ्करः । अपि तु परमसौम्य प्रसादाभिमुख एव । अत्र नकारो निषेधार्थो, न तूपमार्थः । कुचरः=कुत्रायं न चरति ? अपितु सर्वदेवविग्रहेषु लीलया स्वयं विचरति, सर्वदेवलीलाविग्रहधारीत्यर्थः । यदाह यास्कः—'अथ चेत्—देवताभिधानम्, क्वायं न चरतीति' (नि. १ । २०) स्वशक्त्या सर्वत्र चरतीत्यभिप्राय. । गिरिष्ठाः=गिरिषु वाग्रूपासु स्तुतिषु यद्रूपमभिलषन् स्तोता भक्तः कामयते, तत्तद्रूपं स्वस्मिन् स्थापयतीत्यर्थं । अत एव यस्य त्रिषु विक्रमणेषु=विग्रहेषु—विविधं क्रमणं—विक्रमणं तेषु महाविष्णुमहेश्वरात्मकेषु इत्यर्थः शिष्टं समानम् ॥

# ( १३ )

## ( विष्णुभक्तस्य भगवत्प्रियत्वतन्महत्त्वादिवर्णनम् )

भगवति वासुदेवे विष्णौ शुद्धे ब्रह्मणि समर्पितमनसो ज्ञानिनो भक्तस्य भगवत्प्रिय त्वतन्महत्त्वतद्भेदसम्बन्धादिकं बुबोधयिषुः परमगम्भीरः परमहितैषी च भगवान् वेदस्तं प्रस्तौति—

ॐ विष्णो रराटमसि विष्णोः
श्नप्त्रे स्थो विष्णोः स्यूरसि ।
विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा ॥

(शु. य. ५ । २१ । श. ब्रा. ३ । ४ । ३ । १४-२५)

हे भक्त ! तत्त्वदर्शिन् ! विष्णोस्त्वं रराटमसि=रराटयोरभेदात्, ललाटस्थानीयो भवसि। यथा ललाटमुत्तमाङ्गमतिप्रियं सर्वतो रक्षणीयश्च भवति, यद्वाऽसीति पुरुषव्यत्ययेनास्तीति ज्ञेयम्। तथा तत्स्थानापन्नो वीतरागो ज्ञानी भक्तोऽपि तथैवावगन्तव्यः। तत्रैतत्स्मृतं गीतासु भगवता—'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।' (गी. ७। १७) 'ज्ञानी त्वात्मैव मे मतम्।' (७। १८) इति। निराकारस्य विष्णोरवयवाभावेऽपि साकारस्य मायिकदिव्यविग्रहवतः चतुर्भुजत्वादिविशिष्टमूर्तिधरस्य तस्य विष्णोर्ललाटावयवस्य सद्भावात्तदुपमानमत्रासंभवानान्तम्। एवमेकाकिनं विरक्तं ज्ञानिनं भक्तं प्रशस्य स्त्रीपुरुषात्मकं गृहस्थदम्पतिभक्तयुगलमपि प्रशंसति—युवा मिथ एकाङ्गत्वमापन्नौ विष्णुसेवनार्चनतत्परौ सदाचारसद्विचारादिकल्याणगुणसमलङ्कृतौ युगलभक्तौ विष्णोः श्नप्त्रे स्थ=ओष्ठसन्धिरूपे भवथ, यथा श्नप्त्रे—सृक्किणी—ओष्ठप्रान्तभागौ रसनयाऽऽर्द्रीभूते प्रशस्तेऽभिवर्तेते, तथाऽनयोरपि हृदये भगवत्प्रेम्णा सदा द्रवीभूतेऽनुरञ्जितेऽभिवर्तेतेऽत एव तदुपमया तावपि प्रशस्येते। यतः सततं कीर्तनश्रवणादिभक्तियोगेन द्रुते हृदये द्रुतलाक्षालक्षवत्प्रविष्टः परमानन्दरूपो भगवान् पुष्कलं तदाकारतामेति। अत आनन्दरससम्प्लुतं तद्धृदयमतिप्रशस्तं तद्वन्तौ तावपि च श्नप्त्रत्वेनात्र वर्ण्येते। सम्प्रति भगवद्भक्तयोरभेदसम्बन्धं दर्शयति—त्वं विष्णोः स्यूरसि=तत्र स्यूत.—अनुस्यूतोऽसि तन्तुषु पट इव, अत एव विष्णोर्ध्रुवोऽसि=अभेदेन तत्र ध्रुव इवाचलप्रतिष्ठितोऽसि, अत एव वैष्णवमसि=वैष्णवं यत् स्वरूपं तत्त्वमसि। तथा च श्रुत्यन्तराण्यपि—'अयमात्मा ब्रह्म' (बृ. उ. २। ५। १९) 'तत्त्वमसि' (छां. ६। ८। ७) इत्यादि लक्षणानि स्फुटमिममर्थं समर्पयन्ति। तदुक्तं भागवतेऽपि भगवता हंसाख्येन जीवं पुरञ्जनं प्रति स्वाभेदमुपदिशता—'अहं भवान् नचाऽन्यस्त्वं त्वमेवाहं

विचक्ष्व भोः ।। न नौ पश्यन्ति कवयो जातु छिद्रं मनागपि ॥ यथा पुरुष आत्मानमेकमादर्शचक्षुषोः । द्विधाभूतमवेक्षेत तथैवान्तरमावयोः ॥ एवं स मानसो हंसो हंसेन प्रतिबोधितः ॥' (४ । २८ । ६२+६३+६४) इति । एवं भक्तप्रवरो नारदोऽपि सूत्रयामास 'तस्मिन् तज्जने च भेदाभावात्' (१४) इति । अतो विष्णवे त्वा=विष्णौ त्वां--विभक्तिव्यत्ययः, समर्पयामीत्यभ्याहृत्य लोकगुरोर्मन्त्रदृशो वचनमिदम् । विद्ययाऽविद्याद्यावरणनिवृत्त्या जुहोमि 'जलराशौ बिन्दुमिव' 'अग्नौ हविरिव' इति यावत् । तथा चाम्नायते--आथर्वणे--' तं त्वा प्रपद्ये तं त्वा प्रविशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मेऽस्ति तेन ।' (५। ६ । १२ ।) इति । अस्माद्विष्णोः स्वात्मभेदमपाकृत्य विष्णुर्भूत्वा विष्णुर्यष्टव्यः इत्यप्यवगम्यते । अत एव यत्रैतानि स्मार्तानि वचांसि सूक्तानि भवन्ति--' देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् । येन केन प्रकारेण भेदभावं विवर्जयेत् ॥ 'नाविष्णुः कीर्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् । नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयात् ॥' इति भारते शांतिपर्वणि । 'अविष्णुः पूजयन् विष्णुं न पूजाफलभाग्भवेत् । विष्णुर्भूत्वा यजेद्विष्णुमयं विष्णुरहं स्थितः ॥' इति । यद्यपि याज्ञिकैरस्य मन्त्रस्य यज्ञहविर्धानाख्यशकटखण्डपादिकमभिलक्ष्य तत्परत्वेन व्याख्यानं विहितं तथापि वेदमन्त्राणां सर्वतोमुखत्वमनुसृत्य सिद्धान्तानुकूल्याक्षरानुगुण्याभ्यामेवं समाधिभाषया व्याख्यातुं प्रयतितमित्ययापि स्याच्चेदयमविनयो विद्वद्भिः क्षन्तव्य एवेति ।

## ( १४ )

### ( ब्रह्मात्मस्वरूपस्य वर्णनम् )

मन्त्रद्रष्टा ब्रह्मात्मस्वरूपं वर्णयति–

ॐ विभुरसि प्रवाहणः वह्निरसि हव्यवाहनः ।
श्वात्रोऽसि प्रचेताः तुथोऽसि विश्ववेदाः ॥
( शु. य. ५ । ३१ )

विभुरसि=हे सर्वान्तरात्मन् ! परमात्मदेव ! त्वं विभुः—व्यापकः परममहत्त्ववानसि, गङ्गाह्रदनिमग्नस्य युगपत्सर्वाङ्गीणशैत्योपलम्भाभावप्रसङ्गात् नात्मनोऽणुत्वम् । सावयवत्वोपचयापचयत्वानित्यत्वादिदोषप्रसङ्गात्; नात्मनो देहपरिमितमध्यमपरिमाणत्वञ्च मन्तव्यं, परिशेषाद्विभुत्वमेव निश्चेतव्यम् । अत एव 'स वा एष महानज आत्मा योऽयं विज्ञानमयः' (बृ. ४ । ४ । १२ ) 'महान्तं विभुमात्मानं' (क. १ । २ । २१ ) 'नित्यः सर्वगतः स्थाणुः' ( गी. २ । २४ ) 'येन सर्वमिदं ततम्' ( गी. २ । १७ ) 'सर्वभूतेषु चात्मानम्' ( मनु. १२ । ९१ ) इत्येवं जातीयका आत्मचैतन्यस्य विभुत्वप्रतिपादनपराः श्रुतिस्मृतिवादा समर्थिता—भवन्ति । परब्रह्मण एव संघाते प्रवेशश्रवणात्, ब्रह्मात्मनोरभेदोपदेशाच्च नास्त्यात्मभेदः, अत एव यावत्परं ब्रह्म, तावानेव जीवात्मा भवितुमर्हति । ब्रह्मणो विभुत्वं निश्चितं चेत्तदा जीवात्मनोऽपि । 'अणोरणीयान्' ( कठ. २ । १ । २० ) इत्याद्या श्रुतिस्तु 'महतो महीयान्' । ( कठ २ । १ । २० ) इति वाक्यशेषात् । 'महानजः' ( बृ. ४ । ४ । १२ ) इत्यादि श्रुत्यन्तराच्च दुर्ज्ञेयत्वसूक्ष्मत्वमात्रपरा, नाणुत्वपरा । न च 'एषोऽणुरात्मा' ( मु. ३ ।

१ । ९ ) 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥' (श्वे. ५ । ९) इत्यादिश्रुत्या जीवात्मा ऽणुः सिद्ध्यतीति वाच्यम्। यतस्तत्र हि बुद्ध्याद्युपाधिप्रयुक्तस्यौपचारिकस्याणुत्वस्य पारमार्थिकस्यानन्त्यस्य च प्रतिपादितत्वात् । 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः । ' (श्वे. ६ । ८) इति श्रुत्या बुद्धिगुणेन—मध्यमपरिमाणेन, आराग्रमात्रत्वस्य; आत्मगुणेन—अपरिच्छिन्नविभुत्वेन—अवरत्वस्य, 'नास्ति वरो महान् यतः सोऽसौ अवरः' इति व्युत्पत्तिगम्यस्य स्वाभाविकसर्वमहत्तरस्य प्रतिपादितत्वाच्च नाणुत्वसिद्धिः। 'एषोऽणुरात्मा' मु. ३। १। ९। इत्यत्रापि परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वाद्धेतोर्न जीवस्यात्मनोऽणुपरिमाणत्वमुपदिश्यते। तस्मात्त्वं विभुरसीत्यनेन सर्वान्तरात्मनो विभुत्वेन वर्णनं सुसंगतमित्यवगन्तव्यम् । यद्वा व्यापकत्वाद्विया-धिष्ठानत्वाच्च विविधं देवादिरूपेण भवतीति विभुः। तथाचाम्नायते—'ॐ तत्सत्यं, ॐ तद्ब्रह्म, ॐ तद्वायुः, ॐ तदात्मा, ॐ तत्सर्वं, ॐ तत्पुरो नमः । अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्वꣳ रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः । त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् । ' (कृ. य. तै. आ. १० । ६८) इति ॥ अस्यायमर्थः—तत्=वेदवेदान्तादिवेद्यं वस्तु, ॐ=प्रणवप्रतिपाद्यं सत्यं=अवितथं, तदेव ब्रह्म=अतिबृहत्, तदेव वायुः=सूत्रात्मरूपो हिरण्यगर्भः, तदेव आत्मा जीवोऽपि, किं बहुना तदेव सर्वं=चराचरं जगत्, तदेव पुरः=विस्तीर्णस्य ब्रह्माण्डस्य नगरस्य कारणं तस्मै नमोऽस्तु, यद्वा पुरः=पुराणि स्थूलसूक्ष्मकारणशरीराणि, तेष्ववस्थितं तत्त्वं पुर इत्युच्यते, यद्वा पुरः=अग्रे—सर्वेषामभिमुखे स्थितं तस्मै नमः । किञ्च एवं विधं यद्ब्रह्म तद्विश्वमूर्तिषु=

देवमनुष्यगन्धर्वादिनानाशरीरसुकेषु, भूतेषु=प्राणिषु गुहायां=अन्तर्हृदयपुण्डरीक-मध्ये परमात्मा चरति=वर्तते । एवं परोक्षेण सर्वात्मकत्वमुक्त्वेदानीमपरोक्षेण परमात्मनः सर्वात्मकत्वं दर्शयति—हे परमात्मन् ! यो यज्ञो ज्योतिष्टोमादिः सः त्वमेव, यो वषट्कारः=हविष्प्रदानमन्त्रः, औपलक्षण्येन त्वमेव स्वाहास्वधाहन्तकारादिः, यश्च—इन्द्रो देवराजः स त्वमेव, यश्च रुद्रः=जगत्संहर्ता स त्वमेव, यश्च विष्णुः=विश्वपालकः स त्वमेव, यश्च ब्रह्म=ब्रह्मा जगत्स्रष्टा, यश्च प्रजापतिः=दक्षादिः—प्रजापालकः विराट् वा प्रजापतिः, स सर्वोऽपि त्वमेव । किञ्च त्वमेव तत्=प्रसिद्धं ब्रह्माण्डं, त्वमेवापो नद्यादिगताः, त्वमेवापः पारावारगताः त्वमेव ज्योतिः=सूर्यादि, त्वमेव रसो मधुरादिः, त्वमेवामृतं सुधा, त्वमेव ब्रह्म=वेदकूटम्, त्वमेव भूर्भुवः सुवः=त्रैलोक्यम्, त्वमेवोङ्कारः=शब्दब्रह्मेत्यर्थः । यद्वा आपः=महत्त्वसत्तास्वरूपेण सर्वव्यापकः—आप्नोति व्याप्नोतीति निर्वचनात् । स एव स्वयंप्रकाशनाज्ज्योतिः, स एव रसः=आनन्दस्वभावः, तदेवामृतं=मरणादि-संसारविनिर्मुक्तम् । अस्य जपमात्रेण पापक्षयो भवति इति। पुनस्त्वं कीदृशोऽसीत्यत आह—प्रवाहणः=प्रवाहयति—गमयति—प्रापयति तत्तद्देशकालनिमित्ता-दीननुसंधाय कर्मफलानि तत्तत्कर्मकर्तृभ्य इति कर्मफलप्रापकश्च इतियावत् । तदुक्तं—'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥' इति । 'यस्माच्च येन च यदा च यथा च यच्च, यावच्च यत्र च शुभाशुभमात्मकर्म । तस्माच्च तेन च तदा च तथा च तच्च, तावच्च तत्र च विधातृवशादुपैति ॥' इति । न चाचिन्त्यप्रभावस्य कर्मण एव फलदातृत्वात्तत्त्वेन किमीश्वराधिककल्पनयेति वाच्यम्; अनुक्षणविनाशिनः कर्मणः कालान्तरे फलदातृत्वायोगात् । यथा सेवादेः फलं लोके सेव्याधीनं दृष्टं तद्वत् विनष्टानां यागादिकर्मणामपि फलं

कर्तृकर्मफलविभागज्ञात्सर्वस्य चात्मभूतान्नित्यविज्ञानस्वभावात्संसारधर्मैरसंस्पृष्टात् सर्वज्ञात्सर्वशक्तेः परमेश्वरादेव भवितुमर्हति, नान्यस्मात्। यदाहुर्भगवन्तो बादरायणाचार्याः—' फलमत उपपत्तेः ' ( ब्र. सू. ३ । २ । ३८ ) इति । पुनः कथं भूतः ? वह्निर्हव्यवाहनश्चासि । वह्निः=वहति—यज्ञादिकर्म निर्वहतीति सर्वदेहेष्वन्तर्यामित्वेन स्थितः सर्वभूताधिपति भगवानेव यज्ञादिकर्मप्रवर्तक इति यावत् । तदुक्तं भगवता गीतासु—' अधियज्ञोऽहमेवात्र देहे देहभृतां वर ! ' ( ८ । ४ ) इति । हव्यवाहनः=हव्यं वहति देवान् प्रापयतीति सर्वदेवपोषणकर्ता इत्यर्थः । श्वात्रः प्रचेताश्चासि । श्वात्रः=शु—क्षिप्रमतति—सततं गच्छतीति मित्रः—आदित्यस्त्वमसि, प्रचेताः=प्रकृष्टं चेतो=ज्ञानं यस्य सः सर्वज्ञः इत्यर्थः । यद्वा प्रचेताः=वरुणो देवविशेषः, तद्रूपोऽसि । एक एव महात्मा विविधदेवादिरूपेण स्तूयते इति शास्त्रसिद्धान्तः । तथा च बहुधा श्रूयते स्मर्यते च—' एकं सद्विप्रा बहुधा वदन्ति ' ( ऋ. १ । १६४ । ४६ ) ' एकं वा इदं विबभूव सर्वं ' ( ऋ. ६ । ४ । २९ ) 'आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् । ' ( मनु. १२ । ११९ )' नमः सवित्रे जगदेकचक्षुषे विरञ्चिनारायणशङ्करात्मने । ' इति । त्वं तुथो विश्ववेदाश्चासि । ' ब्रह्मैव तुथः ' ( श. ब्रा. ४ । ३ । ४ । १५ ) इति श्रुतेः । ब्रह्मरूपोऽसि, निरवग्रहमहत्त्वसम्पन्नं पारमार्थिकं वस्तु ब्रह्म । अवग्रहः=परिच्छेदः—अवच्छेदः—अन्तः—इतिपर्यायान्तरम् । यस्य खलु कालकृतदेशकृतवस्तुकृतरूपविशेषकृतावच्छेदनिमित्ताल्पत्वस्य, इतरशेषत्वप्रयुक्ताविद्याकामकर्मपारतन्त्र्यप्रयुक्तापकर्षवत्त्वस्य चाभावात् । नित्यशुद्धबुद्धमुक्तानन्तानन्दस्वभावत्वं बृहते र्धातोः व्युत्पत्त्या सिद्धयतीति तत्त्वम् । विश्वं वेत्ति=जानाति यथावदिति विश्ववेदा त्वमसीति ॥

## (१५)

### ( परमात्मस्वरूपवर्णनेन तत्स्तवनम् )

तत्स्वरूपवर्णनेन तमभिष्टौति—

ॐ उशिगसि कविः अङ्घारिरसि बम्भारिः,
अवस्यूरसि दुवस्वान् शुन्ध्यूरसि मार्जालीयः,
सम्राडसि कृशानुः परिषद्योऽसि पवमानः,
नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदनः,
ऋतधामाऽसि स्वर्ज्योतिः ॥

( शु य ५ । ३२ )

उशिगसि कविः—हे देवाधिदेव ! त्वं उशिक्—असि, उशिक्=कान्तिमान् कान्तः—कमनीय इत्यर्थः। 'वश कान्तौ' स्मरणात्। कृतसंप्रसारणस्यौणादिकं रूपमिदम्। अखण्डानन्दनिधिर्नानिसर्गसुन्दरतममसि, सुखरूपत्वमन्तरेण निसर्गसुन्दरत्वानुपपत्तेः। भगवतः सर्वसौन्दर्यसारस्य सर्वजनस्पृहणीयस्य शिवरामकृष्णादिदिव्यसाकारविग्रहस्यापि कन्दर्पकोटिसुभगत्वादस्ति सर्वेषामनमनोहरत्वम्। तदुक्तमाचार्यपादैः श्रीशङ्करस्वामिभिः—'कन्दर्पकोटिसुभगं वाञ्छितफलदं दयार्णवं कृष्णम्। त्यक्त्वा कमन्यविषयं नेत्रयुगं द्रष्टुमुत्सहते ॥' (प्रबोधसुधाकरे) इति। पुनः स कीदृशः ? इत्याह कविः=क्रान्तदर्शी—सर्वदृक् सर्वज्ञ इत्यर्थः। अङ्घारिरसि बम्भारिः। अङ्घस्य=अंहसः—पापस्य—अरिः=नाशकः शत्रुरित्यर्थः। अंहः शब्दः पापवचनः, तस्य हकारस्य घकारश्छान्दसः। स्मर्यमाणो ध्यायमानो हि भगवान् सर्वान् पापान् विध्वंसते।

तत्रैतत्स्मृतं भवति–' चिन्त्यमानः समस्तानां क्लेशानां हानिदो हि यः। समुत्सृज्याखिलं चिन्त्यं सोऽच्युतः किं न चिन्त्यते ॥ ' (गरुड़. पुरा. १ । २३० । ८) ' हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ ' (बृहन्ना. पु. १ । ११ । १००) ' गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु। यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ ' (ग. पु. १ । २३० । १८) इति । बम्भारिस्त्वमसि । बिभर्तीति बम्भारिः, 'डुभृञ् धारणपोषणयोः' सर्वस्य भर्ता धर्ता पोषक इत्यर्थः । निखिलस्य प्रपञ्चस्याधिष्ठानत्वेन सत्तास्फूर्तिप्रदत्वेन च भरणत्वं, धूलिमुष्टिकल्पां पृथिवीमिमां स्वौजसाऽवष्टभ्य चराचरभूतधारकत्वं, अमृतरसमयेन सोमेन व्रीह्यादिसर्वौषधिपोषकत्वञ्च तस्य सत्र प्रसिद्धमिति । यद्वा बम्भारिः=बन्धारिरस्याः–नाशकः, अत्र वर्णव्यत्ययेन धस्यमः । स्वप्रपन्नबन्धमोचनकर्तृत्वं भगवतः प्रसिद्धमिति । त्वमवस्यूः दुवस्वान् चासि । अवसं=अन्नं तदिच्छतीत्यवस्यूः, 'सुप आत्मनः क्यच्' उप्रत्ययः, दीर्घश्छान्दसः, औणादिक ऊप्रत्ययो वा । महर्षिरूपेण धार्मिकेभ्यो यजमानेभ्यः सभकेभ्यः तस्यान्नेच्छाकर्तृत्वस्य 'ओ३मदा३मो३ पिबा३मो३ देवो वरुणः प्रजापतिः सविता २ऽन्नमिहा२ऽऽहरदन्नपते३ऽन्नमिहा २ऽऽहरा२ऽऽहरो३मिति ।' (छां. १ । १२ । ५) इति श्रुतौ प्रसिद्धत्वादिति भावः । दुवोऽस्यास्तीति दुवस्वान्=हविष्मान् । दुव इति हविर्नाम । यमुद्दिश्य हि सर्वैर्ऋत्विग्भिर्हविः समर्प्यते–हविषा तस्य प्रशस्तं परिचरणं विधीयते इति विद्वत्परिचितस्य सेवनीयतमस्य तस्य हविष्मत्त्वं प्रसिद्धमिति भावः । शुन्ध्यूरसि मार्जालीयः । शुन्धयतीति शुन्ध्यूः=स्वयंशुद्धो–विश्वनियन्ता–परमात्मा हि स्वप्रपन्नान् पतितान् दुष्टानपि च दोषान्निवार्य सद्गुणान् समर्प्य शोधयति पवित्रयतीत्यर्थः ।

' शुन्ध शौचकर्मणि स्मरणात् ' शोधकं दोषनिवारकं शुद्धिकारकं शौचं कर्म भवति । ' अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते ॥ ' इतिस्मृतेः । अत एव मार्जाति मार्जालीयः= परमशुचिः–निरञ्जन इत्यर्थः । ' मृजू षू शुद्धो ' " इत्यस्मात्, औणादिक आलीयच् प्रत्ययः । शुद्धस्य परमपावनस्य तस्य भगवतोऽजस्रं चिन्तनादशुद्धोऽपि जनः सद्यः शुद्ध्यति । सम्राडसि कृशानुः । सर्वाधारत्वात् सर्वगतत्वाच्च सम्यक् प्रकाशीकरत्वेन सर्वेषु राजते इति सम्राट् त्वमसि । कृशानुः=तपोव्रतस्मरणध्यानादिभिः साधनैः कृशं–तनुमानसं योगिनं भक्तमनुगच्छतीति कृशानुः । तत्रैतत्स्मृतं भवति–' महादेव ! महादेव ! महादेवेति यो जपेत् । वत्सं गौरिव गौरीशो धावन्तमनुधावति ॥ ' इति । कृशानुः=अग्निस्वरूपो वा । परिषद्योऽसि पवमानः । भगवन्तं स्तोतुं कीर्तितुं मीमांसितुं वा समेताः पुण्यकर्माणो विद्वांसो भक्ताः परिषत्, तद्योग्यः=स्तूयमानः कीर्त्यमानो मीमांस्यमानो भगवान् परिषद्य इत्युच्यते । यद्वा भक्तानां परिषदि भवः परिषद्य इत्यर्थः । ' मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ! ' इति स्मरणात् । अत एव परिशुद्धत्वात्, स्मृतिमात्रेण पावकत्वाच्च पवमानः । तदुक्तं– ' स्मृतेः सकलकल्याणभाजनं यस्य जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ' ( मह. पु. ८३ । १७ ) इति । यद्वा परितः सीदन्त्यस्यां सा परिषत्=देवसभा, तत्र न्यायकर्तृत्वेन वर्तमानो भगवान् परिषद्य इत्युच्यते । पवते इति पवमानः=पावनस्वरूपस्त्वमसीत्यर्थः । ' पवनः पवतामस्मि ' ( गी. १० । ३१ ) इति स्मरणात् । नभोऽसि प्रतक्वा । विशेषेण न भाति=न प्रकाशते इति नभः=जगद्व्यासाधिष्ठानमस्पष्टस्वरूपं यद्ब्रह्म तत्त्वमसीत्यर्थः । सर्वथा प्रकाशमानेऽप्रकाशमाने वा तस्मिन् द्वैतप्रपञ्चस्याध्यासासं-

म्भवज्जगदधिष्ठानता न संभवति। अत एव तत्सिद्धयर्थं तस्य सामान्यतः प्रकाशमानं विशेषतोऽप्रकाशमानमध्याराधिष्ठानत्वप्रयोजकं स्वस्वरूपमभ्युपगन्तव्यं, तथा सति ब्रह्मात्मनः 'सन्घटः सन्पटः इति सद्रूपेण सामान्यतो ज्ञातत्वे सति विशिष्याखण्डचिदानन्दरूपेणाज्ञातत्वं प्रसिद्धयतीति भावः। तदुक्तं-ब्रह्मणो ज्ञातत्वाज्ञातत्वे-' **अज्ञातं ब्रह्म विषयो ज्ञातं तत्र प्रयोजनम्।** इति। यद्वाऽव्यक्तरूपत्वात्सर्वस्य लोकस्य न भाति स्वेन वास्तविकरूपेण न प्रकटीभवतीति नभः। पीतविषयमोहमदिरामदान्धाः हि मूढा जना अजमव्ययमनादिमनन्तं प्रत्यगभिन्नं परमेश्वरं नाभिजानन्ति, प्रत्युतावजानन्ति-' कोऽयमीश्वरप्रलापः ' इति। तदुक्तं-भगवता स्वयमेव-' **नाहं प्रकाशः सर्वस्य योगमायासमावृत्तः। मूढोऽयं नाभिजानाति लोको मामजमव्ययम्॥** ' (गी. ७। २५) इति। यद्वा नभः=आकाशः तद्रूपोऽसीत्यर्थः। यद्वा नभते इति वधकर्मसु निरुक्ता पठितत्वात् (२। १९) यो नभते, हिनस्ति दुष्टान्-पापानसौ नभ इत्यर्थः॥ प्रतका=प्रकर्षेण तकन्ति-गच्छन्ति-लयंप्राप्नुवन्ति सर्वाणि चराचरभूतानि यस्मिन् सः, सर्वभूतलयाधारत्वेन विश्वोपादनकारणमित्यर्थः। तकतिर्गत्यर्थः, वनिप् प्रत्ययः। ' **यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति** ' (तै. ३। १) इति श्रुतेः। यद्वा प्रतकति=परमप्रियान् साधून्-भक्तान्-अभिवीक्ष्य प्रकर्षेण हर्षतीतिप्रतक्वा इत्यर्थ। मृष्टोऽसि हव्यसूदनः। मृष्टः=विशुद्धः-द्वैतविकारकर्तृत्वे तत्र प्रविष्टत्वे च सत्यपि परमार्थतो विकारशून्यत्वादिति भावः। यद्वा मृष्टः-मिष्टोऽतिमधुरोऽसीत्यर्थः। यस्य निरतिशयब्रह्मानन्दस्य प्रकृष्टं माधुर्यमनुभूय योगिनः तत्त्वविदो मधुरतरा भवन्ति, तस्य परममधुरतमत्वे किमु वक्तव्यमितितत्त्वम्। तत्रैतदाम्नातं भवति-' **एष ह्येवानन्दयाति** ' (तै. २। ७) ' **रसं ह्येवायं लब्ध्वा-**

ऽऽनन्दीभवति ' ( तै. २ । ७ ) ' तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ' ( बृ. ४ । ३ । ११ ) इति । हव्य-सूदन.=हव्यं हविः—सूदयति—नाशयतीति सः । यद्यपि लोकदृष्ट्याऽग्निना तस्य हव्यसूदनत्वं प्रतीयते, परन्तु विद्वद्—दृष्ट्या वायुशुद्धया लोकस्वास्थ्यसमर्पणात् देवतर्पणात्पुण्यसम्पादनाच्च तस्य हव्यवैफल्यसूदनत्वं वेदितव्यमिति तात्पर्यम् । ऋतधामासि स्वर्ज्योतिः । ऋतं—सत्यमविनाशि शाश्वतं धाम=अप्राकृतं वैष्णवं परमं पदं स्वस्वरूपावस्थानात्मकं मोक्षस्थानं यत्तत्त्वमसि । स्वः=अखण्डानन्द-रूपः, ज्योतिः=स्वयंप्रकाशरूपस्त्वमसीत्यर्थः । तदुक्तं—श्रुतिस्मृतिभ्यां— ' तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । ' ( ऋ. १ । २२ । २० ) ' यद्गत्वा न निवर्तन्ते तद्धाम परमं मम । ' ( गी. १५ । ६ ) इति

## ( १६ )

( सद्गतिस्वस्तिलाभाय परब्रह्मनिरूपणमुखेन तत्स्तवनम् )

सद्गतिस्वस्तिलाभाय परब्रह्मनिरूपणेन तत्प्रस्तौति—

ॐ समुद्रोऽसि विश्वव्यचा अजोऽस्येकपात्,
अहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोऽसि,
ऋतस्य द्वारौ मा मा सन्ताप्तम्,
अध्वनामध्वपते ! प्र मा तिर,
स्वस्ति मेऽस्मिन् पथि देवयाने भूयात् ॥
( शु. य ५ । ३३ )

त्वं समुद्रः, विश्वव्यचा चासि । सर्वे पदार्था आब्रह्मस्तम्बपर्यन्ताः समुद्द्रवन्ति—समुद्द्रवन्ति यस्मात्सः। पुनश्चान्ते सम्यक्—उत्कर्षेण—तद्भावेन—द्रवन्ति—समनुयन्ति यस्मिन् सः समुद्रः=सर्वविश्वोत्पादकः सर्वलयाधिष्ठानः परमात्मा इत्यर्थः । समुद्र इवागाधोऽज्ञानेन वाऽनन्तो वा स्वरूपेण त्वमसि । तदुक्तं विष्णुपुराणे—' प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ' इतिस्मरणात् । विश्वं=सर्वं व्यचति=यथावद्विजानातीति विश्वव्यचा । तदुक्तं—' उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ ' यद्वा विश्वस्मिन् व्यचः=व्याप्तिर्यस्य सोऽसौ विश्वव्यचा । यद्वा विश्वं नामरूपात्मकं जगत् विचति=मायाख्यं कापट्यं निमित्तीकृत्य करोतीति विश्वव्यचा । अनुपपन्नार्थप्रदर्शनशालिन्या कपटप्रचुरया मायाशक्त्याऽतद्रूपोऽपि विश्वेश्वरस्तद्रूपेण प्रकटीभवति—भ्रान्तान् भ्रमविषयान् भ्रमांश्च नैकविधान् स्फारयतीति यावत् । व्यच व्याजीकरणे स्मरणात् । व्याजीकरणं—छद्मकरणं छल—कापट्यमित्यर्थः । यदाहुः शास्त्रतात्पर्यविदः—' तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते । अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ॥ ' इति । ' संवेदनं सत्यमेकं संवेद्यं तत्र कल्पितम् । आदर्शनगरप्रख्यं मृषैव प्रविभावितम् ॥ ' इति । त्वमजोऽसि एकपात् । यः कदाचित् न जायते इत्यजः=अजन्मा इत्यर्थः । तदुक्तं महाभारते—' न हि जातो न जायेऽहं न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥ ' इति शान्तिपर्वणि । एकः पादः=अंशभूतः सर्वाणि भूतानि यस्येत्येकपात् । यद्वा एकस्मिन् पादे विश्वं यस्यास्ति स तथा । 'पादोऽस्य विश्वा भुवानि' ( ऋ. १० । ९० । ३ ) इति श्रुतेः । यद्वा एकः=असहाय एव पाति=

रक्षति सर्वमित्येकपात् इत्यर्थः । अहिः बुध्न्यस्त्वमसि । न, हीयते=वियुज्यते यस्य स्वरूपं कस्मिश्चित्काले देशे वस्तुनि वेत्यहिः=पूर्णोऽद्वितानन्तः परमात्मेत्यर्थः । यत्रैतदस्मृतं महात्मभिः—' दर्शनं श्रवणं ज्ञानं यत्र नान्यस्य विद्यते । अखण्डैकरसं शान्तं ब्रह्म तत्समुपास्महे ॥ ' इति । बुध्नः=मूलकारणं तत्र भवो बुध्न्यः कार्यरूप इत्यर्थः । यद्वा बुध्नमादिरुच्यते, तत्र भवो बुध्न्यः—आदिमः पुरुष इत्यर्थः । ' स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ इति । ' हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । ' (ऋ. १० । १२१ । १) इति । ' ब्रह्मा देवानां प्रथमः संबभूव । ' ( मुं. १ । १ । १ ) इत्यादिश्रुतेः ।

वाक्=वेदरूपा वाणी त्वमसि । यदाहुः—' स ऋङ्मयः साममयः सर्वात्मा स यजुर्मयः । ऋग्यजुःसामसारात्मा स एवात्मा शरीरिणाम् ॥ ' ( विष्णुपुराण—३ । ३ । ३० ) इति । ' वेदो नारायणः साक्षात् ' ( भा, १ । ६ । ४० ) इति । महाभारतेऽपि स्मर्यते—' सर्वे वेदाः सर्ववेद्याः सशास्त्राः सर्वे यज्ञाः सर्व ईज्याश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् ! सर्वयज्ञाः समाप्ताः ॥ ' इति । ऐन्द्रमसि=इन्द्रेण परमात्मना सृष्टं विश्वं कार्यमैन्द्रं त्वमसीत्यर्थः । कारणात्कार्यस्यानन्यत्वात् ' ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ' ( मुं. २ । २ । ११ ) इति श्रुतेः । सीदन्त्यस्मिन् देवा इति सदः=देवसभा त्वमसि, यतः सर्वरूपस्य भगवतो देवसभात्वं नानुपपन्नम् । यद्वा तत्र विश्वव्यवस्थापकतया देवादिरूपेण वर्तमानस्य भगवतस्तत्त्वं ' तात्स्थ्यात्ताच्छब्द्यमि ' ति न्यायमनुसृत्य बोद्धव्यमिति भावः ।

इत्थं तत्स्वरूपवर्णनमयेन भक्तिभरेण स्तवनेन परितुष्टं परमकृपालुतारस-प्रवाहमानं भगवन्तमभ्यर्थयते स्वेष्टसिद्धिलाभे प्रतिबन्धापनयाय–ऋतस्य=सत्यस्य ब्रह्मणस्तव साक्षात्कारसाधनभूतौ यौ स्वाध्याययोगाख्यौ द्वारौ स्तः, तौ हे द्वारौ ! मा=मां प्रति मा सन्तातम्=मा सन्तापयतमित्यर्थः । उद्देश्यालाभेन युवां संतापं मा जनयतमिति यावत् । अलब्धो हि स्वेष्टः पदार्थो विफलं तत्साधनमपि च सन्तापयतीति प्रसिद्धम् । तपतेर्लुङि मध्यमैकवचने 'झलो झलि' इति सिलोपे रूपम् । हे विश्वेश्वर ! भक्तैकबन्धो ! प्रतिबन्धवर्जिते द्वारभूते तत्साधने त्वदनु-ग्रहाद्धस्यां त्वां साक्षात्कृत्य माममन्दानन्दसन्दोहिनं सद्भाग्यशालिनं विधेहीत्यभ्य-र्थनाभिप्रायः । स्वाध्याययोगयोः परमात्मप्रकाशसाधनत्वं भगवान् बादरायणा-चार्योऽप्यवदत्–'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् । स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥' (योगभाष्ये स. पा. २८) इति । मोक्षशास्त्राणामध्ययनं प्रणवादिमन्त्राणां जपो वा स्वाध्यायः । प्रणवादि-मन्त्राभिधेयस्य परमात्मनोऽसकृद्भावनं योगः, ताभ्यां परमात्मसाक्षात्कारो भवतीत्यर्थः । यद्वा ऋतस्य=सत्यलोकस्य प्राप्तिद्वारे कर्मोपासने मां मा सन्तातम् । सम्यगनुष्ठिताभ्यां समुच्चिताभ्यां ताभ्यां सत्यब्रह्मलोकः प्राप्यते इति शास्त्रेषु निर्णीतम् । अत एव निर्विघ्ने ते यथा सिद्धे स्तां तथा कृपानिधानेन भवता कृपा विधेयेति भावः । तत एव गतागतलक्षणदक्षिणादिमार्गनिवृत्त्यर्थं गमनागमन-वर्जितशोभनपथप्राप्त्यर्थं भगवन्तं याचककल्पद्रुमं याचते–हे अध्यपते !=मार्ग-नियन्तः ! परमेश्वर ! अध्वनां=संसारस्य गतागतलक्षणदक्षिणादिविविधमार्गाणां मध्ये पूर्वमनादिकालाद्वर्तमानं साम्प्रतं तेभ्यो निर्विण्णमितिशेषः । मा=मां त्वं प्रतिर=वर्धयस्वेत्यर्थः । तिरतिर्वृद्ध्यर्थः, गमनागमनवर्जितेनोत्तरेण शोभनेन पथा मां गमयेति यावत्, तेन मार्गेण गच्छतो मम समस्तानन्दसमृद्धिमद्ब्रह्मलोक-

प्राप्त्या परमेष्ठलामवृद्धिर्भविष्यतीति भावः । यत्रैतत्समाम्नातं भवति—'अग्ने ! नय सुपथा रायेऽस्मान्' (शु. य. ४० । १६) इति । किञ्च अस्मिन् देवयाने=देवैः—अर्चिरादिभिः गमयितृत्वेनाधिकृतैरुपलक्षितं यानं—गमनं विद्यते, यस्मिन् तस्मिन् पथि=शोभने मार्गे मे=मम त्वत्प्रसादात्, स्वस्ति=कल्याण-मुद्देश्यप्राप्त्या भूयात्=भवेत् इति याचे । अत्रेदं वेदितव्यं—अस्मिन् देवयाने पथि गन्तारः सगुणब्रह्मोपासकाः क्रममुक्तिभाज एव भाव्याः, न तु सम्यग्दर्शन-निष्ठा सद्योमुक्तिभाजः । 'न तस्य प्राणा उत्क्रामन्ति' 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४ । ४ । ६) इत्यादिश्रुत्या तेषां गतिमागतिञ्च प्रतिषिध्य ब्रह्मसंलीनप्राणत्वब्रह्मभूतत्वप्रतिपादनात् । नहि परस्मिन् ब्रह्मणि गन्तृत्वं गन्त-व्यत्वं गतिर्वा अवकल्पते । सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तॄणां, । विशिष्टस्य सगुणस्यापरस्य ब्रह्मणस्तु गन्तव्यत्वमुपपद्यते । कार्योपाधिकत्वेन तस्य प्रदेश-वत्वात् । तथा च भगवतो व्यासस्य सूत्रं—'कार्यं बादरिरस्य गत्युपपत्तेः ।' (ब्र. सू. ४ । ३ । ७) इति । देवयानेन पथा ब्रह्मलोकगतानां विशिष्टब्रह्मो-पासकानां तत्रैव श्रवणाद्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्म-समाप्तौ कार्यब्रह्मणा सह विदेहकैवल्यात्मको मोक्षो भवति । तथा चाम्नायते—'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परंपदम् ।' इति श्रुतेः । अपि च प्रशस्ततमस्य देवयानमार्गस्य छान्दोग्यकौषीतक्याद्युपनिषत्परिपठितो ब्रह्ममीमांसया च निर्धारितः खल्वयं क्रमः प्रतिपत्तव्यः—सगुणब्रह्मोपासकस्यादौ गमयित्री—अग्न्यर्चिरभिमानिनी देवता, ततोऽहरभिमानिनी, ततः शुक्लपक्षाभिमानिनी, तत उत्तरायणरूपषण्मासाभि-मानिनी, ततः सम्वत्सराभिमानिनी, तत्पश्चाद् देवलोक आगच्छति, ततो वायु-लोकः, तत आदित्यलोकः, ततश्चन्द्रलोकः, ततो विद्युल्लोकः, तत्र ब्रह्मलोकादागतेन

ऽमानवपुरुषो मिलति, ततो वरुणलोकः, तत इन्द्रलोकः, ततः प्रजापतिलोकः, ततो ब्रह्मलोकः, तत्राप्याख्यारं ह्रदः, ततो विरजानदी ततो ब्रह्मगन्धयुक्तस्तिल्यो-वृक्षः, ततो ब्रह्मणो हिरण्यगर्भस्यापराजितं पत्तनं, तत्रामितौजस्विनि पर्यङ्के ब्रह्माऽऽस्ते, स तमुपासकं स्वसम्मुखागतमाह–कोऽसीति? तमसौ प्रतिब्रवीति–'यस्त्वमसि सोऽहमस्मी'ति, पुनस्तमाह–कोऽहमस्मीति? सत्यमिति ब्रवीति, एवमुक्त्वा सोऽयमुपासको ब्रह्मसारूप्यं प्रपद्यते इति। तदेतत्स्मृतं भगवता पुरुषोत्तमेन–'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥' (गी. ८।२४) इति।

किञ्च देवयानमार्गेण गच्छन्तं सगुणब्रह्मोपासकं पुण्यकर्माणं योगिनं तत्त-ल्लोकवास्तव्याः तत्राग्रेसरा देवाः पुष्पादिभिः सत्कुर्वन्ति, स्वं स्वं लोकं दर्शयन्ति, प्राशस्त्यं तस्य वर्णयन्ति, भूयोभूयश्च तत्र निवासाय तं प्रार्थयन्ते भो! इहाऽऽ-स्यतां, इह रम्यतां, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरा-मृत्युं बाधते, वैहायसमिदं यानं, इमे कल्पद्रुमाः, पुण्येयं मन्दाकिनी, सिद्धा महर्षय इमे, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति। इत्थं प्रार्थितो योगी उपासकः तत्र सङ्गदोषान् भावयेत्, तेभ्यो वैराग्यं सम्पादयेत्। स्वप्नोपमेभ्यः क्षोभाविभ्यः शोकभयाद्यनर्थप्रदातृभ्यो धर्मवीर्य-प्रज्ञातेजोयशःप्रभृतिशक्तीनां क्षपयितृभ्योऽप्सरःप्रभृतिविषयभोगेभ्यः कृपणजन-प्रार्थनीयेभ्यो मम स्वस्तिरस्तु। लब्धज्ञानालोकोऽहं कथं तेभ्यो वञ्चितः सन् पुनरपि प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति। एवं तत्रासक्तिमकृत्वा गर्वमपि न कुर्यादेवमहं देवानामपि प्रार्थनीयः श्रेष्ठतम इति। तत्रासक्तिगर्वकरणे चोदितस्य महालोकस्य प्राप्तिर्न भवत्यपि त्वन्तरालवस्थानं सम्पद्यते इत्यनिष्टप्रसङ्गात्सावधानो

ऽभवेदिति । यदाहुर्भगवन्तो योगशास्त्रकाराः पतञ्जलयः–' स्थान्युपनिमन्त्र सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गादि ' ( यो. सू. ३ । ५१ ) ति । दे 'यानाख्योत्तरपथप्रापकाणि तप आदीनि साधनानि प्रश्नोपनिषच्छ्रुत्याऽभिधीयन्ते

' अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्य मभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्म न्नपुनरावर्तन्ते इत्येष निरोधः ।' ( प्र. उ. १ । १० ) इति । अयं सर्वोत्तमो ब्रह्मलोको भगवद्यतारामादिदिव्यविग्रह इव स्वस्वभावनानुसाराद्भि भिन्नस्वरूपतया विभाति वैष्णवं वैकुण्ठत्वेन शैवं कैलासत्वेनेत्यादिनेत्यलं पल्ल वितेनेति ॥

## ( १७ )

### ( सूर्यरूपेण पूर्णाद्वैतस्य स्वप्रकाशस्यात्मनो वर्णनम् )

यद्ब्रह्म देवानामिन्द्रादीनां समुदायस्य, रूपादिज्ञानजनकसाधिष्ठातृचक्षुरादि-करणग्रामस्य च प्रकाशकं, द्युलोकं पृथिवीलोकमन्तरिक्षलोकञ्च समन्ततो व्याप्या-वस्थितं, स्थावरस्य जंगमस्य च समस्तस्य विश्वस्यान्तरात्मा सूर्यात्मकमस्ति । तदेवाहमस्मीत्यभेदभावनापरिपाकवशात्तत्स्वरूपेणाऽस्माकं हृदये प्रकाशता-मित्याह–

ॐ चित्रं देवानामुदगादनीकं,
चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं,
सूर्य आत्मा जगतस्तस्थुषश्च ॥

( शु. य. ७ । ४२+१३ । ४६ । ऋ. १ । ११५ । १ । अथर्व. १३ । २ । ५+२० । १०७ । १४ । तै. सं. १ । ४ । ४३ । १+२ । ४ । १४ । ४ । तै. ब्रा. २ । ८ । ७ । ३ । ऐ. ब्रा. २ । ६ । तै. आ. १ । ७ । ६+२ । १२ । १ । नि. १२ । १६ । श. ब्रा. ४ । ३ । १ । १० )

जगतः=जंगमस्य, तस्थुषः=स्थावरस्य च कृत्स्नस्य विश्वस्य चराचरस्य सूर्यः=प्रकाशकः आत्माऽस्ति । मित्रस्य=नेत्राधिदैवतस्य रूपग्राहकस्य सवितुः, वरुणस्य=रसनाधिदैवतस्य रसग्राहकस्य, अग्नेः=वागधिदैवतस्य वैश्वानरस्य, चक्षुः=चष्टे प्रकाशयतीति प्रकाशकः सर्वव्यापक आत्माऽस्तीत्यन्वयः । अतति-सर्वत्र व्याप्नोतीति तद्व्युत्पत्तेः । आत्मशब्दस्यार्थोऽभियुक्तैर्महर्षिभिरेवं स्मर्यते—**'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भाव-स्तस्मादात्मेति कीर्त्यते ॥'** इति । अस्यायमर्थः—यच्छब्दाः सर्वे यस्मादर्थे द्रष्टव्याः । 'आप्लृ व्याप्तौ' इति धात्वर्थानुसारेण व्यापको विभु आत्मशब्दार्थः । आदत्ते=उपसंहरति—स्वात्मन्येव सर्वमिति लयाधिष्ठानमुच्यते । कार्यस्य च कारणे लय इत्यात्मनोऽनया व्युत्पत्त्योपादानकारणत्वं सिद्ध्यति । इह=लोके । विषयानत्तीत्यनेन योगेनोपलब्धृत्वमात्मनः सिद्ध्यति । येनाऽऽत्मनाऽधिष्ठानेनास्य चराचरस्य जगतः संततः=निरन्तरो भावः=सत्ता लभ्यते स आत्मेत्यर्थः । कल्पितस्याधिष्ठानसत्तामन्तरेण सत्ताऽभावात् । यथा रज्ज्वामध्यस्ते सर्पे रज्ज्वाः सातत्यं, तथा कल्पितं सर्वं जगत् येन चैतन्यात्मना स्वस्वरूपवद्भवतीतियावत् ।

अथवा प्रकारान्तरेण पूर्वोक्तश्लोकस्यात्मशब्दार्थबोधकस्य व्याख्यानमिदं द्रष्टव्यम्—तथाहि—द्विविधो ह्यात्मा व्यवहारविशिष्टः केवलश्चेति । व्यवहारोऽपि त्रिविधः—जागरणं स्वप्नः सुषुप्तिश्चेति । तत्र सुषुप्तावयं जीवः स्वोपाधिविलये सति परमानन्दनिधिं स्वस्वरूपं ब्रह्म आप्नोति—प्राप्नोति । तथा च कैवल्योपनिषदि श्रूयते—

'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेतीति।'
तस्मादाप्नोतीत्यात्मेतिस्मर्यमाणं प्रथमं निर्वचनं द्रष्टव्यम्। स्वप्नावस्थायामयं जीवो जागरणस्थपदार्थवासना सर्वा आदत्ते—गृह्णातीत्यर्थः। तथा च वाजसनेयिन आमनन्ति—'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति।' (बृ. ४।३।९) इति। अस्यायमर्थः=यदाऽयं जीवात्मा वाक्चक्षुरादिदशविधबाह्यकरणोपरतिरूपं, स्वापं प्राप्नोति तदानीं सर्वावतः=सर्वो भूतभौतिकमात्रा विद्यन्तेऽस्येति सर्ववान् तस्य सर्वावत, छान्दसो दीर्घः गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य, लोकस्य=इन्द्रियैरवलोक्यमानस्यास्य जगत', मात्रां=लेशरूपां वासनां, अपादाय=तत्तत्पदार्थेभ्योऽवच्छिद्य—स्वयं स्वीकृत्य, ततः स्वयं विहत्य=जागरणाभिमानं स्वयमेव विनाश्य, स्वप्ने जगद्रूपं च स्वयमेव निर्माय जगदाकारेण परिणमते, स्वेन भासा=स्वकीयेनान्तःकरणेन, तथा स्वेन ज्योतिषा=स्वरूपचैतन्येन कल्पितपदार्थावभासकेन युक्तः सन् प्रस्वपितीति। तस्माद्वासनास्वीकारात् आदत्ते इत्यात्मेति द्वितीयं निर्वचनं द्रष्टव्यम्। जागरणावस्थायां चक्षुरादीन्द्रियैर्बाह्यान् रूपादिविषयान् अत्ति=भुङ्क्ते। तथा चाऽऽथर्वणिकैरेवाऽऽम्नायते—'रूपस्नानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेती' ति। ततो बाह्यविषयभोगानत्तीत्यात्मेति तृतीयं निर्वचनं द्रष्टव्यम्। उपाधिविशिष्टस्यावस्थात्रयमुपजीव्य निर्वचनत्रयमिदमुक्तम्। अथ केवलस्य निरुपाधिकस्य विशुद्धस्य निर्वचनमुच्यते—यत्=यस्मात्कारणात्, अस्य मनो भावः=स्वभावविशेष, संततः=परिच्छेदरहितः, तथा च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्यन्तरेऽत्र देशकालवस्तुपरिच्छेदराहित्यलक्षणमानन्त्यमभिहितम्। तस्मात्, अतति=सातत्येन सर्वत्र संगच्छतीत्यात्मेति चतुर्थं निर्वचनं द्रष्टव्य-

मिति। एवंसत्यत्राऽऽत्मतत्त्वनिर्देशस्य प्रस्तुतत्वादखण्डैकरसतया संततत्वमात्म-शब्दप्रवृत्तिनिमित्तम्। यदि धातुप्रत्ययजन्यमवयवार्थं पूर्वोक्तमुपेक्ष्य रूढिमाश्रित्याऽऽत्मशब्दस्य स्वरूपवाचित्वमुच्यते। तदाऽप्यधस्तस्य निखिलस्य स्थावरजंगमात्मकस्य विश्वस्याधिष्ठानतया सर्वस्वरूपत्वमस्ति। न ह्यारोपितानां सर्पधारादण्डमालावल्मीकदर्भमूत्रितादीनामधिष्ठानभूतां रज्जुमन्तरेण किञ्चिदन्यद्वास्तवं स्वरूपमस्ति। किं बहुना, यद्ययमात्मशब्दो यौगिको यदि वा रूढः, सर्वथाऽपि संततोऽखण्डैकरसः सर्वजगदधिष्ठानतया तस्य वास्तवस्वरूपभूतः सर्वगतः सर्वप्रकाशकः परमहाभिन्नः पदार्थ आत्मशब्देनात्र विवक्षितः। यदाहुः—' बृहत्त्वात् बृंहणत्वाच्च ब्रह्म आत्मेति गीयते। ' इति।

देवानां=द्योतयन्त्यर्थान् प्रकाशयन्ति ते इमे देवाः विषयप्रकाशकाः चक्षुरादयस्तेषां अनीकं=समूहं, स्वप्रकाशे आत्मनि सति चित्रं=विचित्रं साश्चर्यं उदगात्=उदयं प्राप्तमनुभूयते, आत्मज्योतिषैव समेषां तेषां प्रकाश इति यावत्। ' तस्य भासा सर्वमिदं विभाति। ' (मुं. २। २। १०) इति श्रुतेः। अत्रैतदुक्तं भवति—रूपरसादीनां पञ्चविधविषयाणां मध्ये सूर्यादिनेत्रादिष्वेकैकस्य विषयस्यैव ग्राहकं, न सर्वेषां विचित्राणां विषयाणां, तेषां समेषां विविधानां ग्राहकत्वं तु तत्तद्वृत्तिप्रवर्तकस्य प्रत्यगात्मन एव सम्भवति, नान्यस्य। तथा मित्रावरुणादीनामपि तत्तदर्थप्रकाशकत्वे स्वप्रकाशकत्वे च न स्वातन्त्र्यमस्ति, यतः प्रत्यगात्मप्रयुक्तचक्षुरादेर्निमित्तभूतादेव ते प्रकाशन्ते, निद्राणस्य जात्यन्धस्य चाप्रकाशमानत्वात्, तस्मादवगम्यते आत्मप्रकाशमन्तरेण सूर्यादयो न प्रकाशन्ते नार्थान् प्रकाशयितुञ्च प्रभवन्ति इति। एवं देहावच्छेदेन यदध्यात्मस्वरूपं एकमनुभूयमानं परमात्मतत्त्वमस्ति, तदेव द्यावापृथिवी अन्तरिक्षं तदुपलक्षितं सर्वं विश्वं आ प्राः=समन्तादापूरयन् सर्वात्मकत्वेन सत्तास्फूर्तिप्रदत्वेन चावस्थितं सवि-

-दानन्दानन्ताद्वैतं परंब्रह्माऽहमस्मीति मुमुक्षुः सदा स्वात्मानं सादरं भावयेत् । -यथैतदाम्नातं भवति-' **योऽसावसौ पुरुषः सोऽहमस्मि** ' ( शु० य० ४० । १६ ) इति । आप्राः='प्रापूरणे' लुङि पुरुषव्यत्ययः । अदादित्वाच्छपो लुक् ।

अथवा देवानां=देवाः-दैवीसम्पद्विशिष्टाः सत्यतत्त्वरताः परमात्मोपासकाः तेषां-चित्रं=चायनीयं-पूजनीयमित्यर्थः । अनीकं=अनिति-प्राणित्यनेनेति व्युत्पत्त्या प्राणादिजीवनहेतुभूतमित्यर्थः । ' अनिहृषिभ्यां किच ' इत्यनेनानितेरीकन् प्रत्ययः । मित्रस्य=द्युस्थानः सूर्यो मित्रः, मीतेः प्रमीतेस्त्रायते सर्वं लोकमिति तद्व्युत्पत्तेः तस्येत्यर्थः । वरुणस्य=अन्तरिक्षस्थानो वायुरत्र वरुणः, वृणोति -आवृणोति मेघजालेनान्तरिक्षमिति तद्व्युत्पत्तेः, तस्येत्यर्थः । अग्नेः=पृथिवीस्थानो ज्वलनोऽग्निः, तस्येत्यर्थः । चक्षुः=प्रकाशकं स्वस्वकार्यदर्शकं प्रेरकं ब्रह्म, तत् उदगात्=उद्गच्छतु-उदयं प्राप्नोतु-उपासकानामस्माकं हृदये इति शेषः । उदगादिति ' छन्दसि लुङ्लङ्लिटः ' इति प्रार्थनायां लुङ् । अविद्यावरणापाकरणमेवात्रोदयः । ननु-अन्यत्र सतोऽस्यासतस्तस्य हृदये कथमुदयः स्यादित्याशङ्क्याह-द्यावापृथिवी=द्युलोकं पृथिवीलोकं, अन्तरिक्षं=मध्यमं लोकं च आ प्राः=प्रातेर्लङर्थे लुङ्, आप्राति=समन्ततो व्याप्य तिष्ठतीत्यर्थः । तथा च लोकत्रयं व्याप्यावस्थितस्य तस्यात्रापि विद्यमानत्वात्, उपासकानां हृदये कथमुदयासम्भवः ? इति । ननु-व्यापकं सदपि भवेदाकाशादिवत् संयोगिमात्रम् ? नेत्याह-जगतः तस्थुषश्च सर्वस्य जडचेतनात्मकस्य विश्वस्यात्मा=अन्तरात्मा स्वस्वरूप इत्यर्थः । ननु-हृदये तदुदयेन किं स्यादप्राप्यत्वात् ? नेत्याह-सूर्यः= सूरिभिः कृतसाक्षात्कारैर्विद्वद्भिः स्वात्मरूपेणाभेदेनाविद्यानिरासद्वारा प्राप्य इत्यर्थः ।

अथाधिदैवतम्-अत्र परापररूपेणावस्थितः समण्डलः आदित्यपुरुषः सूर्यः

स्तूयते–चित्रं=क्रियाविशेषणं आश्चर्यं–अद्भुतं यथास्यात्तथा–आदित्यमण्डलं उदगात्=उदयं प्राप्तमासीत्। यद्वा उद्गच्छति–पूर्वस्यां दिश्युदेति लडर्थे लुङ्। उदयन्नेव स्वतेजसा नैशं तमः सद्यो हन्तीति यावत्। यः स्वकीयेन ज्योतिषा शार्वरं तमोऽपहत्यान्येषां ज्योतिषां चन्द्रादीनां ज्योतिराछाद्योदगच्छतोऽस्याश्चर्यम्। यद्वा चित्रं=कालभेदेनारुणशुक्लादिविविधवर्णोपेतत्वाद्विचित्रमित्यर्थः। यद्वा चित्रं=चायनीयं पूजनीयमित्यर्थः। किंभूतः सूर्यः? देवानां=दीव्यन्ति–द्योतन्ते इति देवाः=दीप्यमाना रश्मयः तेषां अनीकं=मुखं–आश्रय इत्यर्थः। यद्वा अनीकं=समूहः–किरणपुञ्जावष्टम्भनरूपमण्डलात्मक इत्यर्थः। यद्वा देवानामनीकं=अन्धकाररूपशत्रुशरीरात्मकस्य शत्रोर्विनाशकत्वेन देवसैन्यरूपमादित्यमण्डलमित्यर्थः। तथा मित्रस्य वरुणस्य अग्नेः चक्षुः=नेत्रवत्प्रकाशक इत्यर्थः। मित्रादय उपलक्षकाः, सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते, अतो मित्रादीनां चक्षुः स सूर्यः उद्गतः सन् द्यावापृथिवी=दिवं भूमिं चान्तरिक्षं चाप्राः=आपूरितवान् आपूरयति–आपूर्य वर्तते वेति स्वतेजसेति शेषः। एवमपररूपेण स्तुत्वा पररूपेण स्तौति–किंभूतः सूर्यः? जगतः=जंगमस्य, तस्थुषः=स्थितिमतः–स्थावरस्य च विश्वस्य आत्मा=स्वरूपभूतः, यः तन्मण्डलमध्यवर्ती–सर्वस्य प्रेरकोऽन्तर्यामी परमात्माऽस्ति सोऽयं जीवरूपेण सर्वेषु शरीरेष्ववस्थित इति यावत्। स हि सर्वस्य स्थावरजंगमात्मकस्यकार्यवर्गस्य कारणम्, कारणाच्च कार्यं नातिरिच्यते, तथा च पारमर्षं सूत्रं–'**तदनन्यत्वमारम्भणशब्दादिभ्यः**।' (ब्रह्म. सू. २। १। १४) इति। तच्च तस्यात्मा। अनेन सूर्यात्माद्वैतमुच्यते, तथा चाम्नायते यस्य महत्त्वं–'**यमेतमादित्ये पुरुषं वेदयन्ते स इन्द्रः स प्रजापतिः तद्ब्रह्म**।' इति श्रुतेः।

# ( १८ )

## ( सर्वोत्कृष्टस्य सर्वाभिन्नस्य सर्वप्रविष्टस्य षोडशकलात्मकस्य पूर्णस्य पुरुषस्य वर्णनम् )

यथा रजतरङ्गादीनां शुक्त्यव्यतिरिक्तत्वं शुक्तौ तदारोपितत्वमन्तरा न सम्भवति, तथा सर्वस्य जातस्य प्रपञ्चस्य ब्रह्माव्यतिरिक्तत्वं तत्र तदारोपितत्व-मन्तरेण नोपपद्यते। यतः समारोपितपदार्थस्याधिष्ठानातिरिक्तायाः सत्ताया अभावादेव हेतोः तस्य वस्तुतोऽधिष्ठानमेव स्वरूपं न तस्माद्व्यतिरिक्तं वास्तवं स्वरूपमवगम्यते। तथा चाधिष्ठानब्रह्मसत्तैव प्रपञ्चसत्ता, नान्या, तदतिरिक्तसत्ता-शून्यत्वमेव प्रपञ्चस्य तदनन्यत्वं वेदितव्यम्। एवं जीवस्यापि तदनन्यत्वं गमयितुं शरीराद्याकारेण परिणतेषु सर्वभूतेषु परमात्मप्रवेशः प्रकल्प्यते, यतः प्रवेशस्य ब्रह्मात्मैकत्वज्ञानोपायत्वात्; अन्यथा प्रकारान्तरेण प्रवेशो नोपपद्यते। तथा हि—कार्यस्योपादानाव्यतिरेकात्, उपादानस्य ब्रह्मणोऽप्रविष्टदेशाभावात्प्रवेशो न सिद्ध्यति। यतोऽप्रविष्टमठादौ देवदत्तस्य प्रवेशमिव कार्योत्पत्तेरूर्ध्वं कारणस्य पृथक् प्रवेशासम्भवात्। ब्रह्मणोऽन्यस्य कस्यचित्प्रवेशाङ्गीकारे ब्रह्मप्रवेशबोधक-श्रुतिं व्याकुप्येत्। न च यथा कुम्भे कपालाद्यात्मना समवायिकारणं मृत्प्रविशति तथा जगत समवायिकारणमेव ब्रह्म जगदुत्पाद्य तत्र प्रविष्टमिति व्यपदिश्यते इति वाच्यम्, मृदोऽनेकात्मकत्वात्सावयवत्वाच्च कुम्भे कपालाद्यात्मना प्रवेशो युक्तः किन्तु परमात्मन एकत्वे सति निरवयवत्वाद्व्यापित्वे सत्यप्रविष्टदेशाभावाच्च न प्रवेश उपपद्यते। न च प्रवेशश्रवणेन तस्य मूर्तत्वं सम्भाव्य मुखे हस्तादिवत् प्रवेशो घटिष्यतीति वाच्यम्; तस्यामूर्तत्वेन कार्यव्यापित्वेन चाव्याप्तकार्यदेशा-भावात् न तत्प्रवेशः सम्भविष्यति। न च जलसूर्यप्रतिबिम्बादिवत्प्रवेशः

स्यादिति शङ्कयम्; यत आकाशादिनिखिलभूतकारणस्य तस्यापरिच्छिन्नत्वात्, तद्विप्रकृष्टदेशप्रतिबिम्बाधारभूतवस्त्वन्तराभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्तः। न च प्रवेशवचनादमूर्तस्य व्यापकस्यापि तस्य प्रवेशः स्यादिति वाच्यम्; वचनस्याकारकत्वात्। न हि वचनं वस्तुनोऽन्यथाकरणे शक्तं, किन्तु यथाभूतार्थविद्योतने। न च तर्हि गत्यन्तराभावात्प्रवेशवाक्यं 'श्रौतमुन्मत्तप्रलपितमिवानर्थकत्वात्परित्यज्यतामिति वाच्यम्; गत्यन्तरस्य पूर्वं प्रदर्शितत्वात्, प्रमाणभूतस्य श्रौतवाक्यस्यानर्थक्यासम्भवात्, प्रवेशनिमित्तपूर्वोक्तदोषाणां जीवब्रह्मणोरनन्यत्वात्मकतात्पर्यार्थलक्षणेन शस्त्रेण ध्वंसः कर्तव्यः। तथा च ब्रह्मणोऽसंसारित्वात्तदभेदाज्जीवेऽपि भातसंसारस्य कल्पितत्वादेकत्वज्ञानान्मोक्षोपपत्तेः, श्रौतो प्रवेशकल्पनाऽतीव सार्थकाऽवगन्तव्या। इत्थं स एव ब्रह्मपुरुषो मायैव जगदुत्पाद्य कल्पितान् सर्पादीन् रज्जुवदनुप्रविश्य षोडशकलोपेतः सन् बह्वीभिरुच्चावचदेवदानवमानवपशुपक्ष्यादिमूर्तिलक्षणाभिः प्रजाभिः स्वच्छन्दमनादिकालतो विक्रीडतीत्यभिप्रायमभिव्यञ्जयन्नेव भगवान् वेदस्तं वर्णयति—

**ॐ यस्मान्न जातः परोऽअन्योऽअस्ति,**<br>
**य आविवेश भुवनानि विश्वा।**<br>
**प्रजापतिः प्रजया सꣳरराणः,**<br>
**त्रीणि ज्योतीꣳषि सचते स षोडशी॥**

(शु. य. ८। ३६। श. ब्रा. ४। ४। ५। ६)

यस्मात्=पुरुषात् निखिलदृश्याकारपरिणतमायाधिष्ठानात्सर्वभासकत्सद्रूपेण स्फुरणरूपेण च सर्वानुस्यूतात्स्वप्रकाशपरमानन्दचैतन्यघनात्परमार्थसन्मात्रात्पर-

स्मादात्मनः 'स्वप्नदृश इव स्वाप्निकः प्रपञ्चः' 'मायाविन इव मायिकः' 'शुक्तिशकलावच्छिन्नचैतन्यादिव तदज्ञानकल्पितरजतादिः' जातः=सम्भूतः स्थावरजंगमलक्षणो द्वैतप्रपञ्चः परः=परमार्थसत्यः, अन्यः=व्यतिरिक्तः पृथक् सत्तावान् नास्ति=नविद्यते । परस्मात्पुरुषादन्यत्किञ्चिदपि परमार्थसत्यत्वेन परं वाऽपरं वस्तु नास्तीति यावत् । एवमखिलोऽपि नामरूपात्मको द्वैतप्रपञ्चो नाममात्रत्वान्मिथ्याभूतः । एकमात्रः परमपुरुष एव परमार्थसत्य इति शुद्धाद्वैतलक्षणपुरुषस्योपदेशोऽयं परिभावनीयः । तत्रैतत्स्मृतं गीतासु निरञ्जनपुरुषेण—'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥' ( गी. ७ । ७ ) इति । तथैव भगवन्तो बादरायणाचार्या अपि ब्रह्ममीमांसायां सूत्रयामासुः—'तथाऽन्यप्रतिषेधात् ।' ( ब्र. सू. ३ । ३६ ) इति । न ब्रह्मणोऽन्यत्किञ्चिद्भवितुमर्हति, प्रमाणाभावात्, न ह्यन्यस्याऽस्तित्वे किञ्चित्प्रमाणमुपलभामहे, सर्वस्य हि—जनिमतो वस्तुजातस्य—जन्मादि ब्रह्मणो भवति, यद्धि यत उत्पद्य यत्र स्थित्वा प्रलीयते च तस्मात्तो भिन्नसत्तां न प्रतिपद्यते इति । निर्धारितमनन्यत्वं हि कारणात्कार्यस्य । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ।' ( छां. ६ । २ । १ ) इति श्रौतावधारणात् । एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते । 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ।' ( ऋ. १० । १२९ । २ ) 'एकं वा इदं विबभूव सर्वम्' ( ऋ. ८ । ५८ । २ ) 'स एवाधस्तात्' ( छां. ७ । २५ । १ ) 'अहमेवाधस्तात्' ( छां. ७ । २५ । १ ) 'आत्मैवाधस्तात्' छां. ७ । २५ । २ ) 'पुरुष एवेदꣳ सर्वम्' ( ऋ. १० । ९० । २ ) ( य. ३१ । २ ) 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ।'

( बृ. २ । ४ । ६ ) 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' ( छां. ७ । २५ । २ ) 'नेह नानास्ति किञ्चन' (बृ. ४ । ४ । १९) 'यस्मात्परं नापरमस्ति किञ्चित्' (श्वे. ३ । ९) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' ( बृ. २ । ५ । १९ ) इत्येवमादीनि श्रौतानि वचांसि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं सुस्पष्टं वारयन्ति । सर्वान्तरश्रुतेः प्रवेशश्रुतेश्च न परस्मादात्मनोऽन्य अन्तरात्माऽस्तीत्यवधार्यते इति शास्त्ररहस्यं परिभाव्य नात्र भिदया प्रसञ्जनीयमिति तत्त्वम् । अत एव यः=परमात्मा, विश्वा=विश्वानि–सर्वाणि, भुवनानि=भवनधर्मकाणि–सर्वलोकवर्तिदृश्यमानशरीराकारेण परिणतानि–भूतजातानि, अधिवेश=प्रविवेश, अन्तर्यामिप्रत्यगात्मरूपेण प्रविष्टवान् इत्यर्थः । 'अनेन जीवेनात्मनाऽनुप्रविश्य' ( छां. ६ । ३ । २ ) इति श्रुत्यन्तरात् । तथा च मुमुक्षुभिर्विशुद्धसत्त्वैः सर्वविकल्पास्पदः स्वतो निर्विकल्पः, स एक एवान्तरात्मा सर्वानुस्यूतः सर्वानन्यः पूर्णाद्वितः समस्तचराचरभूतेभ्यभेदेनाधिगन्तव्य इति प्रवेशश्रुतिरियं सूचयति। एवं सत्यपि ब्रह्मव्यतिरिक्तं वस्तु किञ्चिदस्तीति साग्रहेण वदन् वादी विवेकेन प्रष्टव्यः, किमचेतनं जगद्ब्रह्मव्यतिरिक्तमस्तीत्युच्यते ? आहोस्विच्चेतनो जीवस्तद्व्यतिरिक्तोऽस्तीत्यभिधीयते ? आद्येऽचेतनत्वपक्षेऽपि किं सृष्टेरूर्ध्वभावि वस्तु ब्रह्मव्यतिरिक्तमुत पूर्वभावि ?; न तावदूर्ध्वभाविनो व्यतिरिक्तत्वं, यतस्तस्य जातस्योर्ध्वभाविनो वस्तुनो 'यस्मान्न जातः परोअन्यो अस्ति' इत्यत्रैव निषेधप्रतिपादनात् । नापि पूर्वभाविनो व्यतिरिक्तत्वं वक्तुं शक्यते ! यतः सृष्टेः पूर्वं 'तस्माद्धान्यन्न परः किञ्चनास' (ऋ. १० । १२९ । २) 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन' ( ऐ. उ. १ । १ । १ ) 'एकमेवाद्वितीयम्' ( छां. ६ । २ । १ ) इत्यादिश्रुत्यन्तरे-

भ्यस्तस्यापि प्रतिषेधप्रतिपादनात्। नापि चेतनस्य जीवस्य ब्रह्मव्यतिरिक्तत्वम्! यतो जीवात्मना तस्यैवात्राप्यन्यत्रापि प्रवेशश्रवणात्। '**यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्**' (ऋ. ८। ४४। २३) '**तत्त्वमसि**' (छां. ६। ८। ७) इत्यादिश्रुतिभ्यस्तदभेदप्रतिपादनाच्चेति समाधेयम्।

अथ स एव प्रजापतिः=स्वोत्पन्नचराचरप्रजायाः पालकः संरक्षको विश्वाध्यक्षः, त्रीणि=ज्योतींषि=अग्निवायुसूर्यलक्षणानि; यद्वाऽग्न्यादित्यचन्द्ररूपाणि तेजांसि विषयज्ञापकानि सचते=सेवते–स्वतेजसा चैतन्येन तज्ज्योतिषां सत्तास्फूर्तिं प्रदायोज्जीवनं करोतीति यावत्। यत्रैते श्रुतिस्मृतिवादा भवन्ति–'**येन सूर्यः तपति तेजसेद्धः**' (तै. ब्रा. ३। १२। ९। ७) '**ममास्मि शशिसूर्ययोः**' (गी. ७। ८) '**तेजश्चास्मि विभावसौ**' (गी. ७। ९) '**जीवनं सर्वभूतेषु**' (गी. ७। ९) इत्यादयः। यद्वा सचते=समवैति–तादात्म्यसम्बन्धं प्राप्नोति इत्यर्थः। किंभूतः प्रजापतिः? प्रजया=स्वस्मादुत्पन्नया विविधोच्चावचचराचरमूर्तिरूपया संरराणः=सम्यग्रममाणः विक्रीडन्। तथा षोडशी=षोडशकलात्मकलिङ्गशरीरोपहितः इत्यर्थः। लिङ्गस्य षोडशकलास्तु पञ्चप्राणाः, पञ्चश्रवणादीनि ज्ञानेन्द्रियाणि, पञ्च हस्तादीनि कर्मेन्द्रियाणि, एकमन्तःकरणमिति। स एव सर्वव्यवहाराश्रय इति भावः। यद्वा प्रश्नोपनिषत्प्रतिपादिताः–'प्राण–श्रद्धा–ऽऽकाश–वायु–तेजो–जल–पृथिवी–न्द्रिय–मनो–ऽन्न–वीर्य–तपो–मन्त्र–कर्म–लोक–नामाख्याः' एताः षोडश कलाः अविद्यादिदोषेण 'तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकाद्याः' उपाधिभूताः सृष्टा विद्यन्ते यस्य सः षोडशकलोपहितः पुरुषः षोडशीत्युच्यते, मत्वर्थीय इनिः प्रत्ययः। तदुक्तं–'**एवमेवास्य परिद्रष्टुरिमाः षोडशकला पुरुषायणाः**' (प्र. उ. ६। ५) इति। अयं भावः–तत्र हि प्राणश्रद्धादिकं कृत्स्नमपि

जगत् षोडशकलारूपं परमेश्वरः ससर्जेति श्रुतं, तथा सति मृद्घटन्यायेन कार्यकारणयोरव्यतिरेकात् षोडशकलारूपेण जगता सह तादात्म्यसम्बन्धादयं परमात्मा षोडशीपदाभिधेयो भवतीति भावः। यद्वा छान्दोग्योपनिषदि सत्यकामजाबालाय धात्र्यादिदेवैरुपदिष्टः प्रकाशवदनन्तवज्ज्योतिष्मदायतनवदाख्यचतुष्पाद्ब्रह्म ब्रह्मणः प्राचीप्रतीचीदक्षिणोदीचीदिक्पृथिव्यन्तरिक्षस्वर्गसमुद्राग्निसूर्यचन्द्रविद्युत्प्राणचक्षुःश्रोत्रमनोलक्षणाः षोडशकलाः विद्यन्ते यस्य सोऽसौ तदुपहितः पुरुषः षोडशीति। तदेवं चतुष्पाद् षोडशकलं षोडशावयवमुपास्यं ब्रह्म श्रुत्यन्तरेऽपि प्रसिद्धमत्र 'षोडशी' नाम्ना प्रतिपाद्यते। तथा च तस्य सर्वान्तर्यत्वसाधकं सर्वगतावस्थानलक्षणं सर्वान्तर्यामित्वमाम्नायते–'यः सर्वेषु भूतेषु तिष्ठन्' इत्यादिकमन्तर्यामिब्राह्मणे वाजसनेयके' (बृ. ३।७।१५) इति। तदुक्तमाचार्यैः–'त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं, त्वं चेतनासि पुरुषे पवने बलस्त्वम्। त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा, निःसारमेतदखिलं त्वदृते यदि स्यादिति॥'

## (१९)

### (सवित्रादयोऽष्टौ देवाधिपतयो युष्मान् सद्वृत्तान्नानाधिपत्यानि वितरन्तु इति महापुरुषशुभाशीर्वादः)

देशनेतृत्व–आदर्शगार्हस्थ्य–विशालसफलभूमिस्वामित्व–पूर्णपाण्डित्य–स्वार्थत्यागपरोपकारदेवोपासनादिसद्गुणलभ्यसर्वश्रेष्ठत्व – सत्यप्रियहितवक्तृत्व–गवादिपशुरक्षकत्व–धर्माचरणशीलत्वलक्षणानां विविधाधिपत्यानां लोकाभीप्सितानामनवाप्तयेऽसाधारणकारणं महापुरुषशुभाशीर्वादं प्रतिपादयति–

**ॐ सविता त्वा सवानाᳫं सुवतामग्निर्गृह-**
**पतीनाᳫं सोमो वनस्पतीनाम् ।**
**बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः**
**पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥**

( शु. य. ९ । ३९ )

सविता=आदित्यदेवः यद्वा सूर्यमण्डलस्थो जगत्स्रष्टा परमेश्वरः, सवानां=प्रसवानां–आज्ञानामाधिपत्ये हे भद्रमनुज ! त्वा=त्वां सुवतां=प्रसुवतां–अभ्यनुजानातु–अनुगृह्णातु–प्रेरयत्विति यावत्। सर्वेषां देशवास्तव्यानामाज्ञाप्रदाने सर्वमान्यः सर्वहितेरतो देशनेता श्रेष्ठाधिकारी त्वं भवेत्याशयः । अग्निः=देवताविशेषः, तत्राधिष्ठितो भगवान् वा, गृहपतीनां=गृहस्थानामाधिपत्ये त्वां सुवतामित्यनुवर्तते, अतिथिसत्कार–ऋतुकालभार्यासम्बन्ध–प्रशस्तप्रजाजननादिविशिष्टगुणोपेतमादर्शगार्हस्थ्यं प्राप्यान्यैर्गृहस्थैरनुकरणीयसच्चरितः प्रशंसनीयस्त्वं भवेति यावत् । सोमः=चन्द्रमा; यद्वा उमया भगवत्या सह वर्तमानो महादेवः शङ्करः सोमः । वनस्पतीनां=वृक्षाणामाधिपत्ये त्वां सुवताम्। इदमुपलक्षणम् । विशालभूमिस्थाः सर्वे वृक्षाः सर्वा व्रीहिगोधूमाद्या ओषधयः तवोपकारका भवन्तु सोमकृपया विस्तृतसफलभूम्यधिपतिस्त्वं भवेति यावत् । बृहस्पतिः=देवः परमात्मा वा वाचे=वागर्थं त्वां सुवतां=पाण्डित्यायाभ्यनुजानातु, यद्वा ‘ वाचे ’ इति षष्ठ्यर्थे चतुर्थी, वाचः–आधिपत्ये सुवताम्। बृहस्पत्यनुग्रहेण त्वं विशिष्टः सत्क्रियः पण्डितो भवेति यावत् । इन्द्र ज्यैष्ठ्याय=ज्येष्ठभावाय त्वां सुवताम्, विशिष्टसद्गुणधारणेन त्वं सर्वश्रेष्ठो भवेति यावत् । तदुक्तं–‘ गुणैः प्राप्नोति मानुष्यं देवत्वञ्च गुणैरपि । गुणाधिक्येन सिद्धत्वं गुणपूर्णेषु हीशताम् ।’

इति । रुद्रः पशुभ्यः=गवादिपशवर्थं तद्वाधिक्ये वा त्वां सुव्रताम् । गवादिपशु-पालकत्वं रुद्रशक्तिसहायेन भवेति यावत् । तदुक्तं गवादिपशूनां महत्त्वं—'तुष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति । संरक्षितास्चोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित् ॥' इति । अत एव 'वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः । गावः कृशातुराः पाल्याः श्रद्धया पितृमातृवत् ॥' इति । मित्रो देवः, सत्यः=सत्याय 'सुखं सुखद्' इत्यादिना चतुर्थ्याः सु आदेशः, सत्यं, प्रियं, हितं, मितं, वदितुं, त्वां सुव्रतां स यादियदनशीलत्वं भवेति यावत् । समुपदिष्टं मनुनापि तत्—'सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियञ्च-नानृतं ब्रूयादेष धर्मः सनातनः ॥' (मनुस्मृतिः) इति । वरुणो देवः, धर्मपतीनां=धर्मेश्वराणां—धर्मशीलानामाधिपत्ये त्वां सुव्रतां त्वं सदा सद्धर्मानुष्ठान-प्रचारपरो भवेति यावत् । तदुक्तं—'अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥' इति च । सवित्रादयोऽष्टौ देवतास्त्वां सनुजनपथिकं सद्भूतमास्तिकं नानाविधशक्तीर्न द-दतीति शुभाशीर्वादसूचको निष्कृष्टोऽर्थः । इति ॥

## ( २० )

### ( सर्वव्यापी सर्वाधिष्ठान एक एव पूर्णब्रह्मात्माऽस्ति नात्मभेदः कथञ्चन इत्यद्वैतसिद्धान्तवर्णनम् )

यः पुमान् विवेकाविवेकं विद्यया चाविद्यां परित्यजति, तस्य स्वेन सहितं सर्वमपि जगद्ब्रह्मरूपेणावभासते, इत्यतः सर्वव्यापिनं सर्वाधिष्ठानं पूर्ण-मद्वैतं मायातत्कार्याभ्यां विविधनामरूपात्मना प्रतीयमानमपि वस्तुत सर्वैकरूपं

ब्रह्मात्मतत्त्वं भेदभ्रमनिरासाय ब्रह्माकाराखण्डसमवृत्यात्मकविद्यालाभाय च वर्णयति—

ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्,
होता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा
ऋतजा अद्रिजा ऋतं बृहत् ॥

( शु. य. १० । २४ + १२ । १४ । ऋ. ४ । ४० । ५ । तै. सं. १ । ८ । १५ । २ + ४ । २ । १ । ५ तै. आ. १० । १० । २ )

स सर्वात्मा भगवान् हंसः=हन्ति गच्छत्याकाशाध्वानमिति, हन्ति=विध्वंसते पापं साधूनां स्मरणादिनेति वा दुष्टानामहङ्कारं वेति हंसः=आदित्यपुरुषः, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः' ( छां. १ । ६ । ६ ) इत्यादिश्रुत्युक्तो मण्डलाभिमानी देव इत्यर्थः । 'हन हिंसागत्योः' स्मरणात् । 'योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादिश्रुत्युक्तप्रकारेणैकीकृत्य यो हंसमन्त्रेणोपास्यो भवति । स एवायं हंसपदाभिधेय इति यावत् । एवमत्र यश्च सर्वप्राणिचित्तान्तरवस्थितः प्रत्यगात्मा, यच्च निरस्तसमस्तोपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति 'हंसः सोऽहम्' इति हंसपदस्य यथावृत्या गम्यं भवतीति ध्येयम् । यदाहुः सदाचारानुसन्धाने श्रीमच्छंकरभगवत्पादाचार्याः—'सर्वत्र प्राणिनां देहे जपो भवति सर्वदा । हंसः सोऽहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥' इति । कीदृशोऽयं हंसः परमात्मा ? इत्यत आह—शुचिषद्—आदित्यात्मना शुचौ दीप्तिमति दिवि सीदति सञ्चरतीत्यर्थः, अनेन द्युस्थानः सूर्यो ब्रह्मात्मरूपेण प्रतिपादितः, स एव मध्यस्थानो वायु-

रित्याह—वसुः=सर्वस्य वासयिता वायुः वासयति—आच्छादयति सर्वमिति तद्व्युत्पत्तेः, सूत्रात्मरूपेण जगन्निवासहेतुत्वाद्वायुः वसुः, स च अन्तरिक्षसद्=अन्तरिक्षसञ्चारी, अन्तरिक्षे सीदतीति तद्व्युत्पत्तेः। अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह—होता=देवानामाह्वाता होमनिष्पादको वा गार्हपत्याद्यग्निः, '**अग्निर्वै होता**' इति श्रुतेः। स च वेदिषद्=वेद्याम्—पृथिव्यां सीदतीति, '**इयं वेदिः परोऽन्तः पृथिव्याः**' इत्यादिमन्त्रेण यज्ञे प्रसिद्धाया वेद्याः पृथिवीत्वभावकथनाद्वेदिशब्दवाच्या पृथिव्यत्र बोद्धव्येति। तस्यैवातिथ्यादिरूपतामाह—अतिथि=सोमः सन् दुरोणे=कलशे सोमरसाधारपात्रे सीदतीति दुरोणसद्, यद्वा अतिथिः=अमावास्यादितिथिविशेषमनपेक्ष्य भोजनप्राप्त्यर्थं तत्र तत्र गच्छन् मनुजो वैदेशिकोऽभ्यागतः सर्वसत्करणीयो ब्राह्मणसार्थ्वादिरूपः सन् दुरोणेषु=गृहेषु सीदतीत्यर्थः। '**अभ्यागतः स्वयं विष्णुरि**'ति स्मरणात्। अथ तस्यैव मनुष्यादिषु विद्यमानतामाह—नृषु=मनुष्येषु—प्रत्यक्चैतन्यरूपेण सीदतीति नृषद् इत्यर्थः। वरसद्=वरेषु—उत्कृष्टेषु—देवादिविग्रहेषु—उपास्यरूपेण सीदतीति। यद्वा वरे—श्रेष्ठे काशीहरद्वारादौ तीर्थे पूजनीयदेवमहात्मादिरूपेण सीदतीति '**नमस्तीर्थ्याय च**' (यजु. १६।४२) ति श्रुतेः। ऋतसद्=ऋतं—सत्यं, वैदिकं कर्म यज्ञो वा तस्य फलावश्यंभावित्वात् ऋतशब्दाभिधेयता। तस्मिन् फलरूपेण सीदतीत्यर्थः। व्योमसद्=व्याम्नि—आकाशे, पक्ष्यादिरूपेण नक्षत्रादिरूपेण वा सीदतीत्यर्थः। एवं सर्वत्र विविधरूपतोऽवस्थिततया तं महात्मानं प्रतिपाद्य सर्वत्र विविधरूपेण समुत्पन्नत्वेनापि तमेव प्रतिपादयति—यः अब्जा=अप्सु—उदकेषु शङ्खशुक्तिमकरमत्स्यादिविविधरूपेण जायते—समुत्पद्यते सोऽसौ—अब्जा इत्यर्थः। '**यो अप्सु तिष्ठन्**' (बृ. ३।७।४) इति श्रुतेः। गोजा=पृथिव्यां चतुर्विधजरायुजादिभूतग्रामरूपेण जा-

यते इति गोजा । ऋतजा=यज्ञाङ्गरूपेण जायते इति । यद्वा ऋते=यज्ञे तद्धो-क्तृत्वेन जात इति । 'मोक्तारं यज्ञकर्मणामि' ति स्मृतेः । अद्रिजा=अद्रिभ्यः—पर्वतेभ्यो गङ्गादिनद्यादिरूपेण जायते इति । इत्थं यदेव तत्वं विविधात्मनाऽवस्थितं समुद्भूतञ्च तदेव ऋतं=सर्वत्र गतं प्राप्तमित्यर्थः । 'ऋ गतौ' स्मरणात् । यद्वा ऋतं=परमार्थसत्यं त्रिकालाबाध्यं अवितथस्वभावमेवेत्यर्थः । बृहत्=महत्—सर्वकारणत्वात्सर्वाधिष्ठानत्वाच्च । एवं परब्रह्मरूपो यः सर्वात्मा हंसस्तं सर्वरूपेण स्वस्वरूपेण च मुमुक्षुः सदा सादरं भावयेत् । 'हंसः' इत्यारभ्य 'अद्रिजा' इत्यनेनोक्तं यन्निखिलं जगदस्ति, तत् ऋतं=सत्यं, बृहत्=ब्रह्मैव, नास्ति ततो मनागपि भिन्नमिति । अज्ञानिदृष्ट्या तज्जगद्रूपेण भासमानमपि सर्वं ज्ञानिदृष्ट्या ब्रह्मैवेतिज्ञेयम् । ननु—एवं सर्वत्र ब्रह्मदर्शने कृते सति व्यवहार-प्रयोजकं द्वैतदर्शनं नानुवर्तिष्यते, तदनुवर्तने च कथं ब्रह्मदर्शनं सिद्धयेत् ? इति चेन्मैवम् ; द्वैतदर्शनानुवर्तनेऽपि तन्मिथ्यात्वनिश्चयलक्षणबाधसहचरि-तब्रह्मदर्शनाभ्यासस्याविरुद्धत्वादिति। तदुक्तं महानुभावैः—' पुङ्खानुपुङ्खविषये-क्षणतत्परोऽपि ब्रह्मावलोकनधियं न जहाति योगी । संगीततालपरि-नृत्यवशंगताऽपि मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥' इति । अस्य मन्त्रस्य जपफलमाह शौनकः—' हंसः शुचिषदित्यृचा शुचिरीक्षेदिवाक-रम् । अन्तकाले जपन्नेति ब्रह्मणः सद्म शाश्वतम् ॥ ' ( ऋग्विधाने २ । १२ ) इति ।

अथाधिदैवतम्—अनेनादित्यस्स्तुतो भवति । तथा हि—हंसः=हन्तिर्गत्यर्थः सर्वदा गन्ता, अन्धकारादिहन्ता वा, स च शुचिषद्=दीप्तद्युलोके सञ्चरणशील इत्यर्थः । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ( छां. ३ । १३ । ७ ) इत्यादिश्रुतेः । स च वसुः अन्तरिक्षसत् वायुरूपः, होता वेदिषत्

थग्निरूपः, अतिथिरसदा पूज्यो नमस्करणीयश्च, दुरोणसत्=गृहेषु रश्मिप्रकाशात्मना स्थितो नृषत्=जीवात्मना मनुष्येष्वपि स्थित '**योऽसावसौ पुरुषः सोऽहमस्मि**' ( शु. य. ४० । १६ ) इति तदभेदश्रवणात् । वरसत्= वरे वरणीये मण्डले सीदतीति, '**वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति**' ( ४ । २० ) इति हि श्रूयते । ऋतसत्=ऋते–सत्यनतेऽवस्थित', व्योमसत्=योम्ययं प्रत्यक्षत्वेनावस्थितः । अब्जा=उदकमध्ये स्वयं जायते, **गोजाः**=गोषु–रश्मिषु जातः, ऋतसत्=सत्ये ब्रह्म तस्माज्जात । अद्रिजा= अद्रौ उदयाचले जातः । एवं महानुभाव आदित्यः, ऋतं बृहत्=सत्यं ब्रह्म, तद्रूपो ह्यसौ इति ।

अनेनाग्निर्वा स्तुतो भवति–हंसः=आहवनीयादिदेशेषु गच्छति–शीतादिकं हन्ति वा, शुचौ पवित्रे यजने सीदतीति शुचिषत् । यजमानं वासयतीति वसुः, अन्तरिक्षे धूमज्वालारूपेण सीदतीत्यन्तरिक्षसत् । होता–देवानामाह्वाता येषां यज्ञसम्बन्धित्वया सीदतीति वेदिषत् । अतिथिः सम सन् यजमानगृहेषु सीदतीति दुरोणसत् । नृषु जाठराग्निरूपेण सीदति । वरे श्रेष्ठे श्रोत्रियगृहे सीदति । ऋते–यज्ञे तन्निष्पादकत्वेन सीदति, व्योम्नि सूर्यरूपेण सीदति । अप्सु=वृष्टिधारारूपासु वैद्युतरूपेण जायते । गोकार्ये घृते ज्वालारूपेण जायते । ऋतार्थं= यज्ञार्थमेव जातत्वादृतजा· अद्रौ पर्वते दावानलरूपेण जायते, ईदृशो वैदिकोऽग्नि ऋत बृहत् प्रौढविभूतिसमुपेत इति यावत् ॥

यद्यपि मन्त्रेणानेनाधिदैवपक्षे आदित्यस्याग्नेश्च विभूतिमहिमव्याख्यानेऽपि तयोरात्मभावाङ्गीकरणेन सर्वत्र एक एवाद्वैतात्मा नान्या ममेदं इत्यध्यात्मव्याख्यानस्य नास्ति कश्चित् विरोध इत्यवगन्तव्यम् ।

# ( २१ )

( कल्याणस्वरूपस्यानन्दनिधेः शिवस्य स्वहृदये च सर्वत्र च प्रकटानुभवाय तदभ्यर्थनम् )

मुमुक्षुः वैराग्यशमदमादिसाधनसम्पदमासाद्य ब्रह्मनिष्ठं वितरागं श्रोत्रियं गुरुमुपसत्य सदाशिवं परमात्मानं परिमार्गयेत्। तत्परिमार्गणे तदेकशरणतया तदेकान्तभक्तिरेव प्रयोजिका। यदा चायमन्यासङ्गं परिहाय तत्प्रकटानुभवाय तमेव पौनःपुन्येन प्रार्थयते तदाऽसौ स्वं याथात्म्यं सबाह्योऽन्तर्बहिः सर्वं प्रकाशयति, इत्यतस्तत्प्रकटानुभवासाधारणं कारणं तदभ्यर्थनमनेन वर्णयति—

**ॐ शिवो भूत्वा मह्यमग्ने। अथो सीद शिवस्त्वम्।**
**शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः**

(शु. य. १२ । १७)

हे अग्ने !=विश्वप्रेरक ! सर्वान्तर्यामिपरमात्मन् ! इष्टदेव ! मत्तरु शिवः=शान्तः—कल्याणः, पूर्णानन्दनिधिस्त्वमसि; यद्वा कल्याणकार्यसि, अथो अतः वर्णव्यत्ययः, मह्यं=त्वामेव प्रपन्नाय त्वामेवासकृत् याचमानाय मदर्थं शिव = शान्त —द्वैतप्रपञ्चतद्बीजमायोपद्रवरहितो निरञ्जनो विशुद्धो भूत्वा, यद्वाऽखण्डनिर्मलैकरससुखात्मको भूत्वा सीद=मद्धृदये प्रतितिष्ठ। तत्रावस्थितं त्वामेवान्तर्मुखनिरोधवृत्त्या यथा सदा स्वात्मना प्रकटं पश्यामि तथा मामनुगृहाणेत्याशयः। तथा सर्वाः पूर्वाद्या दिशः। शिवाः=शान्ताः—आसक्त्याद्युपद्रवाजनकाः कृत्वा, यद्वा मम दिक्षु अवस्थितान् स्थावरजंगमलक्षणान् सर्वान् पदार्थान् तात्स्थ्ये लक्षणा मञ्चाः क्रोशन्तीतिवत्, शान्ताः=शान्तान् नामरूपादिमिथ्याप्रतीतिशून्यान्—

कल्याणात्मस्वरूपभूतान् कृत्वा, इह=अस्मिन्—जगति स्वं योनिं=स्वकीयमतिशयातिप्रियलक्षणं पारमार्थिकं कारणस्वरूपं आसदः=स्वमङ्गीकुरु—प्रकटीकुरु, सर्वत्र सर्वात्मनाऽऽवरणमपाकृत्य मह्यं प्रकटीभवेतियावत् । 'छन्दसि लुङ् लङ्लिटः' इति लोडर्थे लुङ् ॥

# ( २२ )

( सर्वत्र ममोद्प्रयोजकब्रह्मानुभवेन सर्वे पदार्था मधुरा भवन्ति )

अनवरतब्रह्मभावनमदविघूर्णमानमानसाः सत्यतत्त्वदर्शिनः सिद्धा महापुरुषाः सर्वमिदं विश्वं ब्रह्मरूपेणावलोकयन्ति । अतएव 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।' इति न्यायेन तेषां कृतेऽखिला वाय्वादिपदार्थाः प्रसादभरिता आनन्दप्रदा मधुरा भवन्ति । ते चामी किल ब्रह्मामृतरसास्वादासक्ता महानुभावाः करुणयाऽहैतुक्या शिष्यान् मुमुक्षून् स्वीयानुभवं ज्ञापयितुमाहुः—

ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो वनस्पति र्मधुमाꣳ २ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

( शु. य. १३ । २७+२८+२९ ) ऋ. १ । ९० । ६ । तै. सं. ४ । २ । ९ । ३ ) ( तै. आ. १० । १० । १० । श. ब्रा. १४ । ९ । ३ । ११ )

ऋतायते=ऋतं—पारमार्थिकं सत्यं ब्रह्म तत्त्वं द्रष्टुमिच्छतीति—ऋतयन्—

तस्मै ऋतयते—ऋतायते—इच्छासाध्यं सर्वत्र ब्रह्मदर्शनं कृतवते ब्रह्मनिष्ठाय महापुरुषाय, ऋतशब्दात् 'सुप आत्मनः क्यच्' इति क्यच् प्रत्ययः संहितायां छान्दसो दीर्घः। अत्र जातावेकवचनं, व्यक्त्यभिप्रायेण तु बहुवचनं ऋतायद्भ्य इति द्रष्टव्यम्। वाताः=वायवः ब्रह्मभावनया भाविताः, मधु=माधुर्योपेतं लोकोत्तरमहामोदसाम्राज्यमखण्डं महासुखमित्यर्थः। '**रसो वै मधु**' (श. ब्रा. ७।५।१।४) '**रसो वै सः, रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति**' (तै. आ. ८।२।७) इत्यादिश्रुत्या मधुशब्दस्यानन्दलक्षकत्वमविरुद्धम्। क्षरन्ति=वर्षन्ति प्रयच्छन्तीत्यर्थः। यद्वा मधु=मधुगन्धः—मधुराः—प्रमोदप्रदाः सन्तो वाता वान्तीति शेषः। अग्रे मतुप्प्रत्ययदर्शनात् सर्वत्र मधुशब्दाग्रे मतुप्प्रत्ययस्यानुषङ्गोऽपि द्रष्टव्यः। तथा सिन्धवः=स्यन्दनशीलाः सर्वा गङ्गाद्या नद्यः, सर्वे समुद्राश्च मधु क्षरन्ति=वर्षन्ति—समर्पयन्तीत्यर्थः। तथा नः=अस्मभ्यो ब्रह्मनिष्ठेभ्यः, ओषधीः=ओषधयः फलपाकान्ता व्रीहियवाद्या इत्यर्थः। ओषः=पाकः—आसु—धीयते इति तद्व्युत्पत्तेः। माध्वीः=माधुर्योपलक्षितब्रह्मसुखसमर्पिकाः सन्तु=सन्ति—भवन्तीत्यर्थः। 'तिङां तिङः' इति नियमेन लटि लोडादेशः। तथा नक्तं=रात्रिः, मधु=मधुमती—माधुर्योपेतसुखप्रदा भवति। उत=अपि च, उषसः=उषःकालोपलक्षितान्यहानि च मधुमन्ति भवन्ति। किं बहुना? पार्थिवं रजः=पृथिव्याः सम्बन्धि रजःकणादिकमपि मधुमत् भवति। यद्वा रजः शब्दो लोकवाची, पृथिवी मातृभूतो लोकोऽयं—प्रत्यक्षेण वर्तमानो मधुमान् भवति। तथा नः=अस्मभ्यं चित्सुखसत्यतत्त्वपरायणेभ्यः। पिता=पितृभूतो वृष्ट्यादिना पालकत्वात्, द्यौः=द्युलोकोऽसौ मधु=मधुरानन्दप्रदः, अस्तु=अस्ति। तथा नः अस्मभ्यं, वनस्पतिः=अश्वत्थप्लक्षसालादिवृक्षसमुदायः, मधुमान्=प्रशस्तः परमानन्दाभिव्यञ्जकःप्रदेयो मधुरगुणो विद्यते यस्मिन् सः तत्तथा, प्राशस्त्यार्थे मतुप्।

तथा सूर्यः=आदित्यमण्डलं, मधुमान्—अस्तु=अस्ति । तथा नः=अस्माकं ब्रह्मविदां गावः=सर्वाणि चक्षुरादीनीन्द्रियाणि—सर्वत्र सदा ब्रह्मदर्शनश्रवणस्पर्शनादिकरणशीलानि, माध्वीः=मधुमत्यः=मधुरनिर्मलानन्दप्रदाः भवन्तु=भान्ति। तदुक्तं—'यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् । यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् । दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं—जगत् । ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः । तस्मादेतानि-ब्रह्मैव भवन्तीति विभावय ॥ उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते। तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥ ब्रह्मैव सर्वनामानि रूपाणि विविधानि च । कर्माण्यपि समग्राणि बिभर्तीति विभावय । वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भासुरम् ।' इति । अत्राय तात्पर्यसंग्रहश्लोकः—'जगदिदमचरं चरञ्च मधु चाहं,मधुमयमेव समस्तमाविभाति। न हि किल विलमानमत्र शब्दार्थतरं किमप्यमधुस्वरूपमस्ति ॥' इति । इदमत्राकूतं ब्रह्मविदो महात्मानोऽनवरतं सर्वान् पदार्थान् ब्रह्मभावनया विभावयन्ति, तया किल ब्रह्मानुभवज्योतिःप्रताप.प्रादुर्भवति, तेन हि तेषां चित्तरूपकं द्रवीभूतं सत् सच्चिद्घनामृतमधुरसुखसागरे विलीयते, अत एव तान् नामरूपक्रियाकारकफल नव संसारभ्रान्तिदर्शनजनितरागद्वेषादिदोषसम्पादिताः संतापाः कदापि न संस्पृशन्ति, किन्तु तेषु सर्वत्र मधुरा. मोदाः प्रमोदाः सन्तुष्टय एवाजस्रं समुल्लसन्ति । यदाहुः—श्रीमच्छङ्करभगवत्पादाचार्याः—'चिदमृतसुखराशौ चित्तफेनं विलीनं क्षयमधिगत एव वृत्तिचञ्चत्तरङ्गः । स्तिमितसुखसमुद्रो निर्विचेष्टः सुपूर्णः क्वयमिह मम दुःखं सर्वदैकोऽहमस्मि । आनन्दरूपोऽहमखण्डबोधः परात्परोऽहं घनचित्प्रकाशः । मेघा यथा व्योम न च स्पृशन्ति संसारदुःखानि न मां स्पृशन्ति ॥' इति ।

इदमपि बोध्यम् । अत्र मधुपदार्थः परमानन्दसमर्पको ब्रह्मभावनलक्षणः प्रत्येतव्यः । लोकेऽपि तृप्तिप्रमोदलक्षणस्यानन्दस्य समर्पकः पदार्थो मधुररस इत्युच्यते । ब्रह्मभावनमपि कृतकृत्यत्वनिरङ्कुशतृप्तिलोकोत्तरप्रमोदादिलक्षणस्य ब्रह्मविदामानन्दस्य समर्पकत्वात् मधुररसो भवति । रसनीयवेदान्तवाक्यालोचनजनितानवरतब्रह्मभावनस्यास्वादनीयतया तत्त्वात् । तदेव प्रीतिपुरःसरमजस्रं तत्त्वविद्भिरास्वाद्यते, तस्य प्रीतिश्चानन्दसमर्पकत्वमन्तरेण न सम्भवति । तस्मान्मधुशब्देनात्र पुनः पुनः आस्वाद्यं परमानन्दकारणं ब्रह्मभावनमेव मधुररसो वेदितव्यः । तथा च ब्रह्मभावनया भावितानां सर्वेषां वाय्वादिपदार्थानामपि परम्परया प्रमोदादिलक्षणस्यानन्दस्य समर्पकत्वेनास्वाद्यत्वेन च मधुररसत्वं सम्भवत्येव । अत एवाम्नायते वाजसनेयके ब्राह्मणे—'**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच**' (बृ. २ । ५ । १७) '**अयमात्मा सर्वेषां भूतानां मधु**' (बृ. २ । ५ । १४) इति । अनवरतब्रह्मभावनमेव विद्यालक्षणं मधु उवाचेत्यर्थः । परमानन्दरूपत्वेनात्मनो मधुत्वं त्वस्त्येवेति ॥

अथवाऽनेन मधुसूक्तेन पुण्यकर्माणः क्षालितान्तःकरणाः तत्त्वबुभुत्सवो मुमुक्षवः साधकाः किल सर्वत्र सदा परमानन्दप्रयोजकं ब्रह्मभावनलक्षणं मधु विमलानन्दनिधेः परमात्मनः प्रार्थयन्ते इत्याह—ऋतायते=ऋतं परब्रह्मसाक्षात्कारं तदिच्छते, ब्रह्मसाक्षात्कर्तुकामेभ्योऽस्मभ्यो जिज्ञासुभ्य इत्यर्थः । वाताः मधु=माधुर्योपलक्षितब्रह्मसुखप्रदमास्वाद्यं साक्षात्कारसाधनं ब्रह्मभावनलक्षणं समर्पयन्तु इति शेषः । सर्वगतप्रत्यगभिन्नब्रह्मानन्दानुभवः प्रवहत्सु पवनेषु सततमस्माकं भूयात् येन सर्वे पवना मधुरा भूयासु इति प्रार्थयामहे इति भावः । तथा सिन्धवः मधु मधुरतमं ब्रह्मानुभवं यथा स्यात्तथा समर्प्य क्षरन्ति=स्वच्छन्दगत्या स्रवन्त्वित्यर्थः । अत्र लोटि लडादेशः । ओषधीः नः=अस्माकं माध्वीः=

मधुरानन्दरसानुभवसमर्पकाः सन्तु। तथा नक्तं अस्मभ्यं मधु—शाश्वतशान्तिप्रमोद-प्रदमस्तु, एवं उषसः=प्रातःप्रधाना दिवसा अपि मधुरा भवन्तु। अयमाशयः—सर्वासु रात्रिषु सर्वेषु च दिवसेषु सततं नः सर्वत्र समीकरसुखकरः तत्त्वानुभवो भवतु येन वयं सदा परमशान्ताः परमप्रसन्नाश्च भवेम, तत्त्वानुभवमन्तरेण शान्ति-प्रसादानुपपत्तेरिति। तथा पार्थिवं रजः, मधुमदस्तु, पिता द्यौर्मधुमान् भवतु, वनस्पतिः सूर्यश्च मधुमान् भवतु, गावः=इन्द्रियाणि माध्वीः=सततमज्ञानुभव-जनितसंतृप्तिप्रमोदलक्षणानन्दसंयुक्तानि भवन्तु। यद्वा गावः=प्रसिद्धा धेनवः सूर्यरश्मयो वा मधुमत्यो भवन्तु इत्यर्थः।

अथवा सर्वेषां वातादीनां पदार्थानां तत्त्वज्ञानसम्पादनानुकूल्यमभ्यर्थयन्ते इत्याह—ऋतं—सत्यं—तत्त्वज्ञानं सदिच्छते, मह्यं—अस्मभ्यं वा वाताः मधु=मधु-मन्तः सानुकूलाः सुगन्धयुक्ताः स्वास्थ्यवर्धका यथा स्युः तथा वान्तिवति शेषः। प्रबले दुर्गन्धयुक्ते तु वायौ रोगोत्पत्त्या तत्त्वज्ञानविघ्नः सम्पद्यते, अतः स मा भूदिति वायोरानुकूल्यं प्रार्थ्यते। एवमुत्तरत्रापि तत्तदानुकूल्यं द्रष्टव्यम्। सिन्धवो नद्यो मधु क्षरन्ति—मधुरमारोग्यकरं स्वादूदकं यथेष्टं स्रवन्तु—सम्पाद-यन्त्वित्यर्थः। ओषधयो व्रीहियवादयोऽपि माध्वीः=मधुराः पथ्यरूपाः पुष्टि-तुष्टिकारकाश्च सन्तु। नक्तं—रात्रौ, उत=अपिचोषसि=प्रभाते दिवसेऽपि विद्या-र्थिनामस्माकं मधु—सर्वं मधुरमनुकूलमुपद्रववर्जितमस्तु कालकृतोऽपि विघ्नो मा भूदित्यर्थः। पार्थिवं रजः=पृथिव्यामवस्थितं शयनादिस्थानगतं रजोऽपि मधु-मत्—माधुर्योपेतं कण्टकपाषाणादिराहित्येनानुकूलमस्तु पिता=पितृसदृशो द्यौरपि मध्वस्तु=अतिवृष्ट्यादिप्रातिकूल्यरहिताऽस्तु। '**द्यौः पिता पृथिवी माता**' इति श्रुत्यन्तराद्दिवः पितृत्वम्। वनस्पतिः नः=अस्मान् प्रति मधुमान्=मधुर-फलोपेतः प्रभूतसरसपत्रपुष्पादिसंयुक्तो जीवनहेतुरस्तु। सूर्योऽपि प्रभूतं सन्ता-

पमकृत्वा मधुमान्=माधुर्येणानुकूल्यप्रकाशनेन संयुक्तोऽस्तु । गावोऽपि नोऽस्मान् प्रति माध्वीः=जीवनहेतुमधुरक्षीरोपेता भवन्तु इति ।

अथवा सर्वभूतहितेरता अकारणकृपासिन्धवः साधवः समुदारचरिताः सर्वेषां लोकानां सुखशान्तये तत्प्राप्तिनिधीभूय सर्वेषां पदार्थानां सर्वस्य देशस्य कालस्य चानुकूल्यं प्रार्थयन्ते, येन सर्वे लोकाः मधुरा निरामयाः सन्तुष्टाः प्रशान्ताः सुखिनो भवेयुः । इति, तत्परत्वेनापीदं सूक्तं योज्यम् । इति सर्वं सुस्थम् ।

## ( २३ )

### ( यज्ञानुष्ठानाय निर्विघ्नतत्साफल्याय ज्ञानविशुद्धये च महादेवाभ्यर्थनम् )

यज्ञ एव प्रधानः सफलसिद्धिसम्पादकः परमपावनो धर्मः । अत एवाभ्युदयनिःश्रेयसहेतुत्वेन तमेव बहुधा निरूपयन्ति बुधोत्तमाः महर्षयः । तस्य सकामानुष्ठानं विविधमभीप्सितमैश्वर्यं प्रयच्छति । निष्कामानुष्ठानं च तत्त्वज्ञानप्रतिबन्धकाखिलमलविक्षेपादिपरिहारेण ज्ञानयोग्यतालक्षणां शुद्धिं समर्पयन्निःश्रेयसं सम्पादयति । अत एव सर्वे मनुजाः स्वस्वाधिकारानुरूपं तं तं यज्ञमनुतिष्ठेयुः । तदनुष्ठानं निर्विघ्नं सफलञ्च कर्तुं भगवतो विश्वेशस्य देवाधिदेवस्य पुनः पुनः प्रार्थनां विदध्युरित्यादेशमभिव्यञ्जयन् तत्प्रार्थनमाह—

ॐ देव ! सवितः ! प्रसुव यज्ञं
प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं नः
पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥
( शु. य. ९ । १ + ११ । ७ )

हे सवितः !=सर्वस्य प्रेरक ! सकलेष्टसिद्धिसमर्पकान्तर्यामिन् हे देव !=सदा स्वत प्रकाशेन सर्वत्र–देदीप्यमान ! तदुक्तं '**सूयते प्रेर्यते विश्वं सर्व-स्रष्टा जगत्पतिः। यमनात्पावनाच्चैव सविता तेन चोच्यते ॥ दीव्यति क्रीडति स्वस्मिन् द्योतते रोचते दिवि। यस्माद्देवस्ततः प्रोक्तः स्तूयते देवमानवैः ॥**' इति। यज्ञं=अभ्युदयनिःश्रेयससाधनं श्रुतिस्मृत्या-दिशास्त्रेषु निरूपित यज्ञाख्यं परमपावनधर्मं प्रसुव=प्रकर्षेण प्रेरय–अभ्यनु-जानीहि–तदनुष्ठानाय मां प्रवर्तयेत्यर्थः। यज्ञपतिं=यज्ञपालकं यजमानं तदनु-ष्ठातारं मा, भगाय=भजनीयाय=सौभाग्याय–परमैश्वर्याय प्रसुव=प्रेरय–तद-भीष्टं फल सम्पादयेत्यर्थः। किञ्च दिव्यः=दिवि परमानन्दलक्षणे स्वर्गे भवः=सदाऽवस्थितः, स्वं प्रीतिपूर्वकं भजतामानन्दकरः परमात्मा इत्यर्थः। पुनः स कीदृश' ? गन्धर्वः=गां–वेदलक्षणा वाचं धारयतीति वेदज्ञानोपदेष्टा सद्गुरु-मूर्तिर्दक्षिणामूर्तिस्वरूपो भगवानित्यर्थः। पृषोदरादिना गोशब्दस्य गन्भावः। यदाहुः शिष्टाः–'**परिपक्वमला ये तानुत्सादनशक्तिपातेन। योजयति परे तत्त्वे स दीक्षयाऽऽचार्य्यमूर्तिस्थः ॥**' इति। त वादृशमत्यादरेण स्तुवन्ति च–'**मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं, वर्षिष्ठान्ते-वसदृषिगणैरावृतं ब्रह्मनिष्ठैः। आचार्येन्द्रं करकलितचिन्मुद्रमानन्द-रूपं स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥**' इति। पुनः स कथं भूतः ? केतपूः=केतेन–पवित्रेण ज्ञानेनाज्ञं जनं पुनातीति केतपूः पावकः परमेश्वर इति यावत्। केतं वेदाद्यात्मना तदुपदिष्टं ज्ञानं पुनातु=मलविक्षेप-विपरीतभावनादिविविधप्रतिबन्धनिरासेन शोधयत्वित्यर्थः। केतमिति प्रज्ञा-नामसु निरुक्ते (३।९) पठितम्। वाचस्पतिः–वाचः=सत्यविद्यान्विताया

वेदवाण्याः पतिः पालकः, तदुपदेशेन रक्षको विश्वेश्वरः, नः=अस्माकं वाचं=स्तुतिप्रार्थनलक्षणां स्वदतु=आस्वादयतु 'स्वद आस्वादने' स्मरणात्, व्यत्ययेन परस्मैपदम्, अस्मदुक्तां तद्वाक्तस्मै रोचतामिति यावत्। सदा परितृप्त आप्तकाम आनन्दनिधिर्भगवान् अस्मदीयस्तुतिप्रार्थनावाचमास्वाद्यास्मभ्यमनुग्रहं विधाय सद्य आत्मकल्याणं वितरत्विति प्रार्थयामहे इति भावः।

अथाधिदैवतम्—हे देव! सवितः! मण्डलाधिष्ठातः! यज्ञं प्रसुव, यज्ञपतिं भगाय प्रसुव। एवं मण्डलाधिष्ठातारं पुरुषमुक्त्वेदानीं मण्डलं प्रत्याह—त्वत्प्रसादात् दिवि—द्युलोके भवो दिव्यो गन्धर्वः=गवां—रश्मीनां धारयिता, केतपूः—अन्नस्य पावयिता, केतशब्देनान्नमुच्यते, केतमन्नं पुनातीति तद्व्युत्पत्तेः। सूर्यमण्डलरूपो देवो नोऽस्माकं केतमन्नं पुनातु—शोधयतु। सूर्यमण्डलप्रभावादेव वृष्टिप्रमोकादिना जगति प्रभूतं विशुद्धमन्नं समुत्पद्यते इति प्रसिद्धम्। किञ्च त्वत्प्रसादाद्वाचस्पतिः=प्रजापतिः नः=अस्माकं वाचं—स्तुतिप्रार्थनरूपां स्वदतु। इति।

## ( २४ )

### ( गङ्गादिदिव्यजलेभ्यो लोकोत्तरपरमानन्दरसाप्तिप्रयोजनाय रमणीयतमस्य ब्रह्मसाक्षात्कारस्य प्रार्थनम् )

'संगमे नदीनां धिया विप्रो अजायत' (साम० २।३।५।८) इति श्रुत्या विविक्तनदीतटनिवासस्य मुमुक्षुभ्यः परमानन्दप्रयोजकब्रह्मविद्याप्रमुखसहायकतयाऽभिहितत्वात्, गङ्गादिपवित्रनदीतटवासतत्पराः केचन विविदिषवो

महात्मानः तज्जलानि प्रशंसन्तः तेभ्यः प्रत्यगभिन्नब्रह्मसाक्षात्कारलक्षणस्य परम-प्रयोजनस्याभीप्सितां सिद्धिं प्रार्थयन्ते—

**ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।**
**महे रणाय चक्षसे ॥**

**ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः ।**
**उशतीरिव मातरः ॥**

**ॐ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।**
**आपो जनयथा च नः ॥**

( शु. य. ११ । ५०–५१–५२ + ३६ । १४ । १५ । १६ । ऋ. १० । ९ । १–२–३) (साम. १८३७ । अथर्व. १ । ५ । १–२–३ । तै. स. ४ । १ । ५ । १ + ५ । ६ । १ । ४ + ७ । ४ । १९ । ४ । तै. आ. १ । १ । ११ + ४ । ४२ । ४ । नि० ९ । २७ )

हे आपः ! हे यज्ञेयजलानि ! ' हि ष्ठा ' इत्यत्र हि स्थ इति पदच्छेदः । अत्रान्येषामपीति दीर्घः । हि शब्द एवार्थः प्रसिद्ध्यर्थो यस्मादर्थो वा । हि= यस्मात्कारणात्, या यूयं मयोभुव एव, मयः=सुखं लौकिकमलौकिकञ्च भावयन्ति प्रापयन्तीति तद्व्युत्पत्तेः । यद्यपि स्नानपानदर्शनादिना लौकिकसुखहेतुत्वं युष्माकमपां प्रसिद्धमस्ति, तथाप्यभ्यासयोगयुक्तचेतसां योगिनामैकाग्र्यपवित्र-ब्रह्मविचारनिरोधसमाधिसम्पादने सहायकत्वेन दिव्यब्रह्मसुखस्यापि भावयित्र्यः-सम्पादयित्र्यो यूयमापः स्थ=भवथ । तस्मात् कारणात् ताः=तादृश्यो यूयं, नः=अस्मान्=अखण्डब्रह्मसुखानुभवकामान्, ऊर्जे=रसाय—निरङ्कुशतृप्ति-प्रमोदलक्षणब्रह्मानन्दैकरसानुभवार्थमित्यर्थः, दधातन=स्थापयत । ' ऊर्ग् वै रसः ' (श० ब्रा० ५।१।२।८) ' रसो वै सः ' ( तै. उ. ८।७ ) इत्या-

दि श्रुते । उर्कशब्दस्य रसशब्दस्य चानन्दपर्यायत्वम् । यथा निरेषणा निरीहा विद्वांसो ब्रह्मनिष्ठा ब्राह्मणा बाह्यानन्दसाधनरहिता अपि रसवद्ब्रह्मानुभूय सानन्दा दृश्यन्ते, तथा वयमपि यथा ब्रह्मरसस्यानुभवितारो भवेम तथाऽस्मानपि मुमुक्षून् तयोग्यान् कुरुतेति प्रार्थनाशयः । कवयोऽपि मुक्तिप्रदं गंगादिजलं स्तुवन्त तत्प्रार्थयमाना आहुः—' समृद्धं सौभाग्यं सकलवसुधायाः किमपि यत्, महैश्वर्यं लीलाजनितजगतः खण्डपरशोः । श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां, सुधासौन्दर्यन्ते सलिलमशिवं नः शमयतु ॥ ' इत्यादिना स्तवसन्दर्भेणेति । ' तप्तनप्तनथनाश्चे 'ति लोण्मध्यमबहुवचनस्य तनबादेशे दधातनेतिरूपम् । एवं ब्रह्मानन्दरसमभ्यर्थ्य तत्प्रयोजकं ब्रह्मसाक्षात्कारमभ्यर्थयते—महे=महते सर्वस्पृहणीयमोक्षरूपफलत्वात्, ' मह पूजायां ' स्मरणात् । मह्यते पूज्यते सर्वैरिति मट् क्विप् प्रत्ययः तस्मै महे इति तदुच्यते । रणाय=रमणीयाय—सुन्दरतमाय ' अण रण वण शब्दार्थाः ' रण्यते स्तूयते सर्वैरिति रण तस्मै रणायेति तदुच्यते । यद्वा रणाय=रणनीयाय शब्दनीयाय=उपनिषद्वेदैकसमधिगम्यायेत्यर्थः । चक्षसे=परमात्मदर्शनाय सर्वदर्शनप्रयोजकाय—स्वात्मनो निरतिशयानन्दपूर्णाद्वैतब्रह्मरसाक्षात्कारायेत्यर्थः । अस्मान् ब्रह्मविविदिषून् दधातनेत्यनुवर्तते । चष्टे—पश्यति सर्वं येनेति चक्ष, चक्षतेस्सुन् प्रत्ययः तस्मै चक्षसे इति तदुच्यते । ' येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ' ( छां. ६।१।३ ) इति श्रुत्या यस्य दर्शने सति सर्वस्यास्य दर्शनं कृतं भवति, तदन यस्मात्सर्वस्येत्यवगम्यते । तथा च महच्च यद्रमणीयं ब्रह्मसाक्षात्कारलक्षणं सर्वदर्शनप्रयोजकं दर्शनं निरङ्कुशतृप्तिरूकोत्तरप्रमोदनिदानं मोहशोकविध्वंसकं विमलाखण्डानन्दकरं तदस्माकं सम्पादयत, ब्रह्मसाक्षात्कारयोग्यानस्मान् कुरुतेति भावः ।

मधुरसावाप्तये तीव्रतमोत्कण्ठां प्रदर्शयितुं पुनरपि तज्जलाभ्यर्थनां ते वितन्व-न्ति—हे आपः ! इत्यनुवर्तते । वः=युष्माकमपां निष्ठत्वं षष्ठ्यर्थः । यः=शास्त्रवि-द्वत्प्रसिद्धः शिवतम =कल्याणतमः—शान्ततमो—निरङ्कुशत्वभिनिरतिशयसुख-लक्षणः प्रकृष्टमाधुर्यमधुरसोऽस्ति, मधुनः सर्वगत्वात्तद्रसस्यापि सर्वगतत्वम वर्णक्रम्यं वेदितव्यम् । तस्य रसस्य इह=अस्मिन् लोके विद्यमानान् योगाभ्यासे योऽवस्थितान् नः=अस्मान् भाजयत=भागिनः कुरुतेत्यर्थः । तादृशं त रसं प्रापयतेति यावत् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । यद्वा भागव्यतिरेकजनिता षष्ठी । तत्र निदर्शनं प्रदर्शयन्ति काः कमिव ? इव=यथा लोके उशतीः=उशत्यः—अपत्यतुष्टिं कामयमानाः प्रीतिसंयुक्ता ,मातरः= पुत्रवत्सला जनन्यः स्नकीयं मधुरं स्तन्यरसं बालं पाययन्ति तद्वत् । 'वश कान्तौ' इत्यस्माच्छतृप्रत्ययान्तादुगितश्चेति ङीप् । 'उशत्य वा छन्दसीति' दीर्घ । कान्तिरिहेच्छा, उशन्ति—इच्छन्ति स्वबालस्य तृप्तिं सौख्यञ्चेति ता उशत्य इति तद्व्युत्पत्तेः ।

इत्थं पुनः पुन परमप्रयोजनलक्षणमास्वाद्यतमं लोकोत्तरं शिव सत्यं सुन्दरं रसं प्रार्थ्य तत्प्राप्तिप्रतिबन्धकनिरासार्थोद्देश्यसिद्धौ उपयुक्तसामर्थ्याय चाब्देवता-शरणं सादर गृहीत्वा ताः प्रार्थयन्ते—हे आप. ! हे अब्देवता ! व =युष्मान् वयं, अरं=अलं—अत्यर्थं सादरं शरणं गमाम=प्राप्नुम । 'अच्छभि 'ति प्रापे लकारस्य रेफश्छान्दसः । गमामेति—गम्लृतेर्लुङि—उत्तमपुरुषबहुवचनेऽगमामेति रूपम्, अडभाव आर्षः । 'बहुलं छन्दसि' इतिशपो लुकि लोटि वा रूपम् । कस्मै प्रयोजनाय शरणीकरणम् ? यस्मादस्मदीयस्य यस्य रसप्राप्तिप्रतिबन्धकी-भूतस्य पापजालस्य, मलविक्षेपावरणात्मकत्रिदोषस्य वा क्षयाय निरासाय

मूयं जिन्वथ=प्रीतिप्रसादं कुरुतेत्यर्थः, जीन्वतिः प्रीतिकर्मा, तस्मै=तत्क्षयार्थमेव । युष्माभिरपि भक्तप्रियत्वादस्मत्पापादिदोषक्षयार्थमेव यत्नः क्रियतेऽस्माभिरप्येतदर्थमेव युष्मच्छरणं गृह्यते, अन्यथा कथमस्मत्पापादिक्षयार्थं युष्माभिरुद्यम्यतामित्यभिप्रायः । किञ्च भो ! अब्देवताः ! नः=अस्मान् साधकान् जनयथा—जनयथ—अस्मदभीप्सितनिर्विघ्नससाधनसफलसरसतत्त्वज्ञानजननसमर्थान् कुरुथ इत्यर्थः । अत्र 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । यद्वा—'आपो ब्रह्म जना विदुः' (अथर्व. १० । ४ । २२ ) इति श्रुत्या, 'आप्नोति—व्याप्नोति सर्वमिति व्युत्पत्त्या चाप् शब्दो नियतस्त्रीलिङ्गो बहुवचनान्तः परब्रह्मबोधकोऽपि भवितुमर्हति । 'य अप्सु तिष्ठन्' (बृ. ३ । ७ । ४ ) इति श्रुत्या तत्रान्तर्यामित्वेन स्थितः परमात्मापि तन्नाम्ना 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेनाभिधातुमर्ह एव । अत एवाप्शब्देन तत्रानुगतपरमात्मसम्बोधनानुसन्धानेऽपि कर्तुं युक्त एव । नात्र कश्चिद् विरोध इति ।

अथाधिभौतिकम्—हे आपः ! यूयं हि=यस्मात्कारणात् मयोभुवः=सुखस्य भावयित्र्यः स्थ=भवथ; 'आपोमयः प्राणः' ( छां. ६ । ५ । ४ ) इति श्रुतेः, अपामुपभोगेन प्राणस्थैर्यहेतुत्वात्सुखसाधनीभूतविविधान्नाद्युपभोग्यपदार्थजनकत्वेन च सुखहेतुत्वम् । यद्वा हे आपः ! यूयं मयोभुवः=सुखभूमयः स्थ, हि=भवथ खलु । दर्शनस्पर्शनस्नानपानाद्यनेकक्रियाभिः सकलभूतजातस्य परमानन्दकरा इति भावः । मय इति सुखवाचि 'यद्वै शिवं तन्मयः' इति श्रुतेः । तस्मात् ताः तथाविधा यूयं नः=अस्मान् अन्नादिजनितसुखकामान्, ऊर्जे=बलकराय—अन्नाय—तदुपभोगजनितसुखायेत्यर्थः । 'ऊर्ज बलप्राणनयोः' अस्मात् क्विप्, तादर्थ्ये चतुर्थी, दधातन=धत्त—

सुखकरान्नप्रदानेनास्मान् पोषयतेत्यर्थः । 'डुधाञ् धारणपोषणयोः' इति । यद्वा ऊर्जे=अन्नाय दधातन=अस्मदीयं कृष्यादिकं सम्यग्धारानिपातैर्वर्धयित्वा तदन्नं सरसमरभभ्यं सम्पाद्य तत्र प्रीतियुक्तानस्मान् स्थापयतेति तात्पर्यं बोध्यम् । अपि च महे=महते महनीयाय—पूजनीयाय, रणाय=रमणाय—विविधोपभोग्य-पदार्थेषु क्रीडनायेत्यर्थः । रमतेर्भावे ल्युट् मकारलोपश्छान्दसः । तथा चक्षसे=दर्शनाय चिरकालजीवनाभिमतफलसाक्षात्कारायेत्यर्थः । चष्टिः पश्यतिकर्मा, भावे असुन् । दधातनेति पूर्वेण सम्बन्धः । यद्वा याचितमन्नं किमर्थमित्याशंक्य सकलसत्कर्मोपासनोपयोगीन्द्रियस्वास्थ्यसिद्ध्यर्थमित्याह—महे रणाय चक्षसे=इन्द्रियायेति । बाह्याभ्यन्तरेन्द्रियाणां महत्त्वरमणीयत्वसिद्ध्यर्थमन्नं याचितम् । अन्नेन हीन्द्रियाणि महान्ति भवन्ति सत्कर्मोपासनानुष्ठानक्षमाणि—रमणीयशक्तीनि च भवन्तीति यावत् । किञ्चेदानीं सरसमेवान्नमिन्द्रियपुष्टिकरमिति मत्वा तं रसं याचते—यो वः—इति । हे आपः ! वः=युष्माकं शिवतमः=शोभनतमः प्रसिद्धो यो रसः=सारभूतोऽशोऽस्ति, सर्वप्राणिभिरविशेषादेनोपभोग्यत्वात्—अपां रसस्य शिवतमत्वम् । तस्य कर्मणि षष्ठी तं रसमित्यर्थः । इह=अस्मिन् लोके, हे आपः ! यूयं नः=अस्मान् पुत्रस्थानीयान् भाजयत=सेवयत—युष्मदीयरसप्रदानेनास्मान् पोषयतेत्यर्थः । 'भज सेवायां' 'हेतुमति च' इति णिच् प्रार्थनायां लोट् । तत्र दृष्टान्तः—उशतीरिव=उशत्यः=कामयमाना मातरो यथा स्वकीयं पुत्रं स्तन्यरसप्रदानेन पोषयन्ति तथेत्यर्थः । तस्मै तादर्थ्ये चतुर्थी, उपभोग्यत्वेन प्रसिद्धस्य सरसस्यान्नस्य प्राप्त्यर्थं हे आपः ! वः=युष्मान्, अरं=अलं पर्याप्तं गमाम=गच्छाम—प्राप्नुयाम । 'गम्लृ गतौ' अस्मात्—प्रार्थनायां लोट् । लोडर्थे लङ् वा । यस्य=अन्नस्य क्षयाय=निवासाय—अभिवृद्धये इत्यर्थः । 'क्षि निवास-

गत्योः ' हे आपः ! यूयं जिन्वथ=तर्पयथ– व्रीह्यादिसस्यविशेषान् इति शेषः। यूयं वृष्टिरूपेणागत्य सर्वेषां प्राणिनामन्नाद्युपभोग्यसमृद्धये ओषधीः प्रवर्धयये- त्यर्थः । तस्मै इति पूर्वेण सम्बन्धः । ' जिवि प्रीणनार्थे ' स्मरणात् । अपि च हे आपः ! यूयं नः=अस्मान्–जनयथ=पुत्रपौत्रादिशुभसंततिरूपेण–उत्पादयथ; स्वात्मन एव पुत्रादिरूपेणोत्पत्तेः एवमुक्तम् । तथा चैतरेयके समाम्नातं भवति– ' पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः । इति । ' जनी प्रादुर्भावे ' अस्मात् ' हेतुमति च ' इति णिच् । इति

## ( २५ )

( कैलासशैलविहारी भगवान् महादेवः स्वकीयेन रमणीयतमेन विग्रहेणास्मान् प्रणयिनः कृपादृष्ट्याऽभिपश्यतु )

हे भगवन् ! पार्वतीपते ! कर्पूरस्फटिकामृतदीधितिसमप्रभं सन्तप्तहाटक- श्रीजटं शशाङ्कदलशेखरं प्रफुल्लप्रसादसम्मुखनेत्रत्रयं तरक्षुवल्कलिमद्भूतिम- द्भुजगभूषणं शितिकण्ठं भुवनमोहनं विश्वमहितमघोरं प्रियतमं प्रशान्तं ते वपुः कदा नु मामकमिदं वीक्षणमवेक्षिष्यते। परञ्च चर्मचक्षुषा कथं नु तद्द्रष्टुं शक्ष्यामि, अतस्त्वमेव कृपया तद्दर्शनक्षमां दिव्यां दृशं दिश । यतो भवान् प्रार्थितां भक्तानां कृते सुरतरुरस्ति । तामपि मम मन्दभाग्यात् दुर्लभां मन्यसे चेत्तर्हि सकृदपि त्वं भवदीयया नैसर्गिकनिरवधिदयासुधार्द्रदृष्ट्यैव तव पु- रोऽवस्थितं प्रणयिनं मां विलोकय, तावतैवाहमाप्तकामः स्यामित्याशयं सूचयन्नाह—

ॐ या ते रुद्र ! शिवा
तनूरघोराऽपापकाशिनी ।
तया नस्तन्वा शन्तमया
गिरिशन्ताभिचाकशीहि ॥

( यु. य. १६ । २ ) ( तै. सं. ४ । ५ । १ । श्वे. उ. ३ । ५ )

हे रुद्र ! दुष्टानां भयङ्कर ! श्रेष्ठानां सुखकर ! तद्दुःखत्रयाणां प्रलयङ्कर ! पापिनोजनान् दुःखभोगेनरोदयतीति, भक्तानां रुत्=त्रिविधं दुःखं द्रावयति=विध्वंसयतीति, 'रु गतौ' गतेर्ज्ञानार्थत्वेऽपि स्मरणात् श्रेष्ठेभ्यो रवणं–रुत्–ज्ञानं तत्प्रभवं शाश्वतं सुखञ्च राति ददातीति रुद्रपदविविधव्युत्पत्तेः । हे गिरिशन्त ! =गिरौ कैलासाख्ये रमणीयतमदिव्यविग्रहेणावस्थितः सन् त्वं भजतां प्रपन्नानां भक्तानां शं=सुखं तनोति–विस्तारयतीत्यर्थः । यद्वा गिरौ=वेदवाचि प्रतिपाद्यत्वादिसम्बन्धेनावस्थितः सन् सत्योपदेशेन समेषां मनुजानां शं सुखं तनोतीति तत्सम्बोधनं गिरिशन्त इत्यर्थः । यद्वा गिरौ=मेघे जलरूपेणावस्थितः सन् वृष्टिद्वारेण शं तनोतीत्यर्थः । गिरिरित्यस्य निघण्टौ ( १ । १० ) मेघनामस्वपि पठितत्वात् । यद्वा गिरौ कैलासशैले शेते–विहरतीति गिरिशः अमति–गच्छति–सर्वं जानातीत्यन्तः=सर्वज्ञः इत्यर्थः। 'अम गतौ' कर्तरि क्तः, गिरिशश्चासावन्तश्चेति *गिरिशन्तस्तत्सम्बुद्धौ* शकन्ध्वादित्वात्पररूपम् । या=प्रसिद्धा शास्त्रेषु वर्णिता भावुकभक्तैर्भाविता, ते=तव परमेश्वरस्य विश्वेश्वरस्य भगवतः, तनूः=शरीरं-साकारदिव्यविग्रह इत्यर्थः । कीदृशी सा तनूः ? शिवा=प्रशान्ता–शोभनतमा–मङ्गलरूपा कल्याणकारिणीत्यर्थः । पुनः सा कथं भूता ? अघोरा=अविद्यमानो

स्मतेश्च । अपापस्य=ज्ञानस्य—काशिनी प्रकाशयित्री ज्ञानप्रदेति यावत् । 'आत्मबुद्धिप्रकाशम्' (श्वे. ६ । १८) इति श्रुतेः । एवंविधा या तव तनूर्दक्षिणामूर्तिरस्ति, तया शन्तमया=निरतिशयसुखरूपया तन्वा, नः=अस्मान्, अभिचाकशीहि=अभितः=सर्वतः प्रकाशयुतान् कुरु=अद्वितीयब्रह्मात्मतत्त्वमेव सर्वतः प्रकाशय । 'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं' (मुं. १ । १ । ३) इति श्रुतेः । अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारयुक्तान् कुर्वित्यर्थः । अभिचाकशीहीति यङ्लुगन्तप्रयोगेण भृशार्थरूपक्रियासमभिहारः प्रदर्शितः । शन्तमया अभिचाकशीहीत्यनेन परमेश्वरस्य चिदानन्दविग्रहत्वं प्रदर्शितम् । ननु—मन्त्रनमस्कारनामजपस्तुतिप्रार्थनादिनाऽल्पसाधनेन कथं मोक्षमिच्छसि, तस्य वेदान्तश्रवणमनननिदिध्यासनादिबहुयत्नसाध्यत्वादित्याशंक्य सम्बोधयति—गिरिशन्त इति । गिरि=प्रतिज्ञारूपायां वाचि स्थित्वा लोकानां शं=मोक्षसुखं तनोतीति गिरिशन्त ! 'एतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवति ।' (जाबालोपनिषत्) इत्यादिभिः श्रौतवचनैः स्तुतिनमस्कारादिघटितमद्दिव्यनामधेयजपमात्रेणापि मर्त्योऽमृतो मुक्तो भवतीति भगवता वेदपुरुषेण भवतैव प्रतिज्ञातत्वात् । श्रवणाद्यायासं विनापि केवलं भवन्नमस्कारादिघटितनामजपमात्रेण मुक्तो मम मोक्षाभिलाषः इति द्वितीयसम्बोधनस्वारस्यम् । शिवशरीरं भगवत एतादृशं ध्येयं, तदुक्तञ्च—'स्मेराननं चन्द्रकलावतंसं, गङ्गाधरं शैलसुतासहायम् । त्रिलोचनं भस्मभुजङ्गभूषणं ध्यायेत्पशूनांपतिमीशितारम् ।' इति ।

अथवा मुमुक्षयेऽनेन निष्कलस्य सच्चित्सुखाद्वैतस्वरूपस्याविर्भावमर्थयन्ते—हे रुद्र ! हे सर्वात्मन् ! ते=तव सकलनिष्कलोभयतनोः, या श्रुत्यादिषु प्रसिद्धा शिवा=शुद्धा—अविद्यातत्कार्यविनिर्मुक्ता सच्चिदानन्दाद्वयघनरूपा, तनूः=तनुः—

निष्कलस्वरूपमित्यर्थः। सा कीदृशी? इत्याह—अघोरा=शशिबिम्बमिवाल्हादिनी—सर्वद्वैतसंसारसन्तापोपशमरूपा। पुनः कथंभूता? अपापकाशिनी=स्वाभिव्यक्त्याऽखिलाऽविद्यादिपापदग्ध्री—अपहतपाप्मादिस्वरूपा वा। तया तन्वा=निष्कलस्वरूपया प्रत्यक्चित्या शन्तमया=अद्वितीयनिरतिशयाखण्डानन्दस्वरूपया, नः=अस्मान्—साधनचतुष्टयसम्पन्नान्, हे गिरिशन्त! गिरौ—'एतस्यैवानन्दस्ये' त्यादिवेदवाक्ये निरूपितो योऽनन्तानन्दसमुद्रो ब्रह्मेन्द्रादिष्वपि स्वीयं बिन्दुस्थानीयमल्पं शं=सुखं तनोतीति तत्सम्बोधनम्। त्वं—अभि=आभिमुख्येन प्रत्यक्त्वेनाभेदेन चाकशीहि=प्रकाशस्व, मुमुक्षून् प्रति तव यन्निष्कलं सत्यज्ञानादिलक्षणं रूपमस्ति तेन रूपेण त्वं सदात्मना प्रकटीभवेति यावत्। यद्वा शिवा तनूः=सत्त्वोत्कर्षनिमित्ता विद्यावृत्तिः। अघोरा=घोरसंसारनिवर्तिका, अपापं ब्रह्माय-महमाऽपहतपाप्मेति श्रुतेस्तत्प्रकाशिनी, दुस्तरत्वाद्गिरिरिव संसारस्तस्मिञ्छेते जीवेश्वररूपेण तिष्ठतीति गिरिशन्तस्तत्संबोधनम्। शन्तमया तया तनुवा विद्याशक्त्याऽभिचाकशीहि—अविद्यापनोदेनाऽऽत्मानं प्रकाशयेत्यर्थः।

## ( २६ )

### ( सर्वेषां प्राणिनां स्वास्थ्यस्य प्रसन्नतायाश्च प्राप्तये भगवतः कैलासपतेः स्तुतिपुरःसरमभ्यर्थनम् )

सर्वे जना व्याधिदारिद्र्यकलहद्वेषादिरहिताः, स्वस्थाः स्वच्छविवेकविचारशीला शोभनमनस्काश्च भवन्तु। परस्परहितकर्तारः सुखिनश्च सन्तु। सद्बुद्धिमवाप्नुवन्तु, भद्राणि च वचांसि शृण्वन्तु, भद्राणि दृश्यानि च विलोकयन्तु, सदा सर्वत्राभिनन्दन्तु इति। तदर्थमेव सर्वजनहितचिन्तकाः कृपालव उदारचरिताः साधवः शोभनाभिः पुष्कलाभिः स्तुतिभिः कैलासपतिं विद्वान्त-

यमिमं परमेश्वरमनुकूलयितुं तमेव सादरं पुनःपुनः प्रार्थयन्ते इत्याह—

ॐ शिवेन वचसा त्वा,
गिरिशाच्छावदामसि ।
यथा नः सर्वमिज्जगदय-
क्ष्मꣳ सुमना असत् ॥

( शु. य. १६ । ४ । तै. सं. ४ । ५ । १ )

हे गिरिश ! गिरौ कैलासे शेते निवसतीति गिरिशः तत्सम्बोधनं, हे गिरिश ! कैलासपते ! यद्वा गिरिशब्देन गिरिरूपा वेदा उच्यन्ते । तत्र श्रुतिः— 'तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार' इति प्रस्तुत्य 'वेदा वा एते' इति । तथा च गिरिरूपेषु वेदेषु शेते=तिष्ठतीति गिरिशः सकलवेद-प्रतिपाद्य ! इत्यर्थः । अत्र गिरिशेत्यनेन निखिलवेदवर्णनीयस्य स्तुतिवचनं युक्तमेवेति दर्शितम् । शिवेन=शोभनेन वचसा=स्वस्तुतिरूपेण वचनेन, त्वा=त्वां—अच्छ=प्राप्तुं—अनुकूलयितुं—प्रसादयितुमिति यावत् । यद्वा अच्छ= सम्यक् वदामसि=वदामः—देवप्राप्त्यनिष्टपरिहारौ प्रार्थयामहे । अच्छाप्तेराप्तुमिति शाकपूणिः 'इदन्तो मसि' 'संहितायां निपातस्य च' इति दीर्घः । यद्वा हे अच्छ ! परमनिर्मल ! इति सम्बोधनम् । तत्र पापिष्ठस्य जनस्य सावद्योक्ति-सम्बन्धात्परमेश्वरस्य मालिन्यमाशंक्य 'अच्छ' इति पुनः सम्बोधयति । नित्यनिरवद्यस्य मलिनमदुक्तिसम्बन्धेऽपि न काचित्क्षतिः । न हि गङ्गाजलस्य रथ्योदकसंयोगेन पावनता गच्छति । प्रत्युत गङ्गानुषङ्गाद्रथ्योदकमेव स्वयं पावनीभूय यमुनोदकनिर्विशेषत्वं प्रतिपद्यते, एवं परमपावने भगवति निवेशितं

मद्वचनं वेदवचनवल्लोकमान्यं भवतीति सम्बोधनाभिप्रायः । अत एव गङ्गा-प्रवाहपतितस्य रथ्योदकस्य गङ्गात्वमिव शिवे पतितस्य मद्वचनस्यातिशोभनतया शिवत्वमेव सम्पन्नमित्यभिप्रेत्य शिवेन वचसेत्युक्तम् । अथवा—अत्र किलागमाः—'बन्दिन इव सम्राजं' परमेश्वरं सर्वात्मानं जीवानां तद्बोधेन भवरोगनिवृत्तये परमानन्दसम्पत्तये च स्तुवन्ति इत्याह—यथा सर्वमेवेदं जगत्=जीवाख्यं स्वप्रतिबिम्बभूतं, नः=अस्माकं–सम्बन्धि, अस्माभिरुपदिश्यमानं अयक्ष्मं= संसाररोगरहितं, सौमनस्योपेतं स्यात् स्वस्वरूपावबोधेनापहतपाप्मतया न पुनः संसारपर्यावर्ते भ्रममाप्नुयात् । तथा त्वामेव वयं शिवेन वचसा अच्छावदामसि—अच्छ—सम्यक् प्रतिपादयामः इत्यागमा ब्रुवन्ति । इति । स्तुति-प्रार्थनया किं वदामः ? इत्यत आह—नः=अस्माकं, सर्वमित्=सर्वमेव, इच्छब्दः—एवार्थे । जगत्=जंगमादि—मनुजपश्वादि, यथा येन प्रकारेण, अयक्ष्मं=यक्ष्मा-व्याधिः—तद्रहितं नीरोगं=स्वस्थं—उपलक्षणमिदं दारिद्र्यादिशून्यं, सुमनाः=शोभन-मनस्कं द्वेषकलहादिवर्जितं प्रसन्नं सुखितं च असत्=भवति, तथा कृपां कुर्विति शेषः । असदित्यत्र 'लेटोऽडाटौ' इत्यट् इलोपः । अस्य मन्त्रस्य जपानुष्ठानात्—अकालमरणपरिहारादिकं सिद्ध्यति ।

## ( २७ )

**( अस्मद्विविधपापापराधजन्यस्य कोपस्य विनिवृत्तये भगवत आदित्यस्य रुद्रस्य स्तुतिप्रार्थनमस्माभिः कर्तव्यम् )**

भो ! भगवन् ! विवस्वन् ! सर्वविश्वसाक्षिन् ! उदयास्तकाले सान्द्र-सिन्दूररेणुभिरदयगिरिगैरिकधाराद्भिश्च संसिक्तामिवारुणवर्णां मूर्तिं बिभ्राणो भवान् अस्मद्विविधपापापराधदर्शनजनितकोपवानिव; मध्याह्ने च पर्यापिस-

परागततिभिः संश्लिष्टामिव पिङ्गलवर्णां मूर्तिमाविष्कुर्वन् दुष्टानस्मानपराधमानाऽस्योपेक्ष्यौदासीन्यं भजमान इव, अथ च विभ्राजमानासंख्यातप्रसृततीक्ष्णदीधितिभिः संतप्तचक्षुः तद्दण्डं विधातुं प्रवर्तमान इव दृश्यते किम्? परञ्च त्रिभुवनशुभमङ्गलकरणशीले कृपाकूपारे त्वय्येतदसम्भाव्यमानमयुक्तमिव प्रतिभाति। यद्यपि पापापराधिनो वयं स्म इति न तानपलपाम, तथापि हे नाथ! हे आर्तबन्धो! हे प्रणतजनपारिजात! अनन्तकर्मबन्धाश्रितानां मिथ्याज्ञानप्रबलतमसा चान्धीकृतानामाधिव्याध्युपाधि जननमरणक्षुत्पिपासाकामकोपादिभिर्भृशमर्दितानां विषयभोगलम्पटानां कातराणां कान्दिशीकानां ×दीनानामस्माकं सहस्रशः पापापराधाः, त्वयैव करुणया क्षन्तव्या एव। अपि च त्वत्प्रपन्नानां कृपणानां नः करुणाक्रन्दनमिदं भवानस्मदनुजिघृक्षया कृपयाऽऽकर्णयतु, कोपं सद्यः तिरयतु, माऽस्मानुपेक्षताम्। हे भक्ताभयद! भगवन्! ते शुभमङ्गलालोको झटित्यस्मत्त्राणायाऽस्मत्कुमतिकदाचारप्लुष्टये भूयसे श्रेयसे च प्रभवतु। अयि मङ्गलमूर्ते! विश्वबन्धो! त्वमेव सकलजगतां प्रत्यक्षदेवोऽसि, अतस्त्वत्स्तुतिप्रार्थनायाः समुचितं समक्षमेवास्मत्पापापराधोपशमनादिलक्षणं फलं त्वत्तो याचामहे। हे त्रैलोक्यपावन! हे अशरणशरण! हे प्रभो! त्वां विहाय कोऽन्योऽस्त्यत्र नस्त्राता, अतोऽस्मभ्यमभ्यर्थितं सर्वं भवान् दिशतु, नः सुखयतु। हे विभाकर! कृपाकर! देव! त्वत्प्रसादादेव सर्वे मनुजाः सर्वपापापराधैः विमुक्ता भवन्ति। त्वदाराधनयैव विद्यामैश्वर्यमारोग्यमतुलबलमायुःप्रकर्षं कान्तिं शुभसंततिं सन्मतिं शान्तिं तृप्तिं भुक्तिं मुक्तिञ्च लभन्ते, इति निगूढं भावार्थं गमयन् विश्वद्रष्टारं भगवन्तमादित्यं विविधपापापराधजनितकोपोपशमनायाभिष्टवीति—

×क्व दिक् क्व दिक् अस्माकं गन्तव्येति क्रन्दमानाः भयभ्रान्त्या भयद्रुता जनाः कान्दिशीका इत्युच्यन्ते।

**ॐ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।**
**ये चैनँ रुद्रा अभितो दिक्षु श्रिताः**
**सहस्रशोऽवैषाँ हेड ईमहे ॥**

( शु० य० १६ । ६ (तै० स० ४ । ५ । १ )

यः= प्रसिद्धः, असौ=विप्रकृष्टदेशस्थोऽपि सर्वलोकप्रत्यक्षः, निखिलकर्मसाक्षी रुद्ररूप आदित्यः, तमभिनयेन दर्शयन्नाह । कीदृशोऽसौ ताम्रः=उदयेऽत्यन्तं रक्तः, अरुणः=अस्तकालेऽपि रक्तः, उत=अपि च बभ्रुः=पिङ्गलवर्णोऽन्यदा । सुमङ्गलः=शोभनानि—मङ्गलानि—प्रणतजनाभ्यर्थितप्रयोजनानि प्रवर्तमानानि भवन्ति यस्मात् सः तत्त्वोक्तः । रव्युदये सर्वमङ्गलप्रवर्तनं प्रसिद्धं तस्य चान्धकारहिमादिवारणेन जगत्सौख्यहेतुत्वात् । असति आदित्यरूपेऽस्मिन् भगवति अन्धकारादिप्रस्तं जगदमङ्गलमेव स्यादिति भावः । ये च एनं=भगवन्तमादित्यं, रुद्राः=तीक्ष्णा रश्मयः, अभितः=इतश्चेतश्च प्राच्यादिषु सर्वासु दिक्षु च, सहस्रशः=असंख्याताः, श्रिताः=परमेश्वरनियोगेन जनानां पुण्यपापानुरूपतयाऽनुग्रहं निग्रहञ्च कर्तुं अवस्थिताः सन्ति । एषां=किरणरूपाणां रुद्राणां हेडः=क्रोधं—अस्मद्विविधपापापराधजं हेड इति क्रोधनामसु पठितं (नि. २ । ३ । १ ) अव ईमहे=अवनयाम इत्यर्थः, तत्स्तुतिप्रार्थनया भविष्यत्पापापराधाकरणस्य पश्चात्तापशपथपूर्विकया दृढया प्रतिज्ञया च तदाराधनभक्त्या च निवारयामः, तेऽस्माकं प्रसन्ना भवन्तु इति यावत् । तत्कोपशान्त्यभावे हि—अस्माकं महदनिष्टं स्यादिति तदुपशान्तये सकलेष्टसिद्धिमूलतत्प्रसादाय च महता प्रयत्नेन भवितव्यमिति भावः । यद्वा भगवान् कैलासपतिरुद्र एवानेन स्तूयते, असौ यस्ताम्रवर्णः अरुणवर्णः, अपि च बभ्रुवर्णः सुमङ्गलः, अनेकानि हि

घोराघोराणि प्रियाप्रियाणि रूपाणि रुद्रः करोति दुष्टनिग्रहाय साध्वनुग्रहाय च, यत्रैतत्समाम्नातं भवति—' अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यःसर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥'* (तै० आ० १०।१९) इति असंख्यातास्तदादेशकारिणो रुद्रगणाः समभितः श्रिता भवन्ति । अत्र पक्षेऽन्ययोजनं पूर्ववत् ज्ञेयमिति । अथवा ' एष देवोऽनया देव्या नित्यं क्रीडारसोत्सुकः । विचित्रान् सृष्टिसंहारान् विधत्ते युगपत्प्रभुः ॥' इत्याद्यागमोपदिष्टा माया नाम पारमेश्वरी त्रिगुणात्मिका शक्तिः । सैव भगवती, तयैव परमात्माऽपि भगवानित्याख्यायते । तया च स देवो विश्वेश्वरो निर्गुणोऽरूपोऽपि सगुणो विविधरूप इवावभासते इत्याह—असौ=परमात्मा रुद्रो वस्तुतः सुमङ्गलः=परममङ्गलरूपः शिवः शान्तः प्रपञ्चोपशमोऽपि ' पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम् ।' (विष्णुसहस्रनाम १० ) इति स्मृतेः । यः सत्वविशिष्टप्रकृत्या समेतस्तदुत्थरजसा ताम्रो भवति । ततः स्थूलसूक्ष्मभूतात्मिकया तयाऽरुणो बभ्रुरित्येवं विविधरूपो भवति । यद्वा माया हि स्वगतरजसा प्रथममावृणोति. ततस्तमसा विक्षेपयतीति प्रसिद्धम् । आवरणमन्तरा विक्षेपायोगात् । अत एव निर्मायस्तु परमात्मा—' एष याव स परो रजा इति होवाच ' इति श्रुत्या रजसः परस्ताद्वर्तमानो निरावरणो विशुद्धः सुमङ्गलः शिवः एव प्रत्येतव्यः । स एव राजस्या मायाशक्त्या सह वर्तमानस्ताम्रो भवा॰

---

* अघोराः= शुद्धसात्विकत्वेन शान्ताः सौम्या विग्रहा॰, अन्ये तु घोरा= राजसत्वेनोग्राः, अपरे तु तामसत्वेन घोरादपि घोरतरा॰, हे सर्वरूप ! ' तत्सृष्ट्वा तदेवानुप्राविशत् ' ( तै॰ २।६ ) इति श्रुत्या सर्वान्तर्यामित्वेन परमेश्वरस्य युक्तमेव सर्वरूपत्वम् । ते—त्वदीयेभ्यः पूर्वोक्तेभ्यः त्रिविधेभ्यः सर्वेभ्यः प्रलयकाले शृणन्ति—हिंसन्ति तेभ्य सर्वेभ्यो रुद्ररूपेभ्यः सर्वेषु कालेषु वर्तमानेभ्यो नमोऽस्तु । इत्यर्थः ॥

चतुर्मुखो विश्वस्रष्टा भवति। स एव तामस्या शक्त्या विक्षेपापरनाम्न्या सह वर्तमानोऽकृष्णो विष्णुर्विश्वस्थितिस्थापको भवति। ननु—विष्णोः कथं तामसत्वमिति चेत्; विश्वस्थिते विक्षेपवैशिष्ट्येन, तस्य च तमःकार्यतया तत्कर्तृत्वात्तत्त्वमितिब्रूमः। अत एव '**एषा सा वैष्णवी शक्तिर्महाकाली दुरत्यया।**' '**या काली सैव कृष्णः स्यात् यः कृष्णः सैव कालिका**' इत्यादि पुराणवचांस्यपि संगच्छन्ते। कालीसम्बन्धात्—विष्णोः कृष्णवर्णत्वमप्युपपद्यते। एतदुक्तं भवति—यावद्रजस्तम उद्रेकस्तावज्जन्ममरणात्मकदुःखमयसंसारप्रवाहो दुर्निवार्य एव। यदा सत्त्वगुणोद्रेको भवति, तदा तु सर्वप्रपञ्चोपसंहारः प्रसिद्धो ज्ञानिनाम्। तेन रज एव स्रष्टृ, तम एव विश्वस्य स्थितिकृत्, सत्त्वमेवोपसंहारकमित्यवधेयम्। एतेन प्रपञ्चोपसंहारकस्य भगवतो रुद्रस्य परमशिवस्य सात्त्विकत्वोपास्यत्वादिकमुपपादितम्। केनचित् द्रोहिणाऽभिहितं तामसत्वादिकञ्च निराकृतमित्यलम्। ये च रुद्राः=रुद्रशब्दवाच्या जीवाः, एनं=इदं परमेश्वरमाश्रित्याभितो दिक्षु श्रिताः सहस्रशोऽसंख्याताःसन्ति, एषां हेडः=तीक्ष्णत्वं—अविद्यावृतत्वं अव ईमहे=तत्त्वमस्याद्युपदेशैर्वयं निवारयाम इत्यागमा वदन्ति। इति।

## ( २८ )

### ( कल्याणावाप्तये नीलकण्ठं महादेवं पावनान् वद्धक्रोधं नमस्करोमि )

कल्याणकामेन मनुजेन सर्वविश्वत्राणपराय सर्वज्ञाय सत्यविद्योपदेशेनोपासकानां कल्याणकराय जगद्गुरवे सच्चिदानन्दमूर्तयेऽन्तरात्मने उपास्येष्टदेवाय पुनः पुनः श्रद्धाभक्तिभ्यां नमस्कारो विधातव्यः कल्याणमक्तेभ्यश्च, इत्यादिशन् स्वयं मन्त्रदृक् ऋषिर्लोकसंग्रहाय महादेवं वद्धक्रोधं प्रणमति——

**ॐ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।**
**अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥**

( शु० य० १६ । ८ । तै० सं० ४ । ५ । १ )

नीलग्रीवाय=नीलकण्ठाय रुद्राय देवाधिदेवाय पशुपतये, नमोऽस्तु=नमस्कारो भवतु । क्षीरसमुद्रमन्थनोद्भूतं कालकूटाख्यं गरलं विश्वत्राणाय पीतवतो भगवतः कण्ठो नीलो जात , अतएवान्वर्थनाम्ना नीलकण्ठो महादेवोऽभिधीयते वेदविद्भिः । अनेन–' **गुणदोषौ बुधो गृह्णन् इन्दुक्ष्वेलाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥**' इति । प्रसिद्धो भगवन्महिम स्मर्यते । तेन कालकूटविषतुल्यं दोषजालमन्तरैव नियम्य कणमात्रमपि गुणं शिरसा श्लाघमानः परमकृपालुः परमेश्वर सुखोपास्योऽभिव्यज्यते आशुतुष्यश्च । कीदृशाय ? सहस्राक्षाय=सहस्राणि–असंख्यानि अक्षीणि–नित्यप्रकाशकज्ञान-नेत्राणि विद्यन्ते यस्य स , तस्मै–सहस्राक्षाय–अपरिच्छिन्नदृष्टये–सर्वज्ञायेत्यर्थः । अत्रासंख्यवाचक. सहस्रशब्द । अनेन कैलासवासिनोऽपि तवात्र विहितो मदीय–नमस्कारो दृष्टिविषय. स्यादेवेत्युक्तं भवति । पुन कथं भूताय ! मीढुषे=मिमेहेति मीढ्वान् तस्मै ' मिह सेचने ' इत्यस्मात् क्वसन्तो निपात –सेक्त्रे–वृष्टिकर्त्रे–पर्जन्यरूपायेत्यर्थ । तरुणतमाय वा, प्रणतकामवर्षिणे वा सद्गुरुरूपया दक्षिणामूर्त्या सनकादिमहर्षिभ्यो ब्रह्मज्ञानामृतोपदेष्ट्रे वा, ' ज्ञानमिच्छेन्महेश्वरादि ' ति स्मृते । तदुक्तं–' **अद्राक्षमक्षीणदयानिधान–माचार्यमाद्यं वटमूलभागे । मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमोनुदन्तम् ॥**' इत्यनेन समस्तेष्टसिद्धिरूपनमस्कारफलप्रदत्वं दर्शितम् । अथ=अपि च अस्य–महादेवस्य–रुद्रस्य ये सत्वानः=सात्त्विकाः पावनभक्ताः

सन्ति, तेभ्यः । अहं नमः=नमस्कारं, अकरं=करोमि, 'कृञ् कृतौ शप्' छुडि उत्तमैकवचनम् । लकारस्य ययः । यद्वा अस्य नीलकण्ठमूर्तेः सत्वानः–सदनशीलाः प्रत्यासन्नाः प्रमथगणाः ये वर्तन्ते, तेभ्यो नमः–अकरं=नमस्करोमि । ते च प्रमथगणाः–'अधिपताइ क्षेत्रपताइ' (साम० सं०) 'दिव्या गणा बहुरूपाः पुराणाः' इत्यादिश्रुतिषु भगवतः पारिषदाः सर्वाधिपतित्वेनोक्ताः प्रसिद्धाः सन्ति, त एते महाभारते सौप्तिके पर्वणि स्मर्यन्ते–'कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः । नित्यानन्दाः प्रमुदिता वागीशा वीत-मत्सराः ॥......... ...'श्रुतेन ब्रह्मचर्येण तपसा च दमेन च । ते समासाद्य शूलाङ्कं भवसायुज्यमागताः ॥' इति । द्रोणपर्वणि च–'तस्य पारिषदा दिव्या नानारूपधराः प्रभोः ।' इत्यादिना प्रपञ्चिताः इति ।

## ( २९ )

### ( विविधरूपरुद्रयो भवरुद्रयो भूयो भूयो नमोऽस्तु )

'सर्वं खल्विदं ब्रह्म' ( छां. ३ । १४ । १ ) 'ब्रह्मैवेदं सर्वम्' (मुं. २ । २ । ११ ) 'पुरुष एवेद*ँ*सर्वम्' (ऋ. १० । १० । २ । शु. य. ३१ । २) 'एकं वा इदं विबभूव सर्वम्' (ऋ. ६ । ४ । २९) 'वासुदेवः सर्वमिति' ( गी. ७ । १९ ) 'सकलमिदमहञ्च वासुदेवः परमपुमान् परमेश्वरः स एकः । (इति विष्णुपुराणे) 'मनसैतानि भूतानि प्रणमेद्बहु मानयन् । ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ( भा. ३ । २९ । ३४ ) इति श्रुतिस्मृतिपुराणप्रसिद्धां परमशर्मनिदानामनेकसाधन-फलभूतां सर्वात्मदृष्टिं सर्वत्र कुर्वाणो ब्रह्मनिष्ठो मन्त्रद्रष्टा महर्षिः 'परमार्थतो

भगवद्-यद्वस्तु किञ्चिदपि न विद्यते, अतः सर्वमयो भगवान् एक एव सर्वतो नमस्यः, ' इति शास्त्रसिद्धान्तं, प्रदर्शयितुं माययाऽनिर्वचनीयया सञ्जातविविधरूपवद्भ्यो भगवद्भ्यो भूयसो नमस्कारान् वितनोति—

**ॐ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो—**
**नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो—**
**नमः शयानेभ्य आसीनेभ्यश्च वो नमो—**
**नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः ॥**

( शु. य. १६ । २३ । तै. सं. । ४ । ५ । ३ ).

विसृजद्भ्यः=विसृजन्ति—विमुञ्चन्ति बाणान्—अरिषु—इति, विसृजन्तः=धनुर्धरा योद्धारः, तेभ्य इत्यर्थः । यद्वा विसृजन्ति=समर्पयन्ति—भोगासक्तिं कर्तृत्वाभिमानञ्च विहाय कर्मफलानि सर्वात्मनि भगवतीति विसृजन्तो निष्कामकर्मयोगिनो भगवद्भक्तास्तेभ्यो भगवद्रूपेभ्यो नमः । च=तथा विध्यद्भ्यः=विध्यन्ति—ताडयन्ति बाणान् शत्रूनिति विध्यन्तः शत्रुतापनाः शूरवीराः तेजस्विनः क्षत्रियाः तेभ्य इत्यर्थः । यद्वा विध्यन्ति कामादिकानाभ्यन्तरान् शत्रून् प्रतिपक्षभावनयेति विध्यन्तः=मनोनिग्रहतत्परा योगिनः तेभ्यः वः=युष्मभ्यं भगवद्भ्यो नमः । स्वपद्भ्यः=स्वपन्ति ते स्वपन्तः=स्वप्नावस्थामनुभवन्तस्तेभ्यः सर्वेभ्यो भगवद्रूपेभ्यो जीवात्मभ्यो नमः । च=तथा जाग्रद्भ्यः=जाग्रति ते जाग्रतः—जाग्रदवस्थावन्तस्तेभ्यो वः युष्मभ्यं भगवद्रूपेभ्यो नमः । शयानेभ्यः=शेरते ते शयानाः—सुषुप्त्यवस्थावन्तस्तेभ्यो नमः । तथा आसीनेभ्यः=आसते ये, ते आसीनाः—उपविशन्तस्तेभ्यो वो नमः । तिष्ठद्भ्यः=तिष्ठन्ति ये, ते तिष्ठन्तो निवृत्तगतयस्तेभ्यो नमः । धावद्भ्यः=धावन्ति ये, ते धावन्तो—वेगवद्गतयस्तेभ्यो

वो नमः। अत्र बहुवचनं जीवबाहुल्याभिप्रायेण ज्ञातव्यम्। अयम्भावः—सर्वाणि शरीराणि सर्वात्मा भगवानेव एकोऽधितिष्ठति, अतस्तत्रौपाधिकं भेदरूपं प्रविकल्प्य सर्वत्र शाखाग्रचन्द्रदर्शनन्यायेन लक्ष्यार्थमखण्डैकरसं पूर्णं ब्रह्मात्मानं जिज्ञासवो विजानन्तु इत्यतः तद्विवक्षया तत्त्वबुभुत्सुहितैषिण्या भगवत्याः श्रुतेरेतादृशः प्रयास इति। यद्वा तत्तदिन्द्रियाधिष्ठातृदेवतारूपेभ्योऽपि भगवद्भ्य इमे नमस्काराः सन्तु। तथाहि—विसृजन्ति प्रसारयन्ति पादांस्तादृशा उपेन्द्रास्पादाभिमानिनो देवास्तद्रूपेभ्यो नमः। पेषणं=ताडनञ्चोपस्थेन्द्रियकर्मप्रसिद्धम्। 'यस्यामुशन्तः प्रहराम शेपम्' (ऋ. १०।८५।३७) इति श्रुतेः तदभिमानिनः प्रजापतयस्तद्रूपेभ्यो नम। स्वपनं जागरणोन्मेषनिमेषाभ्यां चक्षुर्धर्मैः प्रसिद्धस्तत्कर्मकर्तृसूर्यरूपेभ्यो नम.। आसनं शयनञ्च पायु-इन्द्रियमवष्टभ्यैव भवतीति तत्कर्मकर्तृमृत्युरूपेभ्यो नमः। श्रोत्रेन्द्रियं हि सन्निहितं शब्दं स्वाधिष्ठाने स्थितमेव शृणोति. दूरस्थन्तु दूरे गत्वैव। 'दूरे शब्दः' इति प्रत्ययात्। ततश्च तदधिष्ठातृदिग्रूपदेवता अपि तिष्ठन्त्यो धावन्त्यश्च भवन्ति, तद्रूपेभ्यो भगवद्भ्यो नमः।

## ( ३० )

### ( विविधरूपवद्भ्यो वस्तुतो रूपरहितेभ्यो भगवद्भ्यो नमस्ततयो विलसन्तु )

हीनमध्यमोत्तमजन्तूदाहरणेन सर्वेषां मायाकल्पितनामरूपकृतकार्यकरणसंघातप्रविष्टानां समेषां जीवानां पारमार्थिकस्य ब्रह्मस्वरूपस्य, अधिगतलौकिकभेदानुवादेनानधिगतस्यालौकिकस्य सप्रयोजनस्याबाधितस्याभेदस्य च प्रतिपाद-

यस्यां=योनौ, उशन्तः=पुत्रजन्म कामयमानाः प्रहराम=प्रक्षिपेम, शेपः=पुत्रजननमित्यर्थः।

नाय, सर्वत्र विहितया सुदृढया भगवद्भावनया कल्याणपथपरिपन्थिरागद्वेषादि-दोषप्रक्षयाय च, औपाधिकविविधरूपवद्भ्यो वस्तुतो रूपरहितेभ्यः शुद्धबुद्ध-मुक्तानन्दस्वभावेभ्यः सर्वत्रान्तर्बहिःस्थितेभ्यो भगवद्भ्यः '**येन केन प्रकारेण द्वैतभावं विवर्जयेत्**' इति न्यायाद्द्वैतभावनागर्भान् नमस्कारान् ब्रह्मविज्ञप्तिनिधिभूता श्रुतिर्विदधाति—

**ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो—**
**नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो—**
**नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो—**
**नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥**

(शु. य. १६ । २५ । तै. सं. ४ । ५ । ४)

गणाः=भूतविशेषाः—देवानुचरास्तेभ्यो भगवद्रूपेभ्यो नमः । गणानां पालकाः=स्वामिनो गणपतयस्तेभ्यो वः=युष्मभ्यं नमः, व्राताः=नानाजातीयानां पाषाणलोहलोष्ठवृक्षलतागुल्मपशुपक्षिकीटपतङ्गगिरिनदीवनसमुद्रमनुजदनुजदेवपितृगन्धर्वप्रभृतीनां सङ्घास्तेभ्यो भगवद्रूपेभ्यो नमः । व्रातपतयः=व्रातपालकास्तेभ्यो वो नमः । गृध्यन्ति=धाङ्क्षन्तीति गृत्साः=विषयलम्पटाः पामराः, यद्वा गृत्साः मेधाविनः—पुरुषर्षभाः तेभ्यो नमः । गृत्सपतयस्तत्पालकास्तेभ्यो वो नमः । विकृतं रूपं येषां ते विरूपाः=तुरगवदनहयग्रीवनग्नमुण्डजटिलादयस्तेभ्यो नमः । यद्वा विगतं रूपं लौकिकं येषां ते विरूपाः=ब्रह्मणो वस्तुतोऽविकारत्वेन प्राकृतिकरूपशून्याः विगतरूपाः शुद्धब्रह्मरूपाः क्षेत्रज्ञास्तेभ्यो नमः । विश्वं=सर्वं नानाविधं रूपं येषां ते विश्वरूपास्तेभ्यो वो नमः । शुद्धमेकमेव हि चैतन्यं तत्तदन्तःकरणोपहितत्वेन साक्षिशब्दवाच्यम् । तदेव च प्रतिबिम्बितत्वेन क्षेत्रज्ञशब्दा-

भिधेयं भवति, साक्षिणो व्योमादिवदेकत्वेऽपि प्रतिबिम्बितस्य तस्य भवति वैविध्य-मुपाधिवैविध्यात्। ते तु क्षेत्रज्ञाः परमार्थतो ब्रह्माभिन्नत्वेन विरूपा व्यवहारतस्तु जड-शरीरादितादात्म्यापन्नत्वात् विश्वरूपा इत्युच्यन्ते। 'समारोप्यस्य रूपेण विष-यो रूपवान् भवेत्' इति न्यायेन शुक्तिकायां रजतमिव, ब्रह्मणि विश्वरूप-स्याध्यस्तत्वात् एव तस्य विश्वरूपत्वम्। तथैवामनन्ति श्रुत्यन्तराणि भूयांसि–'ब्रह्म दाशा+ ब्रह्म दासा ब्रह्मेवेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्॥ ब्रह्मेमे द्यावा पृथिवी....।' (इत्याथर्वणसंहितोपनिषद्ब्रह्मसूक्ते) 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतो मुखः॥' (अथर्व, १०।८।२७) (श्वे. ४।३) 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते*।' (तै. आ. ३।१२।१) इत्यादीनि। पुराणवचांस्यपि–'एकः समस्तं यदि-हास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥' (वि. पु. २।१६।२३) 'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य॥' (वि.

---

+ दाशा=कैवर्ताः, दासाः=सेवकाः–परिचारकाः, कितवाः=द्यूतकृतः इत्येवं धर्मेण जीवानां जडानाम ब्रह्मत्वमाहेद सूक्तम्। इदं हि ब्रह्ममीमांसायां वेदान्त-दर्शने बादरायणाचार्येण 'दाशकितवादित्वमधीयत एके।' (ब्र. सू. २।३।४३) इत्यत्र स्मृतम्॥

* धीरः=परमात्मैव सर्वाणि–रूपाणि–विचित्य=सृष्ट्वा नामानि च कृत्वा बुद्ध्यादौ प्रविश्य जीवरूपो व्यवहरन् वर्तते इत्यर्थः॥

पु. २ । १२ । ३८ ) 'पाताले चान्तरिक्षे दशदिशि गहने सप्तशैले समुद्रे, भस्मे काष्ठे च लोष्ठे क्षितिजलपवने स्थावरे जंगमे वा । अग्नौ खे पुंसि नार्यामसुरसुरयुगे पुष्पपत्रे तृणेऽग्ने, एको व्यापी शिवोऽहमिति वदति हरिर्नास्ति देवो द्वितीयः ॥' इति । भूतानि सर्वाणि तथाचमेतदहश्च विष्णु र्न ततोऽन्यदस्ति । ' (वि. पु. ३ । ११ । ५४) 'अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ॥' (वि. पु. १ । २२ । ८७ ) इत्यादीनि च ।

इदमत्रनिर्ज्ञेयम्–' गणेभ्यः ' इत्यादिना भगवतः सार्वात्म्यमुपलक्षितम् । विरूपेभ्यः ' इत्यनेन भगवतो निर्विकारत्वं सूचितम् । ' विश्वरूपेभ्यः ' इत्यनेन च भगवतश्चेतनाचेतनात्मकसकलप्रपञ्चरूपत्वमुपवर्णितम् । 'तत्त्वमसि' ' अहं ब्रह्मास्मि ' इत्यादिप्रमाणसहस्रानुरोधात् चेतनस्वरूपैक्यम्, आरम्भणाधिकरणन्यायेन तदध्यासाधिष्ठानब्रह्मणमचेतनात्मकत्वञ्चावगतं भवति । अध्यस्तस्याधिष्ठानव्यतिरेकेणासत्त्वस्य शुक्तिकारजतादौ दृष्टत्वेन रजताध्यासाधिष्ठानस्य शुक्तिकाया. रजतात्मकत्ववत् , जगदध्यासाधिष्ठानस्य ब्रह्मणो जगदात्मकत्वादिति ब्रह्ममीमांसाया विस्तर. । एतेन ' श्वभ्यः ' इत्यतिनिकृष्टैः पामरैः सह भगवत कथमैक्यं श्रुत्या प्रतिपाद्यते इति शङ्का निरस्ता, न हि गृत्सपदवाच्यदेहविशिष्टाभेद· श्रुत्योच्यते, किन्तु तद्रूप्य निष्कृष्टोपाधियन्नीनचैतन्यम्, उपनीतयागात्मन्येषु शरीरेष्वनुस्यूतं तदात्मकत्वम् । तदेत द्गीतायां स्पष्टीकृतं भगवतैव–'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ ' ( गी. ५ । १८ ) इति । न चैतावता परमेश्वरस्य तदुपाधिगुणदोषसम्बन्धलेशोऽस्ति, नहि

गङ्गायां तडागे सुरायां मूत्रे वा प्रतिबिम्बमानस्यादित्यस्य तदुपाधिगुणदोषसंबन्ध इति सर्वमनवद्यम् ॥

## ( ३१ )

### ( निगमागममुनिवृन्दगेयं भगवन्नामधेयमेवास्ति सकलजनमनः-पावनकरं वाञ्छिताशेषार्थसिद्धिसाधनम् )

भगवन्नामस्मरणमेव सर्वसिद्धिमूलं विश्वपावनकरञ्च। तदेव पुण्यमहोरात्रं धन्यञ्च यत्र खलु पार्वतीप्राणवल्लभो नीलकण्ठश्चन्द्रमौलीश्वरो विश्वेश्वरो विभुः स्मर्यते नमस्क्रियते च, सैव रसना वा एव कर्णौ, या च यौ च हृद्गतमोऽपहानि भगवन्नामानि परमादरेण रटति श्रृणुतश्च। स एव मानवो मान्यः स्तुत्यश्च यः किल भवरोगौषधेषु पीयूषसारेषु तेषु भक्तिं प्रदधाति। इत्येवमादितन्महत्त्वं सुनिपुणं विचार्य जनिमृतिवर्तिभीतानां श्रद्धाशीलानां मुमुक्षूणामविलम्बमवलम्बनाय, भगवतो देवाधिदेवस्य जगदम्बास्वान्तकान्तस्य सदाशिवस्य महेश्वरस्य रुद्रस्य विविधदिव्यगुणकर्मबोधकानि निखिललोकदुरितक्षपणक्षमाणि संसारदावानलशामकानि पवित्रितसकलजनमानसानि विपन्नसंरक्षणदीक्षितानि दैवलिखितदुरक्षरलुम्पकानि वाञ्छिताशेषार्थसिद्धिसाधनानि निखिलनिगमागममुनिवृन्दगेयानि विशिष्टपुण्योदयभावितानि पावनानि तानि नामानि परमादरेण गृह्णन् स्वयमेव मन्त्रद्रष्टा महर्षिः भूयो भूयस्साञ्जलिबन्धं सप्रणयं तमेव भगवन्तं तदसाधारणधर्मरूपतन्महिमानुसंधानपूर्वकं नमस्करोति—

**ॐ नमो भवाय च रुद्राय च नमः**
**शर्वाय च पशुपतये च,**

नमो नीलग्रीवाय च शितिकण्ठाय च ।
नमः कपर्दिने च,
व्युप्तकेशाय च नमः सहस्राक्षाय च
शतधन्वने च नमो,
गिरिशयाय च शिपिविष्टाय च
नमो मीढुष्टमाय चेषुमते च ॥

( शु. य. १६ । २८ + २९ । तै. स. ४।५।६ )

भवाय नमः=भवन्ति—उत्पद्यन्तेऽस्माच्चराचरभूतानीति भवो विश्वस्रष्टा ब्रह्ममूर्तिः तस्मै नमः । रुद्राय नमः=रुत् रोदनहेतुभूतं दुःखं द्रावयति—नाशयतीति रुद्रो विश्वरक्षिता विष्णुमूर्तिः तस्मै नमः । शर्वाय नमः=शृणाति—हिनस्ति—प्रलयं करोति विश्वस्येति शर्वः संहारकर्ता रुद्रमूर्तिस्तस्मै नमः । यद्यपि एक एव भगवान् मूर्तित्रयेण त्रिभिन्नमिव विभाति, तथापि तत्र नास्ति कथमपि स्वरूपभेद इति ज्ञापनायेदम् । तदेतत् स्मृतं विष्णुमूर्तिना भगवता भागवतपुराणेऽपि —' अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् । आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज ! । सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां गुणोचिताम् ॥ तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि । ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति । त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ ' ( भा. ४ । ७ । ५० + ५१ +

५२ + ५४ +) इति। यद्वा भवति=संजायते=निष्पद्यते ब्रह्मज्ञानोपदेशो मुमुक्षुकल्याणाय यस्मात्सोऽसौ भवः=ज्ञानोपदेष्टा त्रिभुवनगुरुः करुणासुधासिन्धुः —दक्षिणामूर्तिदेवस्तस्मै नमः। रुदं=संसारसंतापं ज्ञाननिष्ठाप्रदानेन द्रावयतीति रुद्रस्तस्मै नमः। शृणाति=विध्वंसतेऽज्ञानान्धकारं ज्ञानप्रकाशेनेति शर्वस्तस्मै नमः। एभिस्त्रिभिः—'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥' (श्वे. ६।२०) 'रुद्रस्तारकं ब्रह्म व्याचष्टे।' (जाबालोपनिषदि) इति च श्रुतिप्रसिद्धं महेश्वरस्य मोक्षहेतुत्वमभिहितम्। तथा चान्यथाप्यभियुक्तैः—'मौग्ध्यच्छायमहावटद्रुमतटे योगासनस्थं प्रभुं, प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिनं मोद्वीक्ष्यमाणाननम्। मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं, हृद्यन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्तिकम्॥' 'ममाद्य देवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः। ओङ्काररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु॥' इति। अत एव पशुपतये नमः पशून्=अज्ञजनान् स्वप्रपन्नान् ज्ञानं प्रदाय पाति, संसारभयाद्रक्षतीति पशुपतिस्तस्मै पशुपाशपाटनपटवे विश्वदेशिकाय नमः। यद्वा पशूनां=वेदानां गायत्र्यादीनां—पतिः=पालकः। 'पशवो वै छन्दांसि' इति श्रुतेः। एभिश्चतुर्भिः—'जगज्जन्मस्थितिसंहारबन्धमोक्षाख्यपञ्चकृत्यकारित्वलक्षणं परमेश्वरासाधारणमहत्त्वं' द्योतितं भवति। अयम्भावः—सदाशिवोपासिता मानवस्तदनुग्रहेण ज्ञाननिष्ठां समवाप्य संसारसन्तापरहितो विमलानन्दनिधिर्जीवन्मुक्तो जगत्पूज्यः पशुपाशरहितः स्वयं पशुपति र्भवति। अनेन चाज्ञानां जीवानां कथं पशुत्वम्, कथञ्च परमेश्वरस्य तत्पतित्वमिति ? प्रश्नद्वयमुत्तरितं भवति, संसारपाशबद्धत्वेन प्राणिनां पशुत्वम्। तैः स्वकार्यकारयितृत्वेन परमेश्वरस्य तत्पतित्वमिति च तदर्थलाभात्। तदेतल्लैङ्गे

नमो नीलग्रीवाय च शितिकण्ठाय च ।
नमः कपर्दिने च,
व्युप्तकेशाय च नमः सहस्राक्षाय च
शतधन्वने च नमो,
गिरिशयाय च शिपिविष्टाय च
नमो मीढुष्टमाय चेषुमते च ॥

( शु. य. १६ । २८ + २९ । तै. सं. ४।५।६ )

भवाय नमः=भवन्ति—उत्पद्यन्तेऽस्माच्चराचरभूतानीति भवो विश्वस्रष्टा ब्रह्ममूर्तिः तस्मै नमः । रुद्राय नमः=रुद् रोदनहेतुभूतं दुःखं द्रावयति—नाशयतीति रुद्रो विश्वरक्षिता विष्णुमूर्तिः तस्मै नमः । शर्वाय नमः=शृणाति—हिनस्ति—प्रलयं करोति विश्वस्येति शर्वः संहारकर्ता रुद्रमूर्तिस्तस्मै नमः । यद्यपि एक एव भगवान् मूर्तित्रयेण त्रिभिन्नमिव विभाति, तथापि तत्र नास्ति कथमपि स्वरूपभेद इति ज्ञापनायेदम् । तथैव स्मृतं विष्णुमूर्तिना भगवता भागवतपुराणेऽपि —' अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् । आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज ! । सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां गुणोचिताम् ॥ तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि । ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति । त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥' ( भा. ४।७।५० + ५१ +

५२ + ५४ +) इति। यद्वा भवति=संजायते=निष्पद्यते ब्रह्मज्ञानोपदेशो मुमुक्षुकल्याणाय यस्मात्सोऽसौ भवः=ज्ञानोपदेष्टा त्रिभुवनगुरुः करुणासुधासिन्धुः —दक्षिणामूर्तिदेवस्तस्मै नमः। रुदं=संसारसंतापं ज्ञाननिष्ठाप्रदानेन द्रावयतीति रुद्रस्तस्मै नमः। शृणाति=विध्वंसतेऽज्ञानान्धकारं ज्ञानप्रकाशेनेति शर्वस्तस्मै नमः। एभिर्विभिः—'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति॥' (श्वे. ६।२०) 'रुद्रस्तारकं ब्रह्म व्याचष्टे।' (जाबालोपनिषदि) इति च श्रुतिप्रसिद्धं महेश्वरस्य मोक्षहेतुत्वमभिहितम्। तथा चाभ्यधाय्यभियुक्तैः—'भ्रोद्यच्छाखमहावटद्रुमतटे योगासनस्थं प्रभुं, मत्यक्तस्वयुमुक्षुभिः प्रतिदिनं मोद्वीक्ष्यमाणाननम्। भद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं, हृद्यन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्तिकम्॥' 'ममाय देवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः। ओङ्काररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु॥' इति। अत एव पशुपतये नमः पशून्=मज्जनान् स्वमपन्नान् ज्ञानं प्रदाय पाति, संसारभयाद्रक्षतीति पशुपतिस्तस्मै पशुपाशपाटनपटवे विश्वदेशिकाय नमः। यद्वा पशूनां=वेदानां गायत्र्यादीनां—पतिः=पालकः। 'पशवो वै छन्दांसि' इति श्रुतेः। एभिश्चतुर्भिः—'जगज्जन्मस्थितिसंहारबन्धमोक्षाख्यपञ्चकृत्यकारित्वलक्षणं परमेश्वरासाधारणमहत्वं' द्योतितं भवति। अयम्भावः—सदाशिवोपासिता मानवस्तदनुग्रहेण ज्ञाननिष्ठां समवाप्य संसारसन्तापरहितो विमलानन्दनिधिर्जीवन्मुक्तो जगत्पूज्यः पशुपाशरहितः स्वयं पशुपतिर्भवति। अनेन चाज्ञानां जीवानां कथं पशुत्वम्, कथञ्च परमेश्वरस्य तत्पतित्वमिति? प्रश्नद्वयमुत्तरितं भवति, संसारपाशबद्धत्वेन प्राणिनां पशुत्वम्। तैः स्वकार्यकारयितृत्वेन परमेश्वरस्य तत्पतित्वमिति च तदर्थलाभात्। सदेतदैश्वे

स्पष्टमुपबृंहितम् ।—'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । ब्रह्मादिस्तम्बपर्यन्तान् पशून् बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वयम् । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥' इति । यथा गवाश्वमहिषादयस्त स्वामिभिः पाशैराबध्य स्ववशीकृत्य स्वाराधनरूपतया तदुपयोगितया च तत्तत्कर्मसु विनियुज्यन्ते । तद्वद्ब्रह्मादिस्थावरान्तानां जीवनिकायानां पशुत्वं परमेश्वरस्य च तत्पतित्वं विज्ञेयम् । नीलग्रीवाय नमः=क्षीरोदधिमन्थनोद्भूत-हालाहलविषभक्षणेन नीला—नीलवर्णा—ग्रीवा—कण्ठैकदेशो यस्य स नीलग्रीव-स्तस्मै नमः । शितिकण्ठाय नमः=शितिः—श्वेतः—शुक्लवर्णः कण्ठो नीलातिरिक्त-भागो यस्य सः शितिकण्ठस्तस्मै नमः । 'शिती धवलमेचकौ' इत्यमरः । अनेन स्वतो धवलकण्ठे कालकूटगरलप्रयुक्तं नैल्यं, कालिमादिदोषमविगणय्य विश्वैकमात्रत्राणाय विषं कवलितवतो भगवतः सर्वलोकहृदयालुत्वं—'अर्हन्निदं दयसे विश्वम्' (ऋ० २ । ३३ । १०) इत्यादिश्रुतिवर्णितं प्रदर्शयति । तेन जगदुपकृतिकृतं कण्ठकल्माषलक्षणं दूषणमपि प्रशंसनीयं भूषणमेवेति सूच्यते । तदुक्तं—'स कल्माषः कण्ठे तव न कुरुते न श्रियमहो, विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥' (महिम्नस्तोत्र) इति । कपर्दिने नमः=कपर्दः=जटाजूटोऽस्यास्तीति कपर्दी—शिवयोगिसिद्धर्षिमुन्यादिवेषधारी तस्मै नमः। यद्वा पर्शब्दः प्रवाहवाची, 'पर्व पूर्तौ' इति धातोः सम्पदादित्वाद्भावे क्विप् वलोपः । कस्य=गंगाजलस्य पः=प्रवाहः—तं दायति=शोधयति पवित्रीकरोतीति कपर्दः 'भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः।' इति रामायणे स्मरणात्। जटानां ग्रन्थिविशेषः सोऽस्यास्तीति कपर्दी। एतेन गंगापावित्र्यस्य भगवज्जटास्पर्शः

कारणमिति कथनेन भगवतः सर्वातिशायिपावनत्वं सूचितम्। यद्वा कपर्दः=परमेश्वर-जटाकलापः तद्वान् कपर्दी, अतएव—कं=गंगाजलं पर्दयति=पालयतीति कपर्दः—जटाजूटः तद्वान् कपर्दीति शब्दार्थपर्यालोचनयाऽप्यनन्यसाध्यगंगाधारकत्वलक्षण-कार्यनिर्वाहकत्वं भगवतः स्पष्टं प्रतीयते। '**गङ्गायाःपतनं राजन्! पृथिवी न सहिष्यति। तां वै धारयितुं शक्तं नान्यं पश्यामि शूलिनः॥**' इति रामायणादिवचनैर्गङ्गाधारणस्यानन्यसाध्यत्वावगमात्। तदुक्तं ब्रह्मतर्क-स्तवेऽप्ययदीक्षितैः पण्डितप्रवरैरपि—'**गंगाधृता न भवता शिव! पाव-नीति, नास्वादितो मधुर इत्यपि कालकूटः। संरक्षणाय जगतां करुणातिरेकात्कर्मद्वयं कलितमेतदनन्यसाध्यम्॥**' इति।

अनेन 'यो महान् जलराशिः कियान् मन्दाकिनीनाम्नाऽन्तरिक्षमभि-व्याप्याऽऽस्ते, कियान् भागीरथीति गङ्गेति च प्रसिद्धो भूलोके सप्तसमुद्राना-पूर्यास्ते, कियाँस्तु भोगवतीति संज्ञया पातालमभिव्याप्यास्ते, सोऽयं भगवतो जटाकलापे बिन्दोरप्यल्पः सन् तदन्तर्निगूढोऽभवदिति पुराणप्रसिद्धं तस्य दिव्य-महत्त्वमनुमीयते, एवं '**दक्षं स यज्ञं जहि भद्रटानां त्वमग्रणी रुद्रजटांश-को मे।** ( भा० ४। ५। ४ ) इति, भागवतादिप्रसिद्धो भगवज्जटांश-वीरभद्रमहिमा च स्मर्यते, चकाराः सर्वे समुच्चयार्था ज्ञेयाः। व्युप्ताः=मुण्डि-ताः केशा यस्य सोऽसौ व्युप्तकेशः—परमहंसपरिव्राजकाचार्यजगद्गुरुशङ्करस्वा-मिविग्रहावतारधारी तस्मै नमः। अनेन—'ईशानः सर्वविद्यानां' **ब्रह्माधिपतिः ब्रह्मणोऽधिपतिः।**' (तै. आ. १० । ४७ ) इति श्रुतिप्रसिद्धं ब्रह्मविद्यासम्प्रदायप्रवर्तकत्वम् '**शङ्करः सवितानन:**' '**चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति**' इत्यादिपुराणप्रसिद्धपरमेश्वरावतारत्वञ्च शङ्कर-

स्पष्टमुपबृंहितम् ।—'ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः । पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ॥ तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः । ब्रह्मादिस्तम्बपर्यन्तान् पशून् बद्ध्वा महेश्वरः । पाशैरेतैः पतिर्देवः कार्यं कारयति स्वयम् । स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥' इति । यथा गवाश्वमहिषादयस्त स्वामिभिः पाशैराबध्य स्ववशीकृत्य स्वाराधनरूपतया तदुपयोगितया च तत्तत्कर्मसु विनियुज्यन्ते । तद्वद्ब्रह्मादिस्थावरान्तानां जीवनिकायानां पशुत्वं परमेश्वरस्य च तत्पतित्वं विज्ञेयम् । नीलग्रीवाय नमः=क्षीरोदधिमन्थनोद्भूत-हालाहलविषभक्षणेन नीला—नीलवर्णा—ग्रीवा—कण्ठैकदेशो यस्य स नीलग्रीव-स्तस्मै नमः । शितिकण्ठाय नमः=शितिः—श्वेतः—शुक्लवर्णः कण्ठो नीलातिरिक्त-भागो यस्य सः शितिकण्ठस्तस्मै नमः । 'शिती धवलमेचकौ' इत्यमरः । अनेन स्वतो धवलकण्ठे कालकूटगरलप्रयुक्तं नैल्यं, कालिमादिदोषमविगणय्य विश्वैकमानत्राणाय विषं कवलितवतो भगवतः सर्वलोकदयालुत्वं—'अर्हन्निदं दयसे विश्वम्' (ऋ० २ । ३३ । १०) इत्यादिश्रुतिनिगदितं प्रदर्शयति । तेन जगदुपकृतिधृतं कण्ठकल्माषलक्षणं दूषणमपि प्रशसनीयं भूषणमेवेति सूच्यते । तदुक्त—'स कल्माषः कण्ठे तव न कुरुते न श्रियमहो, विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥' (महिम्नस्तोत्र) इति । कपर्दिने नमः=कपर्दः=जटाजूटोऽस्यास्तीति कपर्दी—शिवयोगिसिद्धर्षिमुन्यादिवेषधारी तस्मै नमः। यद्वा पर्शब्दः प्रवाहवाची, 'पर्व पूर्तौ' इति धातोः सम्पदादित्वाद्भावे क्विप् वलोपः । कस्य=गंगाजलस्य प =प्रवाहः—त दायति=शोधयति पवित्रीकरोतीति कपर्द 'भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः।'इति रामायणे स्मरणात्। जटा नां ग्रन्थिविशेष सोऽस्यास्तीति कपर्दी। एतेन गंगापावित्र्यस्य भगवज्जटास्पर्शः

कारणमिति कथनेन भगवतः सर्वातिशायिपावनत्वं सूचितम् । यद्वा कपर्दः=परमेश्वरजटाकलापः तद्वान् कपर्दी, अतएव—कं=गंगाजलं पर्दयति=पालयतीति कपर्दः—जटाजूटः तद्वान् कपर्दीति शब्दार्थपर्यालोचनयाऽप्यनन्यसाध्यगंगाधारकत्वलक्षणकार्यनिर्वाहकत्वं भगवतः स्पष्टं प्रतीयते । '**गङ्गायाःपतनं राजन् ! पृथिवी न सहिष्यति । तां वै धारयितुं शक्तं नान्यं पश्यामि शूलिनः ॥**' इति रामायणादिवचनैर्गङ्गाधारणस्यानन्यसाध्यत्वावगमात् । तदुक्तं ब्रह्मतर्कस्तवेऽप्यप्पयदीक्षितैः पण्डितप्रवरैरपि—'**गंगाधृता न भवता शिव ! पावनीति, नास्वादितो मधुर इत्यपि कालकूटः । संरक्षणाय जगतां करुणातिरेकात्कर्मद्वयं कलितमेतदनन्यसाध्यम् ॥**' इति ।

अनेन 'यो महान् जलराशिः कियान् मन्दाकिनीनाम्नाऽन्तरिक्षमभिव्याप्याऽऽस्ते, कियान् भागीरथीति गङ्गेति च प्रसिद्धो भूलोके सप्तसमुद्राना पूर्यास्ते, कियाँस्तु भोगवतीति संज्ञया पातालमभिव्याप्यास्ते, सोऽयं भगवतो जटाकलापे बिन्दोरप्यल्पः सन् तदन्तर्निगूढोऽभवदिति पुराणप्रसिद्धं तस्य दिव्यमहत्त्वमनुमीयते, एवं '**दक्षं म यज्ञं जहि मद्भटानां त्वमग्रणी रुद्रजटांशको मे । ( भा० ४ । ५ । ४ )** इति, भागवतादिप्रसिद्धो भगवज्जटांशवीरभद्रमहिमा च स्मर्यते, चकाराः सर्वे समुच्चयार्था ज्ञेयाः । व्युप्ताः=मुण्डिताः केशा यस्य सोऽसौ व्युप्तकेशः—परमहंसपरिव्राजकाचार्यजगद्गुरुशङ्कराख्याभिधमहावतारधारी तस्मै नमः । अनेन—' ईशानः सर्वविद्यानां ' **ब्रह्माधिपतिः ब्रह्मणोऽधिपतिः ।** ' ( तै. आ. १० । ४७ ) इति श्रुतिप्रसिद्धं ब्रह्मविद्यासम्प्रदायप्रवर्तकत्वम् ' **शङ्करः सविताननः** ' ' **चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति** ' इत्यादिपुराणप्रसिद्धपरमेश्वरावतारत्वञ्चशङ्कर-

स्वामिनोऽभिहितं भवति । सहस्राक्षाय नमः=सहस्रमक्षीणि ज्ञाननेत्राणि यस्य सः, सहस्राक्षस्तस्मै सर्वज्ञाय नमः । शतधन्वने नमः=शतं=अनेकानि–वेद-प्रणवमेरुपिनाकादिलक्षणानि धनूंषि दुष्टनिग्रहाय विद्यन्ते यस्य सः, शतधन्वा 'धनुषश्च' इत्यनङ्, तस्मै बहुधनुर्धारिणे नमः । तथा च स्मर्यते भगवतोऽलौकिकबहुधनुर्धरत्वं भारतेऽपि–' विष्णुं कृत्वा शरोत्तमम् । शल्यमग्निं तथा कृत्वा धनुर्मेरुमकारयत् । कृत्वा च धनुरोङ्कारं सावित्रीं ज्यां महेश्वरः । इति. । अनेन ' तेपामसुराणां तिस्रः पुर आसन् ' इति श्रुतिप्रसिद्धः त्रिपुरसंहारमहिमा प्रदर्शितः । अयंभावः–त्रिभुवनमपीच्छामात्रेण संहरतः परमेश्वरस्य त्रिपुरादिदानववधायालौकिकबहुधनुर्धारणं लीलामात्रमेव, नहि लीलायां प्रयोजनापेक्षा वर्तते । अतो लौकिकवैदिकनियमानधीनबुद्धे स्स्वतन्त्रेच्छस्य लीलया क्रीडतस्तस्य भगवतः ' द्वाभ्यामेव हस्ताभ्यामेकस्य धनुषो धारणेन रिपुक्षयसम्भवे भूयोभिर्हस्तैर्भूयसां धनुषां धारणं किमर्थम् ? । ' इत्येवं नियोगपर्यनुयोगानर्हत्वादिति । गिरिशयाय नमः=गिरौ शैलवरे कैलासे शेते दिव्यविग्रहेण विहरति सोऽसौ गिरिशयः कन्दर्पकोटिशतगुणसुन्दर-दिव्याकार इन्दुकलावतंसो मन्दस्मितलसदाननो वामाङ्कलितकान्तः सुशान्तः सर्वविद्याधिनाथो भवरोगाभिभावकवैद्यनाथः कैलासनाथः श्रीमन्महेश्वरस्तस्मै नमः । शिपिविष्टाय=विष्णुरूपाय नमः ' विष्णुः शिपिविष्टः इति श्रुतेः । यद्वा शिपिषु–गवादिपशुषु अन्तर्यामितया विष्टः=प्रविष्टः 'पशवो वै शिपिः' इति श्रुतेः । उपलक्षणमिदं सर्वप्राणिष्वन्तर्यामितयाऽवस्थितः इत्यर्थः । यद्वा यज्ञो वै शिपिः ' इति श्रुतिवचनेन यज्ञेऽधिदेवतात्वेन प्रविष्टः । यद्वा शिपिः =आदित्यमण्डलं तत्राधिष्ठातृत्वेन प्रविष्ट इत्यर्थः । यद्वा शिपयोऽत्र रश्मय उच्यन्ते, तेषु निविष्टस्तस्मै । तदुक्तं–' शैत्याच्छयनयोगाच्च शीतित्वात्

प्रचक्षते । तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः । तेषु प्रवेशाद्वि-श्वेशः, शिपिविष्ट इहोच्यते ॥' इति । मीढुष्टमाय नमः=अतिशयेन मीढ्वान्—मेघरूपेण मूसेक्ता, ज्ञानामृतेन जिज्ञासुहृदयसेक्ता वा मीढुष्टमः सेक्तृत-मोऽतिशयेन वीर्यसेचको जगत्स्रष्टा हिरण्यगर्भरूपो वा यविष्ठो नित्यनवः परिणामरहितो वेत्यर्थः तस्मै नमः। एभिश्चिभिः—'स ब्रह्मा स विष्णुः' इत्यादि-श्रुतिप्रसिद्धत्रिमूर्त्यात्मकत्वमुक्तं भवति। इषुमते नमः=प्रशस्ताः—शत्रुविजयिनः—इषवः=बाणाः सन्त्यस्य प्रपञ्चपरिरक्षणायेतीषुमान् तस्मै नमः प्राशस्त्यार्थे मतुप् इति । अत्र भूयोभिरिष्टानिष्टप्राप्तिपरिहारप्रार्थनालिङ्गैर्नमस्कारैर्नमस्कार्यस्य भगवतो नमस्कारमन्त्रगतत्तद्विशेषणसमर्पितं सर्वेश्वरत्वसर्वान्तर्यामित्वादिलक्षणं सार्विकं सर्वतोऽधिकमुत्कृष्टत्वमवगतं भवति । आराधयितुराराधनीयोत्कर्षानु-सन्धानपूर्वकः प्रह्वीभावो नमस्कार इति तन्निर्वचनात् । यद्यपि उत्कर्षादिव भयादपि लोके नमस्कारो दृश्यते । तथापि भयप्रयुक्तोऽपि नमस्कार उत्कर्षं विना न सम्भवति । भयभूयस्त्वं हि परमात्मलिङ्गं 'महद्भयं वज्रमुद्यतम्' (का. उ. ६। २ ) इत्यादि श्रुतिप्रसिद्धमिति विज्ञेयम् ।

केचन पाश्चात्या विधर्मिणो विद्वदाभासाः किञ्च भगवतो रुद्रस्य वास्त-विकं स्वरूपमजानाना ग्रन्थस्य पौर्वापर्यानुसन्धानतात्पर्यालोचनशून्या अपि यत्र तत्रावस्थितमन्त्रान्पखण्डमात्रमवलोक्य रुद्रशब्दार्थं यद्वा तद्वा प्रजल्पन्तः परतन्त्रप्रज्ञानां लोकानां रुद्रशब्दार्थविषयां महतीं भ्रान्तिमुत्पादयन्ति, तथाहि—तेषु कश्चित् 'नमो विद्युत्याय च' (शु. य. १६ । ३८) 'नमस्ते अस्तु विद्युते' (शु. य. ३६ । २१) इत्यादिमन्त्रमवलोक्य रुद्रो विद्युद-भिमानी कश्चिद्देवताविशेष एव, विद्युत् एव वा, नतु परमेश्वर इति कथयति । अपरः कश्चन—'आतप्याय च नमः' (शु. य. १६ । ३८ ) इति मन्त्रे

प्रमाणीकृत्य रुद्र आतपस्वरूप एव, न तु जगदीश्वर इति विज्ञापयति। अन्यः कश्चित्–'**नमस्ते रुद्र! मन्यवे**' (शु. य. १६। १) इति मन्त्रेण रुद्रः क्रोधाभिमानी कश्चिद्देवविशेष एव। '**नम उग्राय च भीमाय च**' (शु. य. १६। ४०) इति मन्त्रेण च रुद्रः उग्रो–भीमः=भयङ्कर एव न तु सौम्यः शान्तः कृपालुरित्यभिवदति, कश्चिदन्यः–'**रुद्रो वा एष यदग्निः**' (श. ब्रा. ५। ३। १। १०) इत्यनेन रुद्रो भौतिकाग्निरेवेति ब्रवीति। कश्चनापरः–'**नमो हन्त्रे च हनीयसे च**' (शु. य. १६। ४०) इत्यादिनाऽतिहिंसकोऽसौ रुद्रो घोरगर्जनकर्ता निखिलोपद्रवाधिष्ठाता देवविशेष एवेत्यभिमनुते। इति। अन्य कश्चित्–'**कृत्तिं वसान आचर पिनाकं बिभ्रत्**' (शु. य. १६। ५१) '**वन्याय च**' (शु. य. १६। ३४) '**गह्वरेष्ठाय च**' (शु. य. १६। ४४) इत्यादिना गजचर्मपरिधायकः पिनाकाख्यधनुर्धारकः कश्चित् पर्वतीयो वनचरो राजविशेषो रुद्र इति–(वन=वृक्षौघ तत्र स्वच्छन्दतो वर्तते यः सोऽसौ वन्यः। गह्वरे=विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः) प्रतिपादयति। तेषां भ्रान्तिनिरासायेदमुच्यते। रुद्रस्य सर्वान्तर्यामित्वसर्वात्मत्वादिकं परमब्रह्मलिङ्गं प्रदर्शयितुं '**विद्युत्याय च नमः**' इत्यादिकं रुद्राध्यायः प्रतिपादयति, विद्युदभिमानी परिच्छिन्नो देवविशेष एव रुद्रस्तदा स्यात्, यदा विद्युत्येव तस्यावस्थानं भवेत्। परञ्च यथा रुद्रो विद्युति समनुगत एवमन्यत्रापि सर्वत्र वस्तुनि समनुस्यूत.। तथा च सर्वत्र समनुगतत्वलिङ्गेन रुद्रस्य परमेश्वरत्वं स्पष्टमवगम्यते। अत एव '**नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कूल्याय च सरस्याय च नमो नादेयाय च**' (शु. य. १६। ३७) इत्यादिकं रुद्रसूक्तं विस्तरतस्तस्य समनुगतत्वमभिदधाति, यः किल सर्वत्र वर्तमानः सोऽसौ तत्र तत्र स्रुतौ–क्षुद्र-

मार्गेऽपि च, पथि=प्रौढमार्गेऽपि च, काटे=विषममार्गेऽपि च, यद्वा काटे=अल्प-जलप्रदेशेऽपि च, यत्र जलं न्यग्भावेन पतति स गिर्यधोभागदेशो नीपः तत्रापि च, कुल्या=कृत्रिमा सरित्तत्रापि च, यद्वा कुल्येषु द्विपाच्चतुष्पादादिदेहेष्वपि च, सरस्यपि च नद्यामपि च, सदन्तर्यामितया वर्तमानो भवत्येव । सर्वत्र सत एकत्रापि सत्त्वात् । एवं विश्वरूपो भगवान् विद्युत् आतपो भौतिकाग्निरपि भवत्येव, परन्त्वसौ न विद्युन्मात्र आतपादिमात्रश्चावगन्तव्यः । तथात्वे विश्वरूपत्वव्याघातात् । महता समारम्भेण रुद्राध्यायो भगवतो रुद्रस्य 'गीतासु विश्वरूपाध्याय इव' विश्वरूपत्वं प्रतिपादयति, तत किल रुद्रस्य परमेश्वरत्वाविनाभूतत्वमेव स्पष्टयति। तथैव पुराणमपि—'**सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम्**' इत्येवं बोधयति । यत्तु '**नमस्ते रुद्र ! मन्यवे**' इतिमन्त्रेण रुद्रः कोपाभिमानी कश्चिद्देवविशेष एव सिद्ध्यति इति; तन्न, हे रुद्र !=प्रणतदुःखद्रावक ! ते=तव, मन्यवे—क्रोधाय नमः इत्येतत्क्रोधलिङ्गं देवविशेषत्वं रुद्रस्य कथमुपनयति ? कथञ्च व्यपनयति परमेश्वरत्वम् ? यतः श्रुतिस्मृतिरूपस्याज्ञातिलङ्घिने पापिष्ठाय परमेश्वरोऽपि क्रुध्यत्येव । न च निरस्तसमस्तदोषनिखिलकल्याणगुणगणसमुद्रे भगवति कथं क्रोधप्रसक्तिरिति वाच्यम् ; दुष्टनिग्रहशिष्टानुग्रहस्वभावे निग्रहविषये क्रोधस्यालंकारत्वेनादोषत्वात् । '**श्रुतिस्मृती ममैवाज्ञे यस्तामुल्लंघ्य वर्तते । आज्ञाच्छेदी मम द्वेष्यः स मे वध्यश्च जायते ॥**' इति भगवतैवोक्तत्वात् । न चैवं वैषम्यनैर्घृण्यप्रसक्तिरिति वाच्यम् ; तत्तत्प्राणिकर्मानुसारेण निग्रहानुग्रहौ कुर्वतस्तस्य तदप्रसक्तेरित्याकरे विस्तरः । तथा च रुद्रः क्रुध्यत्यतो नासौ परमेश्वर इति वदतः पाश्चात्यस्य सर्वथैव शास्त्रतात्पर्यानभिज्ञत्वं मिथ्यावादूकत्वञ्च सिद्ध्यतः । अस्त्वेवं परन्तु तत्क्रोधस्य कुतोऽत्र नमस्कार इति चेत्, प्रणतदुःखतद्धेतुभूतपापद्रावकस्य रुद्रस्य भगवतस्तत्र प्रणते

मयि पापनिमित्तकः क्रोधः परिहर्तुं युक्त एवेति सूचयितुमिति गृहाण। यत्तु उग्रत्वभीमत्वाभ्यां कृपालुत्वशान्तत्वादिकल्याणगुणगणाभावोपलक्षितः कश्चित् भयङ्करः क्षुद्रो देवविशेष रुद्र इति, तदपि न सम्यक्, ताभ्यां सर्वश्रेष्ठत्व- लक्षणविरवधिरत्वं विशेषपारव्यपरमेश्वरलिङ्गमेव सिद्धयति। उग्रः=श्रेष्ठः उत्पूर्वा- द्गमेः—उद्गच्छतीत्यस्मिन्नर्थे 'ऋज्रेन्द्राग' इत्युणादिसूत्रेण रन्प्रत्ययः। अत एव 'उग्रोऽस्युग्रोऽहंसजातेषु भूयासम्' इति मन्त्रे ज्ञातिश्रैष्ठ्यप्रशंसाविषये स्वस्मिन्नुग्रशब्दः प्रयुक्तः। तत्र श्रैष्ठ्यसमर्पकस्य सजातपदस्येव तादृशस्य कस्यचिदभावात्संकोचाभावन्यायेन सर्वश्रेष्ठत्वरूपं निरवधिकत्वमेव सिद्धयति, तच कृपालुत्वशान्तत्वादिकल्याणगुणगणमप्याक्षिपत् क्षुद्रदेवविशेषत्वं रुद्रस्यापा- करोति। भीमो भयङ्करः 'भीषाऽस्माद्वातः पवते' (तै. २।८) इति श्रुतेः। तथा च महानुभावानिन्द्राग्न्यादीन् प्रत्यपि भयङ्करत्वेन तन्नियन्तृ- भगवतो रुद्रस्य सर्वोत्तमत्वं सिद्धयति, तच पारमेश्वरमेव लिङ्गम्। यत्तु 'नमो हन्त्रे च हनीयसे च' इत्यादिना गम्यमानमतिहिंसकत्वादिकं परमेश्वरत्व- बाधकं क्षुद्रदेवविशेषत्वसाधकमिति कथनमपि व्यामोहमात्रमेव। 'कालोऽ- स्मि लोकक्षयकृत्प्रवृद्धः' 'ऋतेऽपि त्वां न भविष्यन्ति सर्वे' (गी. ११।३२) इति भगवदुक्तिवत्, अत्रापि परमेश्वरानादरस्य महानर्थहेतुत्वात् सर्वैरपि तच्छरणागतिपूर्वकं तदुपासनमवश्यमेव कर्तव्यमिति विज्ञापयितुमति- हिंसकत्वादिप्रतिपादनम्। 'अहमेव सर्वोत्तम' इति गर्वेण निजानादरकारिणां हन्ता हिंसकः। द्वेषनिन्दापूर्वकं तत्कारिणामतिशयेन हिंसको हनीयान्। तत्र हन्तृत्वस्योदाहरणं रावणः। एवं हि पुराणादिप्रसिद्धं भगवत्प्रसादासादित- बलैश्वर्यो हि रावणः, स किल तद्गर्वेण परमेश्वरमनादृत्य भगवन्निवासस्यापि कैलासस्योत्पिपाटयिषया विंशतिसंख्याकान् स्वभुजानयः प्रसारयन् भगवदङ्गुष्ठा-

प्रमाणान्यपरिस्पन्दनिपीडितः तावन्मात्रेणैव क्षीणबलः कैलासशैलाधो दृढं संमर्दितोऽतिव्यथया चिरमाचुक्रोश; पुनश्च भगवतैव करुणया समुद्धृत इति। हनीयस्त्वोदाहरणं दक्षः। स किल भगवद्द्वेषनिन्दारूपितो यष्टुमारेभे। तत्पुत्री दाक्षायणी सती भगवद्विमुखपितृजन्यत्वेन स्वशरीरं योगाग्निना प्रजज्वाल, तं भगवदाज्ञया वीरभद्रोऽनुदुद्राव। ततो दक्षस्य शिरश्छेदः, यज्ञशालायाः दहनं, कुण्डेषु मूत्रकरणम्, अग्नीनां विनाशनम्, यूपानुत्पाट्य तैरखिलदेवताप्रहारः, ऋत्विजां कशाघातः, भृगोः श्मश्रुलुञ्चनम्, पूष्णो दन्तभङ्गः, भगस्य नेत्रोत्पाटनम्, अहो महती हिंसा कृता, न हि तेषां तदा कश्चित्त्राता बभूव, अतो महानर्थकरः परमेश्वरानादर इति। अतस्तद्वैमुख्यं परिहृत्य तदुपासनमवश्यं कार्यम्। तथा-'**लेलिह्यसे ग्रसमानान् समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।**' (गी. ११। ३०) इति गीतासु भगवतो लोकहिंसकत्ववत्, इदमपि हिंसकत्वादिकं क्षुद्रदेवविशेषत्वसाधकं परमेश्वरत्वसाधकमेव पर्यवसीयते। यत्तु गजचर्मपरिधायकत्वपर्वतनिवासवनविचरणशीलत्वादिकमनैश्वर्ययोगात् परमेश्वरत्वमपहरतीति, तन्न सम्यक्, परमेश्वरस्य हि चर्मपरिधानं न वस्त्रालाभप्रयुक्तम्। महेन्द्रादिनिखिलैश्वर्यप्रदे प्रणीतनवनिधिकुबेरानुचरवति भगवति तदलाभोक्तेः परिहासास्पदत्वात्। किन्तु निजानन्दपरिपूर्णत्वप्रयुक्तविषयवैतृष्ण्यं प्रकटयितुं विषयलम्पटजनादरणीयदिव्याम्बरस्थाने चर्माम्बरधारणम्। तदेतत् श्रीमद्भागवते प्रतिपादितम्–'**हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मारतस्याविदुषः समीहितम्। यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलाल्यते॥**' (३। १४। २७) इति स्वात्मारतस्य स्वात्मारामस्य भगवतः समीहितं=विषयवैतृष्ण्यस्फुटीकरणाभिप्रायं, अविदुषः=अविद्यावशोऽज्ञानाना देहात्मवादिनो दुर्भगाः=अभाग्याः दुष्टभगजन्याः

संकरयोनिजाता इति यावत्। ते परमेश्वरं चर्माम्बरकपालभस्माङ्गरागादिपरीतं हसन्तीति। यद्वा अविदुषः—न विद्यते विद्वान् यस्मादिति तस्य सर्वज्ञस्येत्यर्थः। भगवतो विशेषणमिदं, स्वात्मतत्त्वस्येतिपाठान्तरम्। स्वभोजनमिदं शरीरमिति श्लोकार्थः। यदाहुः—शिष्टा अपि—'वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात्परं, नास्तीति प्रविशन्तमन्तविधुरं श्रीकाशिकेशं शिवम्।' (रत्नप्रभाकारः) महिम्नस्तवेऽप्युक्तम्—'महोक्षः खट्वाङ्गम्' इत्यादिना—'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इत्यन्तेन। तथा च स्वात्मारामस्य रुद्रस्य सर्वविषयतृष्णोपशान्तिसूचकं कृतिपरिधानम्, पर्वतनिवासशीलत्वं तस्य योगीश्वरत्वज्ञापकम्, वनविहरणशीलत्वञ्च निर्द्वन्द्वत्वबोधकञ्च प्रत्येतव्यम्। एवं पिनाकधारणं तस्य प्रपञ्चरक्षणदीक्षितत्वसूचकम्। 'पिनाकादयश्च' इति पारक्षणे धातोः आकप्रत्ययस्य ह्रस्वस्य नुमागमस्य च प्रतिपादनेन पातृत्वावगमात्। अत एव वेदभाष्यकाराः श्रीमन्तः सायणाचार्या अपि 'रुद्रस्य=परमेश्वरस्य' ( ऋ. ६ । २८ । ७ ) 'जगत्स्रष्टा सर्वं जगदनुप्रविष्टः रुद्रः' ( अथर्व–७ । ९२ । १ ) 'रुद्रः—परमेश्वरः' ( अथर्व. ११ । २ । ३ ) इत्यादिना व्याख्यानेन रुद्रशब्दार्थं परमेश्वरमेव स्पष्टं प्रदर्शयन्ति।

अपि च यजुर्वेदीयरुद्राध्यायः किल 'दिशां च पतये नमो नमः' 'पशूनां पतये नमो नमः' (शु. य. १६ । १७) इत्यादिना प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनपूर्वकं 'जगतां पतये नमो नमः' ( शु. य. १६ । १८ ) इति रुद्रस्य भगवतः सर्वजगदीश्वरत्वम्, 'इषुमद्भ्यो धन्वायिभ्यश्च' ( शु. य. १६ । २२ ) इत्यादिनैकैकप्राण्यात्मकत्वप्रदर्शनपूर्वकं 'विश्वरूपेभ्यश्च' ( शु. य. १६ । २५ ) इति सर्वविश्वात्मकत्वञ्चोपपादयति। एवं 'नमः सोभ्याय च प्रतिसर्याय च' ( शु. य. १६ ।

३३ ) इत्यादिना विस्तरतः सर्वचराचरान्तर्यामित्वमपि । तथा च यथा 'आकाशस्तल्लिङ्गात्' ( ब्र. सू. १ । १ । २२ ) 'अन्तस्तद्धर्मोपदेशात्' ( ब्र. सू. १ । १ । २० ) इत्यादिब्रह्ममीमांसाधिकरणेषु 'अस्य लोकस्य का गतिरिति? आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छां. उ. १ । ९ । १ ) 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' ( छां. उ. १ । ६ । ६ ) इत्यादिश्रुतीनां सर्वभूतकारणत्वसर्वात्मकत्वादिलिङ्गबलात् परब्रह्मपरत्वं व्यवस्थापितम् । तथाऽत्रापि सर्वेश्वरत्वसर्वात्मकत्वसर्वान्तर्यामित्वादिलिङ्गबलाद्रुद्राध्यायस्यापि परब्रह्मपरत्वमाश्रयितव्यम् । नह्येतत्सर्वेश्वरत्वादिकं क्षुद्रदेवविशेषस्य विद्युदग्न्यादिमात्रस्य च सम्भवति । एवं 'यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश' ( अथर्व. ७ । ९२ । १ ) 'भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ' ( ऋ. ६ । ४९ । १० ) इत्यादिकमपि मन्त्रजातं स्पष्टतरं रुद्रस्य परमेश्वरत्वं बोधयति । तस्माद्विदेशीयानां तत्पुच्छलग्नानामेतद्देशीयानामपि केषाञ्चिदधीताङ्ग्लविद्यानाञ्च रुद्रशब्दार्थविषये नितान्तं मौढ्यमेव विनिश्चीयते इत्यलम् ।

## ( ३२ )

### (सर्वाभीष्टसिद्धये कल्याणस्वरूपाय भगवते शङ्कराय भूयो भूयो नमस्कारः कर्तव्यः)

सप्रणयनामस्मृतिमात्रसाध्यसान्निध्यो हि भगवान् । यस्य खलु नामानि 'परमशर्मसुधाधारासारवर्षीणि विविधसन्तापदावदाहोपशमविधातॄणि सर्वपुरुषार्थ-

प्रदानि च, स पुनः स्वयं कीदृश ? इति तद्दर्शनमुद्दिश्य भक्त्युद्रेकेण नामरसिको मन्त्रद्रष्टा ऋषिस्तानि जपन् '**भूयिष्ठां ते नम उक्तिं विधेम**' ( शु. य. ४० । १८ ) इति मन्त्रवर्णात् पौनःपुन्येन तस्मै उपास्यदेवाय नमस्कारान् वितनोति—

**ॐ नमः शम्भवाय, च मयोभवाय च,**
**नमः शङ्कराय च, मयस्कराय च,**
**नमः शिवाय च शिवतराय च ॥**

( शु. य. १६ । ४१ । )

शम्भवाय नम =शं मोक्षसुखं भवति यस्मात्सोऽसौ शम्भवस्तस्मै मोक्षसुखहेतवे नमः । यद्वा शं=सुखरूपश्चासौ भवः=संसाररूपश्चेति शंभव —अखण्डानन्दकल्याणरूपश्च समस्तविश्वविग्रहश्च तस्मै नमोऽस्तु । मयोभवाय नमः= मय =ऐहलौकिकं पारलौकिकं संसारसुख भवति यस्मात्सोऽसौ मयोभव. तस्मै, स्रक्चन्दनवनिताद्यैहलौकिकसुधानन्दनवनाप्सरोविहारादिपारलौकिकभोगप्रदानेन संसारसुखहेतवे नमः । शङ्कराय नम =शं=सुखं पारमार्थिकं निरतिशयं निर्विषय—निरवधिकमनन्तं करोति प्रापयतीति शङ्करः तस्मै—ब्रह्मविद्योपदेशेनाविद्यानिवृत्तिद्वाराऽखण्डमोक्षसुखसम्पादकाय नमः । मयस्कराय नम =मयः=युगपत् सर्वविध सुखं करोतीति मयस्करः तस्मै सकलसुखप्रदाने नमः । अनेन निरतिशयानन्दमहाम्समुद्रे परमात्मनि ऐहिकामुष्मिकसकलसुखानामपि शीकरतयाऽन्तर्भावात् तदर्थिभिरपि सर्वैः तदाश्रयणमवश्यं कार्यमिति प्रदर्शितम् । अथेदा-

नीमखिलश्रेयःप्रदत्वेन परमेश्वरस्यैव जगदुपास्यत्वप्रदर्शकमशेषदोष–जालकूलं-कषं हरिब्रह्माद्युपासनीयं निखिलश्रुतिहारायमाणरुद्राध्यायनायकमणिं मन्त्रराजमाह–नमःशिवाय=शिवः कल्याणरूपः प्रपञ्चोपशमः प्रशान्तो निर्विकारो निष्पापः पूर्णाद्वैतानन्दनिधिः परमात्माः तस्मै नमः। यद्वा शिवशब्दः शोभनवचनः–‘श्वःश्रेयसं शिवं भद्रमि’ त्यमरकोशात्। शिवाः=शोभनाः सर्वज्ञत्वादयो गुणा अस्य सन्तीति शिवः। अर्शआदेराकृतिगणत्वान्मत्वर्थीयोऽच्प्रत्ययः। पुराणोक्ताः सर्वज्ञताद्यश्चाज्ञात्व्ययभेदेन द्विविधाः। तथा चोक्तम्–‘सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अचिन्त्यशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य ॥’ ( शिवपुराणे ) ‘ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥’ ( वायुपुराणे ) इति। यद्यपि परमशिवस्य निष्कलत्वाद्गुणा न संभवन्ति। ‘निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।’ ( श्वे. ६। १९) इति श्रुतेः, तथापि स्वाश्रितपराशक्तिप्रकल्पितान् सर्वज्ञत्वादीन् गुणानादाय तथा व्यपदेशो ज्ञातव्यः। यथोक्तं वायुसंहितायां–‘अथवाऽशेषकल्याणगुणैक-निधिरीश्वरः। शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥’ इति। यद्वा शेतेऽस्मिन् सर्वं कारणसहितं जगदिति शिवः सर्वाधारः स्वयं निराधार इत्यर्थः। ‘यस्मिन्निदं सं च विचैति विश्वं’ ‘तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति।’ ( श्वे. ४। ११ ) इति श्रुतेः। यद्वा वष्टि–अनवरतं कामयते सर्वलोकहितमिति शिवः। ‘वश कान्तौ’ इति धातोः पचाद्यचि पृषोदरादित्वात् वर्णव्यत्यये वकारस्येकारादेशे च शिव इति रूपं सिद्ध्यति। ‘हिंसि धातोः सिंहशब्दो वश

शिवःस्मृतः । वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा ॥ इत्य-भियुक्तोक्तेः, 'शिवमिच्छन्मनुष्याणां तेन देवः शिवः स्मृतः ।' इति भारतवचनात्, सकललोककल्याणकामुकः कृपासागरः शिव इत्यर्थः । माहा-त्म्यञ्चास्य शिवमन्त्रस्य श्रुतिस्मृतिप्रसिद्धम् । 'अपि वा यश्चाण्डालः शिव इति वाचं वदेत् तेन सह संवसेत् ।' इति श्रुतेः । 'महापातकविच्छि-त्त्यै, 'शिव, इत्यक्षरद्वयम् । अलं नमस्क्रियायुक्तो मुक्तये कल्पते मनुः ॥' इत्यादिस्मृतेश्च । शिवेतिनामदावाग्नेर्महापातकपर्वताः भस्मीभवन्त्यनायासात्सत्यं सत्यं न संशयः ॥ पापमूलानि दुःखानि विविधान्यपि शौनक ! । शिवनामैकनश्यानि नान्यनश्यानि सर्वथा ॥ स वैदिकः स पुण्यात्मा स धन्यः स बुधोत्तमः । शिवनामजपासक्तो यो नित्यं भुवि मानवः ॥ पातकानि विनश्यन्ति यावन्ति शिवना-मतः । भुवि तावन्ति पापानि क्रियन्ते न नरैर्मुने ! ॥ शिवनामामृतं पेयं पापदावानलार्दितैः । पापदावाग्नितप्तानां शान्तिस्तेन विना नहि ॥ शिवेतिनामपीयूषवर्षधारापरिप्लुताः । संसारदवमध्येऽपि न शोचन्ति कदाचन ॥ विलोक्य वेदानखिलाञ्छिवनामजपः परः । संसारतरणोपाय इति पूर्वं विनिश्चितम् ॥ अनेकजन्मभिर्येन तप-स्तप्तं मुनीश्वर ! । शिवनाम्नि भवेद्भक्तिः सर्वपापापहारिणी ॥ इत्यादि-पुराणवचनेभ्यश्चापि सकलाभ्युदयनिःश्रेयससमर्पणदीक्षितस्यास्य मन्त्रराजस्य 'शिव' इत्यक्षरद्वयस्य श्रीमत्पञ्चाक्षरस्य च सर्वातिशायिमहत्त्वमनितरसा-मान्यमवगम्यते । शिवतराय नमः—शिवतरः—अत्यन्तं शिवः—अतिशयेन कल्या-णरूपः, तस्मै नमः—यो हि भगवान् स्वं भजमानान् स्वशरणागतान् भक्तानपि निर्विकारत्वमृतकल्याणानन्दरूपान् विदधाति, तस्य शिवतरत्वे किमु वाच्यम् !

इति भावः । केचन शिवशब्दः—'तत्करोती' ति ण्यन्तात्पचाद्यचि निष्पन्नः शिवङ्करत्ववाची । तत्राथर्वशिखाश्रुतिः प्रमाणम्—'शिव एको ध्येयः शिवङ्करः' इति । अत्र हि शिवशब्दव्याख्यानार्थं शिवङ्करपदम् । ननु—इदं शिवङ्करत्वमन्यत्रापि दृश्यते—'पावकोऽस्मभ्यं शिवो भव' इति वेदे । लोकेऽपि दृश्यते—'पन्थानः सन्तु ते शिवाः' इति । तथाचान्यापेक्षया भगवतः को विशेषः ? इत्यतो विशिनष्टि—शिवतराय चेति । लोके वेदे च यावन्तः शिवंकराः पदार्थास्तदपेक्षयाऽप्ययमतिशयेन शिवंकरः शिवतरः, अत एव भगवानेवोपास्य इति व्याचक्षते ॥

## ( ३३ )

**( चराचरविश्वप्रपञ्चस्य सृष्टिं स्थितिं प्रलयञ्च कुर्वतः सर्वप्रविष्टस्य सर्वात्मनः पूर्णाद्वैतस्य परमात्मनो वर्णनम् )**

महैकोद्भवत्व–महैकस्थितिकत्व–महैकप्रविष्टत्व–महैकप्रलयत्व–महैकसत्सामान्यप्रतीतिविषयत्व–सार्वात्म्यादिभिर्हेतुभिर्ब्रह्मात्मनः सर्वाद्वैतस्वरूपं भगवान् वेदो निरूपयन्नाह—

**ॐ य इमा विश्वा भुवनानि**
**जुह्वदृषिर्होता न्यसीदत्पिता नः ।**
**स आशिषा द्रविणमिच्छमानः**
**प्रथमच्छदवराꣳ आविवेश ॥**

( शु. य. १७ । १७ । ऋ. १० । ८१ । १ । तै. सं. ४ । ६ । २ । १ )

यः=प्रसिद्धः परमात्मा विश्वेश्वरो भगवान् इमा=इमानि, विश्वा=वि-

इमानि=सर्वाणि, भुवनानि=भूतजातानि, पृथिव्यादीनिमान् सप्तलोकान् वा, जुह्वत्='अग्न्याहुतिप्रक्षेपवत्' स्वात्मनि संहरन् सन्, न्यसीदत्=निषसाद—स्वयं स्थितवान्। कीदृशोऽसौ, ऋषिः=साक्षात्कृतधर्मा—अतीन्द्रियद्रष्टा—सर्वज्ञ इत्यर्थः। होता=संसारसंहाररूपस्य होमस्य कर्ता। नः=अस्माकं प्राणधारिणां पिता=जनकः सत्तास्फूर्तिप्रदानेन पाता वा। प्रलयसमये स्वेन सृष्टं विधारितं रक्षितञ्च चराचरं सर्वं विश्वं संहृत्य परमेश्वरः स्वयमेक एवासीदिति भावः। तथा श्रुवते चोपनिषदः—'**आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्।**' (ऐ. १।१) '**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।**' (छां. ६।२।१) इत्याद्याः। सः=तादृशः परमेश्वरः आशिषा='बहु स्यां प्रजायेय' (तै. २।६) इत्येवं रूपेण पुनःसिसृक्षात्मकणाभिलापेण द्रविणं=धनोपलक्षितं जगद्भोगं इच्छमानः=आकांक्षमाणः—जगद्रूपं धनमपेक्षमाण इति यावत्। इच्छमान इतीयेशमनेपदमार्षम्। तथा च स्वभोगाय जगत्सर्जनेच्छां कृत्वा तत्सृष्टवानिति भावः। इत्थं मदीकअन्यत्वनदैकस्थितिकर्तृत्वैकोद्देश्यानि—सर्गादिसाधकानि छिद्राणि प्रविधाय मैसेकप्रविष्टत्वादिकं प्रतिपादयति—प्रथमच्छत्=प्रथमं—मुख्यं निष्प्रपञ्चं—पारमार्थिकमेकमेवाद्वितीयं स्वरूपं मायया छादयति—आवृणोतीति 'छादयतेः क्विपि छदः' उच्छृत्य—वास्तविकं स्वरूपमावृण्वन् सन् अवरान्=निकृष्टान्—स्वगृहान् देहेन्द्रियहृदयादिप्रदेशान्—अभिव्यक्त्युपाधिभूतान् आविवेश=जीवात्मरूपेण प्रविष्टवान्। यद्वा सत्त्वेन चित्त्वेन प्रियत्वेन चावरान्—घटपटादीन् अनात्मपदार्थसार्थानपि आविवेश इति। यथाहुः चोपनिषद्वचः—'**सोऽकामयत बहु स्यां प्रजायेय, स तपोऽतप्यत, स तपस्तप्त्वा इदꣳ सर्वमसृजत, यदिदं किञ्च, तत्सृष्ट्वा तदेवानुप्राविशत्।**' (तै. २।६) '**एको देवो**

बहुधा सन्निविष्टः ।' (तै. आ. ३ । १४) 'एकः सन् बहुधा विचारः F' (तै. आ. ३ । ११) 'त्वमेकोऽसि बहूननुप्रविष्टः ।' इत्यादिकाः । इदमत्राकूतम्—सतो जातत्वात्, सति स्थितत्वात् तस्मिन्नेवोपसंहृतत्वाच्च सर्वं विश्वं ब्रह्मात्मना सदेव, अत एव न हि तत्र सद्व्यतिरिक्तं वास्तविकं किञ्चिदुपलभ्यते, सर्वस्याकाशादिप्रपञ्चस्य 'घटः सन् पटः सन्' इत्येवं सदनुविद्धत्वेन प्रतीयमानत्वात् । सद्रूपब्रह्मात्मा सत एव तत्त्वेन देहादौ प्रविष्टत्वात् 'अहमस्मी'ति सर्वदा सर्वस्य सत्त्वेन भासमानत्वाच्चेति सिद्धं पूर्णं सर्वाद्वैतम् । ननु—एवं सर्वं सद्ब्रह्माभिन्नमद्वैतमिति ते निर्णयश्चेत्तर्हि ब्रूहि मम हृदि किमस्ति ? तव मम चाभेदादिति चेत्, ब्रूयां यद्यवच्छेदोपाधिभेदो न भवेत् । तर्हि किमवच्छेदभेदमङ्गीकरोषि ? कृतं तर्हि सद्ब्रह्माभेदनिर्णयेनेति चेन्नैवम्; अविद्याविजृम्भितावच्छेदभेदाङ्गीकारेण साकं पारमार्थिकावच्छेद्यसद्ब्रह्माभेदनिर्णयस्य विरोधाभावात् विषमसत्ताकयोर्भेदाभेदयोरविरोधस्य दृष्टत्वात्, एकस्मिन्नेव सति सर्वाभिन्ने 'द्वौ चन्द्रावित्यत्रे'वाविद्यकभेदप्रतीत्युपपत्तेः । न चैवं घटादीनामपि वस्तुतः सद्ब्रह्माभिन्नत्वात् तज्ज्ञानमपि ब्रह्मज्ञानमित्यनायाससिद्धेन तेनापि मोक्षप्रसङ्ग इति वाच्यम् । घटादीनामध्यस्तानां यदधिष्ठानं 'रजतादेरिव शुक्त्यादि' तज्ज्ञानस्यानन्यानुपरक्तब्रह्मचैतन्यविषयस्य मोक्षहेतुत्वाभ्युपगमात्, घटाद्याकारज्ञानस्य चाविद्यापरिकल्पितान्योपरक्तचैतन्यविषयत्वात् न तेन मोक्षप्रसङ्गः । ननु—भिन्नानामपि पदार्थानां सत्ताजातियोगेन सदाकारबुद्धिविषयत्वसम्भवात्, न सर्वस्य सन्मात्रत्वसिद्धिः अन्यथा द्रव्यगुणकर्मादिभेदव्यवहारः कथं स्यात् ? इति चेन्नैवम्; अभावादिसाधारणसत्प्रतीतौ सत्यां सत्ताजातियोगस्यासम्भवात्, न च स्वरूपसत्त्वेनाभावादौ तत्प्रतीतिरिति वाच्यम् । अननुगतेन तेनानुगतप्रतीत्यसम्भवात्, एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ भूयसां स्वरूपसत्त्वानां

---

F. विचारः=विविधविचरणवान्—व्यवहारवान्, भवतीत्यर्थः ।

तद्धेतुकल्पने मानाभावात्, तस्मादेकं सर्वाधिष्ठानमेव सदिति सर्वत्रानुभूयते इति युक्तम्। भेदव्यवहारस्तु भ्रान्त्या संभविष्यति। अनुगते सन्मात्रेऽननुगतानां द्रव्यादीनां 'रज्ज्वा इदमंशेऽनुगते सर्पमालादिकमननुगतमिव' कल्पितत्वनिश्चयात्, सर्वस्य बाधसामानाधिकरण्येन सन्मात्रत्वसिद्धौ नास्ति काऽप्यनुपपत्ति, तस्माच्चेतन सचेतन वा किञ्चिदपि सदात्मनोभिन्नमुपपद्यते, इत्येव पूर्ण सर्वाद्वैतं विनिश्चिय भो! मुमुक्षो! सखे! मा किञ्चित्त्यज मा च किञ्चिद् गृहाण किन्तु यथाऽवस्थितस्तथा स्वस्थः शान्तः समरसो भवेत्यलं पल्लवितेनेति।

## ( ३४ )

### ( आक्षेपसमाधानाभ्यामचिन्त्यप्रभावशालिनो भगवतो निरूपणम् )

विचित्रनानाशक्तिमायावशेन सर्वस्याचिन्त्यस्वभावस्य विश्वस्य निर्मातरि सर्वतर्कागोचरे शास्त्रशुद्धश्रद्धैकसमधिगम्ये भगवति केचित् हसन्तीमे शुष्कतर्कानाश्रित्याक्षेपा वितन्यन्तेताननुवदन्नाह—

ॐ किᳯ स्विदासीदधिष्ठानमारम्भणं
कतमत्स्वित्कथासीत्।
यतो भूमिं जनयन् विश्वकर्मा
वि द्यामौर्णोन्महिना विश्वचक्षाः॥

( शु य १७। १८। ऋ १०। ८१। २। तै स ४। ६। २। ४ )

किं स्वित्=स्विदिति—वितर्के, यथा लोके घटादिचिकीर्षु कुलालो गृहादिकं किञ्चित् स्थानमधिष्ठाय व्याप्रियमाणेन स्वशरीरेण चक्रभ्रमणादिचेष्टया

सलिलसूत्रदण्डाद्युपायेन चक्रादावाधारे मृदमुपादानभूतामादाय घटादि निष्पादयति, तथा विश्वनिर्माता परमेश्वरोऽपि वाच्यः,दृष्टानुसारित्वाददृष्टकल्पनाया इति न्यायात्। द्यावाभूम्युपलक्षितं सर्वं विश्वं सृजतो विश्वकर्मणो विश्वेश्वरस्य तत्सर्जनवेलायां किंस्विदासीदधिष्ठानं=अधितिष्ठत्यस्मिन्नित्यधिष्ठानं—निवासस्थानं किमासीत्, किंशब्द आक्षेपे न किञ्चिदित्यर्थः। अचेतनाः कुलालादिकर्तारो निरधिष्ठानाः किमपि कार्यं कर्तुं न शक्नुवन्ति, तथाऽधिष्ठानरहितः परमेश्वरो जगत्कार्यं कर्तुं कथं शक्नुयात्? इत्याक्षेपस्वरूपम्। तथा कतमत्स्वित्, आरम्भणं=आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं प्रकृतिद्रव्यं 'मृदिव घटानां' कतमत्—न किमपि स्वात्मभिन्नमासीत्, तदभावे कथमुपादेयं कार्यं भवेदित्याशयः। कथा=कथंभूता क्रिया च किंप्रकाराऽऽसीत्—निमित्तकारणमपि किमासीत् न किमप्यासीदित्यर्थः। 'था हेतौ च छन्दसि' इति किमः था प्रत्ययः, दण्डचक्रसलिलसूत्रादिभिर्निमित्तकारणैर्घटादयो निष्पद्यन्ते तत्स्थानीयं किमासीत्? इति यावत्। कृतार्क्षेपस्येदमत्र तात्पर्यं आस्तिकः खलु 'भूम्यादिकं सकर्तृकं कार्यत्वात्, घटादिवत्' इत्यनुमानमवष्टभ्य घटादिदृष्टान्तेन हि भूम्यादेः सकर्तृकत्वं साधयति, तथा च घटादिकर्तरि कर्तृत्वौपयिकं यावद् दृष्टं तावद् भूम्यादिकर्तर्यप्यस्यमङ्गीकर्तव्यम्। यादृक् दृश्यते तादृक् कल्प्यते, दार्ष्टान्तिकस्य दृष्टान्ततुल्यत्वात्, एवं सति चोभयतः पाशा रज्जुः, तदङ्गीकारेऽस्मदादितुल्यत्वादनीश्वरत्वं, तदनङ्गीकारे च कर्तृत्वानुपपत्त्या तदसिद्धिरिति। यद्वा यद्यपि तदानीं प्रकृतिद्रव्यमारम्भणं नासीत्, तथापि संभवेत् यत्किमपि तदङ्गीकृत्याक्षिप्यते तत् कथासीत्=कथमभूत्? किं तत्सदासीत्? वा असदासीत्? उभयमपि नोपपद्यते। सच्चेदद्वैतभङ्गप्रसङ्गः, असच्चेत् द्यावापृथिव्याद्युपलक्षितस्य सदात्मकस्य जगत उपादानानर्हत्वात्, न ह्यसतः सज्जायते? अदृष्टत्वात्, तथा

तद्धेतुकल्पने मानाभावात्, तस्मादेकं सर्वाधिष्ठानमेव सदिति सर्वत्रानुभूयते इति युक्तम्। भेदव्यवहारस्तु भ्रान्त्या संभविष्यति। अनुगते सन्मात्रेऽननुगतानां द्रव्यादीनां 'रज्ज्वा इदमंशेऽनुगते सर्पमालादिकमननुगतमिव' कल्पितत्वनिश्चयात्, सर्वस्य बाधसामानाधिकरण्येन सन्मात्रत्वसिद्धौ नास्ति काऽप्यनुपपत्तिः, तस्मादचेतनं सचेतनं वा किञ्चिदपि सदात्मनोऽभिन्नमुपपद्यते, इत्येवं पूर्णं सर्वाद्वैतं विनिश्चित्य भो! मुमुक्षो! सखे! मा किञ्चित्त्यज मा च किञ्चिद् गृहाण किन्तु यथाऽवस्थितस्तथा स्वस्थः शान्तः समरसो भवेत्यलं पल्लवितेनेति।

## ( ३४ )

### ( आक्षेपसमाधानाभ्यामचिन्त्यप्रभावशालिनो भगवतो निरूपणम् )

विचित्रनानाशक्तिमायावशेन सर्वस्याचिन्त्यस्वभावस्य विश्वस्य निर्मातरि सर्वतर्कागोचरे शास्त्रादृष्टैकसमधिगम्ये भगवति केचित् हतधीभिः शुष्कतर्कानाश्रित्याक्षेपा वितन्यन्तेताननुवदन्नाह—

ॐ किᳬ स्विदासीदधिष्ठानमारम्भणं
कतमत्स्वित्कथासीत्।
यतो भूमिं जनयन् विश्वकर्मा
वि द्यामौर्णोन्महिना विश्वचक्षाः॥

( शु. य. १७। १८। ऋ. १०। ८१। २। तै. सं. ४। ६। २। ४ )

किं स्वित्=स्विदिति–वितर्के, यथा लोके घटादिचिकीर्षुः कुलालो गृहादिकं किञ्चित् स्थानमधिष्ठाय व्याप्रियमाणेन स्वशरीरेण चक्रभ्रमणादिचेष्टया

सलिलसूत्रदण्डाद्युपायेन चक्रादाधारे मृदमुपादानभूतामादाय घटादि निष्पादयति, तथा विश्वनिर्माता परमेश्वरोऽपि वाच्यः,दृष्टानुसारित्वाददृष्टकल्पनाया इति न्यायात् । द्यावाभूम्युपलक्षितं सर्वं विश्वं सृजतो विश्वकर्मणो विश्वेश्वरस्य तत्सर्जनवेलायां किंस्विदासीदधिष्ठानं=अधितिष्ठत्यस्मिन्नित्यधिष्ठानं–निवासस्थानं किमासीत्, किंशब्द आक्षेपे न किञ्चिदित्यर्थः । अद्यतनाः कुलालादिकर्तारो निरधिष्ठानाः किमपि कार्यं कर्तुं न शक्नुवन्ति, तथाऽधिष्ठानरहितः परमेश्वरो जगत्कार्यं कर्तुं कथं शक्नुयात् ? इत्याक्षेपस्वरूपम् । तथा कतमस्स्वित्, आरम्भणं=आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं प्रकृतिद्रव्यं 'मृदिव घटानां' कतमत्–न किमपि स्वात्मभिन्नमासीत्, तदभावे कथमुपादेयं कार्यं भवेदित्याशयः । कथा=कथंभूता क्रिया च किंप्रकाराऽऽसीत्–निमित्तकारणमपि किमासीत् न किमप्यासीदित्यर्थः । 'था हेतौ च छन्दसि' इति किमः था प्रत्ययः, दण्डचक्रसलिलसूत्रादिभिर्निमित्तकारणैर्घटादयो निष्पद्यन्ते तत्स्थानीयं किमासीत् ? इति यावत् । कुतर्काक्षेपस्येदमत्र तात्पर्यं आस्तिकः खलु 'भूम्यादिकं सकर्तृकं कार्यत्वात्, घटादिवत्' इत्यनुमानमवष्टभ्य घटादिदृष्टान्तेन हि भूम्यादेः सकर्तृकत्वं साधयति, तथा च घटादिकर्तरि कर्तृत्वौपयिकं यावद् दृष्टं तावद् भूम्यादिकर्तर्यप्यवश्यमङ्गीकर्तव्यम् । यादृक् दृश्यते तादृक् कल्प्यते, दार्ष्टान्तिकस्य दृष्टान्ततुल्यत्वात्, एवं सति चोभयतः पाशा रज्जुः, तदङ्गीकारेऽस्मदादितुल्यत्वादनीश्वरत्वं, तदनङ्गीकारे च कर्तृत्वानुपपत्त्या तदसिद्धिरिति । यद्वा यद्यपि तदानीं प्रकृतिद्रव्यमारम्भणं नासीत्, तथापि संभवेत् यत्किमपि तदङ्गीकृत्याक्षिप्यते तत् कथासीत्=कथमभूत् ? किं तत्सदासीत् ? वा असदासीत् ? उभयमपि नोपपद्यते. सच्चेदद्वैतभङ्गप्रसङ्गः, असच्चेत् द्यावापृथिव्याद्युपलक्षितस्य सदात्मकस्य जगत उपादानानर्हत्वात्, न ह्यसतः सञ्जायते ? अदृष्टत्वात्, तथा

च निरूप्यमाणं तदपि न सिद्ध्यतीतिभावः। आक्षेपसमाधानं सिद्धान्तं वदन् परमेश्वरं विशिनष्टि—विश्वकर्मा=विश्वसर्जनाद्यात्मकं कर्म विद्यते यस्य सः, यद्वा विश्वं कर्म=कार्यं यस्य कारणभूतस्य सोऽसौ विश्वकर्मा। स कीदृशः ? विश्वचक्षाः—विश्वं चष्टे—अपरोक्षतया पश्यति स विश्वचक्षाः—सर्वद्रष्टा—अतीतानागतवर्तमानकालदेशवर्तिसर्वपदार्थानां युगपद् द्रष्टा विलक्षणाचिन्त्यशक्तिरित्यर्थः। यतः=यदा—यस्मिन् काले इत्यर्थः। भूमिं=पृथिवीं, द्यां=स्वर्गं, तदुपलक्षितं निखिलं जगत्, महिना=महिम्ना—साधनानन्तरं विनैवानुपमेयाऽतिशयैश्वर्यनिरवधिकस्वसामर्थ्येनेति यावत्, जनयन्=उत्पादयन् सन्, वि+और्णोत्=आच्छादितवान् स्वेनात्मनेति शेषः। अचिन्त्यशक्त्याऽघटघटनापटीयस्या जगत्स्रष्टरि भगवति कथं कुतर्काक्षेपसम्भवः। तथाचोक्तं वार्तिककृद्भिः—'अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्।' 'नामतिष्ठिततर्केण गंभीरार्थस्य निर्णयः।' इति। 'प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्।' इति च (वायुपुराणे)। तथा च घटादिकर्तरि यावद् दृष्टं, तावत् भूम्यादिकर्तर्यपि साधनीयं, व्याप्तिमन्तरेण सामानाधिकरण्यमात्रस्यासाधकत्वात्, अन्यथा महानसे धूमवह्न्योर्व्याप्तिग्रहणसमये एव व्यजनादिमत्त्वमपि दृष्टमिति पर्वतादावपि तदनुमानं स्यात्, तस्मात्साधर्म्यसमा जातिरेषा, यदि कर्तृत्वेन हेतुना कुलालादिसदृशः स्यात्परमेश्वरः तदाऽचिन्त्याद्भुतशक्तिमत्त्वेन 'ऐन्द्रजालिकादिवत्' असौ तद्विलक्षणः कथं न स्यात् ? न चात्र किञ्चिद्विनिगमकमस्तीति, स्वपक्षव्याघातकत्वादनुत्तरमिति। एवं निखिलजगदुपादानकारणमपि परमेश्वर एव, उपादानत्वञ्च तस्य जगदाकारेण विपरिणममानमायाधिष्ठानत्वात्मकम्, एतादृशमेवोपादानत्वमभिप्रेत्य 'वि और्णोत् महिना' इत्येतेन जगत्परमेश्वरयोः आच्छादयित्राच्छादनीयात्मकं तादात्म्यमुपदिष्टम्। यत्रैतानि समाम्नातानि भवन्ति-

श्रुत्यन्तराण्यपि—'तदात्मानं स्वयमकुरुत' ( तै० २ । ७) 'बहु स्यां प्रजायेय' (तै० २ । ६) 'सच्च त्यच्चाभवत्' (तै० २ । ६) 'इदं सर्वं यदयमात्मा' (बृ. २ । ४ । ६) इत्यादीनि । यदाहुर्भगवन्तो-गौडपादाचार्याः—'कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया । स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥' ( माण्डू. का. वैत. प्र. १२ ) इति । तस्मात्परमेश्वरस्य कुलालादिविलक्षणस्य तद्विष्ठानाद्यभावेऽपि स्वाश्रितया स्वविषययाऽचिन्त्यप्रभावया मायाशक्त्या स्वात्मन्येव जगदुत्पादयतो विश्वकर्मत्वं सम्भवत्येवेति सर्वमनवद्यम् ।

## ( ३५ )

### ( सर्वात्मनो विश्वरूपस्य विश्वजनकस्य देवस्य शङ्कासमाधानाभ्यां वर्णनम् )

ननु—एवमप्युत्तममध्यमाधमसुखदुःखभेदवद्देवमनुजपश्वादिरूपां सचेतनां, सुखदुःखकारणक्षुधाविषादिलक्षणामचेतनाश्चानेकविधां विषमां सृष्टिं निर्मिमाणस्य परमेश्वरस्य पृथग्जनस्येव रागद्वेषादिमत्त्वं, दुःखयोगविधानात् सर्वप्रजासंहाराच्च तस्य निर्घृणत्वञ्च प्रसज्येत, निगमागमावधारितस्वच्छत्वदयालुत्वादीश्वरस्वभावश्च विलुप्येत इत्याशंक्याह—

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥

( शु. य. १७ । १९ ) ( ऋ. १० । ८१ । ३ । अथर्व० १३ । २ । २६ )
( तै. सं. ४ । ६ । २४ । तै. आ. १० । १ । ३ )

एकः=अद्वितीयः—पारमार्थिकद्वितीयसहायशून्यः, देवः=स्वप्रकाशेन द्योतमानः, स्वेनैव स्वस्मिन् लीलया रममाणो वा विश्वेश्वरो भगवान् द्यावाभूमी=ब्रह्माण्डस्य कपालद्वयं द्यावाभूमीशब्दवाच्यं, तदुपलक्षितं सर्वं विश्वं जनयन् सन् बाहुभ्यां=बाहुस्थानीयाभ्यां धर्माधर्माभ्यां *निमित्ताभ्यां, संपतत्रैः=सम्यक् पतनशीलैः—विविधाकारेण परिणममानैरनित्यैः पञ्चभूतैः* सं धमति=संगच्छते, संयोगं प्राप्नोति, धमत्यत्र गत्यर्थः, लोकप्रसिद्धसाधनान्तरं विनैव सर्वं सृजतीति यावत् । यद्वा धर्माधर्माभ्यां स्वसृष्टैः पञ्चभूतैः शरीरादिना परिणतैः संधमति=जीवान् संगमयति—संयोजयति इत्यर्थः । अन्तर्गर्भितणिजन्तोऽयम् । यद्यपि धमतिरग्निसंयोगार्थस्तथापि सन्तापकारित्वेन विश्वस्योपत्तौ स्थितौ संहारे च सुखदुःखकारित्वं व्याख्येयम् । अयम्भावः—यदि सर्वथा निरपेक्षो भगवान् सृष्टिं निर्मिमीत, तदा तु तस्य रागद्वेषादिमत्त्वमतिक्रूरत्वञ्च प्रसज्येयाताम् । परन्तु दृश्यमानप्राणिधर्माधर्मावपेक्ष्य विषमां सृष्टिं निर्मिमाणस्य कथं रागद्वेषादिमत्त्वं-क्रूरत्वञ्च स्याताम् । यथा भूपालो राजा सदाचारिणं साधुं सत्कुर्वन् दुराचारिणं दुष्टञ्च दण्डयन्, यथा वा सभापतिः युक्तवादिनमनुगृह्णन् अयुक्तवादिनञ्च निगृह्णन् न ह्यनुरक्तो द्विष्टो वा भवति, अपि तु वीतरागद्वेषो मध्यस्थो न्यायकारी च विचारशीलैराख्यायते, तद्वज्जगदीश्वरः पुण्यकर्माणमनुगृह्णन् पापकर्माणञ्च निगृह्णन् सुखदुःखाभ्यां च तौ संयोजयन् न रागद्वेषादिमान् भवति । यथाहि जलं विविधपत्रपुष्पफलादिसृष्टौ साधारणं कारणमस्ति, तद्वैषम्ये तु तत्तद्बीजगतान्येव

---

*धर्माधर्मौ हि लोकयात्रावहनात् बाहू । *भूतानां हि गतिशीलत्वात् पतत्रस्पन्देः पतन्तीति ।

सामर्थ्यान्यसाधारणकारणानि सन्ति । तद्वत् परमेश्वरः चराचरविश्वसृष्टौ साधारणं कारणं भवति, तद्वैषम्ये ■ तत्तज्जीवगतान्येव शुभाशुभकर्माण्यसाधारणकारणानि भवन्ति, तस्मात् धर्माधर्मविशेषापेक्षे परमेश्वरे न वैषम्यनैर्घृण्यप्रसक्तिलेशोऽपि संभवति। एवमाह हि श्रुत्यन्तरमपि–'**पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन**' (बृ. ३ । २ । १३ ) इति । स्मृतिरपि तत्तज्जीवकर्मविशेषापेक्षमेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वञ्चाह–'**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्** ।' (गी. ४ । ११ ) इत्येवंरूपा। एव शङ्कासमाधानं 'बाहुभ्यामि' त्यनेन कृत्वा विश्वनिर्माता स कीदृश, ? इत्यत आह–विश्वतश्चक्षुः= विश्वतः–सर्वतः चक्षूंषि यस्य स । विश्वतोमुख =विश्वतो मुखानि आननानि यस्य स । यद्वा विश्वत =सर्वत्र –सर्वासु–दिक्षु मुखानि विषयोपलब्धिद्वाराणि श्रोत्रादीनीन्द्रियाणि यस्य सोऽसौ विश्वतोमुखः। विश्वतोबाहुः=विश्वतो बाहवो भुजा यस्य स'। उत=अपि च विश्वत पादा यस्य सः । 'पादस्य लोपोऽहस्त्यादिभ्य' इति पादशब्दस्यान्त्यलोप । ब्रह्माण्डदेहस्य विराड्मूर्तेः परमेश्वरस्य सर्वप्राणिदेहात्मकत्वात् तत्तल्लोकनिवासिना सर्वेषामाब्रह्मस्तम्बपर्यन्तानां प्राणिनां तत्र तत्रावस्थितानि यानि कानिचिच्चक्षुरादीनीन्द्रियाण्य यद्वा प्राणादिकं यत्किञ्चित्तदपि सर्वं तदुपाधिकस्य विश्वरूपस्य परमेश्वरस्यैवावगन्तव्यम् । तत एवासङ्गोदासीनस्य निर्लेपस्यापि पुंसः परमेश्वरस्य मायोपाधिसवलितत्वेन सर्वतो विद्यमानानि चक्षुरादीनि तदीयत्वेन व्यवह्रियन्ते । तथा चैवं विधो भगवान् स्वमहिम्ना स्वस्मिन् सर्वं विचित्र विश्व सृजन् तदधिष्ठानत्वेन तिष्ठन्नपि विश्वात्मना प्रतीतो भवतीति भाव । अत्र प्रथमेन विशेषणेन सर्वज्ञत्व मन्यते, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन सर्ववेदादिवक्तृत्वं, मुखेन वागुपलक्षणात् । तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात्। चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात् । इति विवेकोऽप्यत्रधेयः । यद्वा बाहुभ्यां=विद्याकर्मभ्यां पतत्रै.=

वासनारूपैः तत्र तत्र गमनप्रयोजकैश्च संधमति=दीपयति जीवनिष्ठविद्याकर्मवासनादिभिरीश्वरो जगत्प्रवर्तयतीत्यर्थः। '**तमेतं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च।**' इति श्रुतेः। दिवं=स्वर्गं लोकं सत्कर्मणा धर्मेण जनयन् भूमिं=मनुष्यलोकं मिश्रकर्मणा जनयन् भूमिप्रदेशविशेषान् नरकान् पापकर्मणा च जनयन्—तज्जनने प्रयोजको भवन्, देवः=द्योतनस्वभावः परमेश्वरः पूर्वोत्तरतटस्थानीये द्यावाभूमी रचयित्वा कर्णधार इव ज्ञानक्रियाशक्तिभ्यां बाहुभ्यां पतत्रैः=स्वलीलाविशेषैरेव सर्वं विश्वं प्रवर्तयतीति वाक्यम्। यद्वा सर्वप्राणिनां करणसंयोजयिताऽप्येष एव परमेश्वर इत्याह—बाहुभ्यां=हस्ताभ्यां मनुष्यादीन् सन्धमति=संयोजयति। अनेकार्था हि धातव इति न विस्मर्तव्यम्। पतत्रैः=पतनसाधनैः पादैः—चरणैश्च संधमति पश्वादीन् संयोजयति, उपलक्षणेनेतरेन्द्रियसंयोजयितृत्वमप्युक्तं द्रष्टव्यम्। अथवा पतत्रैः=पक्षैः पक्षिणः संधमति। सर्वेषां स्रष्टाऽप्येष एवेत्याह—द्यावाभूमी। उपलक्षणमेतत्, सर्वलोकान् तदन्तर्वर्तिनिखिलपदार्थांश्च जनयन् संधमतीत्यन्वयः। यद्वा कथं विश्वं सृजतीत्युच्यते—बाहुभ्यां दिवं संधमति=सम्यक् प्रेरयति, तथा पतत्रैः=गमनशीलैः पादैः पृथिवीं संधमतीति। सम्भवाभिप्रायेणैषां विविधपक्षाणामभिधानमिदम्। उभयोरेव द्यावापृथिव्योः कथनं प्राधान्याभिप्रायेण, एवं द्यावाभूमी जनयन्=दिवं च पृथिवीं चोत्पादयन्, उपलक्षणमिदं स्थापयन् संहरंश्च, देव एक एव परमेश्वरः सर्वत्र सर्वदा सर्वात्मनाऽवतिष्ठते इति तत्त्वम्। कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां 'संधमति' इत्यस्य स्थाने 'संनमति' इति पाठ उपलभ्यते। तत्र संनमति=जगत्सर्वं सम्यक् नतं स्वाधीनं व्यवस्थायुक्तं करोतीत्यर्थः।'

× × ×

( बृ. १ । ४ । ९ ) इत्यादिश्रुतिभ्यो ब्रह्मज्ञानाद्भूयमाणो ब्रह्मभावः तद्व्यवधायकाज्ञाननिवृत्तिमन्तरेण नोपपद्यते इति ज्ञानादज्ञाननिवृत्तिं गमयति। **'अनृतेन हि प्रत्यूढाः'** ( छां. उ. ८ । ३ । २ ) **'नीहारेण प्रावृताः'** ( शु. य. १७ । ३१ ) **'अज्ञानेनावृतं ज्ञानम्'** ( गी. ५ । १५ ) इत्यादिश्रुतिस्मृतिभ्योऽज्ञानमेव ब्रह्मभावलक्षणस्य मोक्षस्य व्यवधायकमवगम्यते। अपि चाज्ञानं यद्यनिवर्त्यं स्यात्तदा ज्ञानं व्यर्थं भवेत् क्षुन्निवारकस्य भोजनस्येव, अज्ञाननिवर्तकस्यैव ज्ञानस्य सार्थकत्वाभ्युपगमात्, तद्व्यर्थत्वे तु तत्प्रतिपादकं शास्त्रमपि व्यर्थं स्यात्, अतोऽनिच्छताऽप्यच्छमतिना शास्त्रस्य ज्ञानस्य च साफल्यायाज्ञानं ज्ञाननिवर्त्यमेवाभ्युपेयम्। किञ्चाद्वैतविज्ञानाञ्जनचक्षुर्महात्मा प्रत्यक्षेणैवाज्ञाननिवृत्तिमनुभवति, विद्वदनुभवो ह्यपलापानर्हः, एवं **'तमेव विदित्वातिमृत्युमेति'** (शु. य. ३१ । १८) **'तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः'** (श्वे. १ । १०) **'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः'** ( गी. ५ । १६ ) इत्यादिश्रुतिस्मृतयोऽपि अज्ञानस्य ज्ञाननिवर्त्यत्वे प्रमाणम्। अनादित्वमपि तस्य प्रागभावस्येव निवर्त्यत्वस्यैव साधकं नतु कथमपि बाधकम्। ननु—'मय ज्ञाने' इति धात्वर्थानुसारात् 'माया प्रज्ञा वयुनम्' इति ज्ञानपर्याये मायाशब्दस्य निघण्टौ पठनाच्च माया कथमज्ञानं स्यात् इतिचेन्नैवम्, **'माया चाविद्या च स्वयमेव भवति'*** (नृसिंहतापन्युपनिषत्) इति श्रुत्या मायाविद्ययोरैक्यप्रतिपादनात् माया अज्ञानमेव, 'घट चेष्टायां'

---

* इदमत्र बोध्यम्—यद्यपि शुद्धसत्त्वमलिनसत्त्वोपाधिभ्यां मायाऽविद्ययोर्भेदोऽस्त्येव, तथापि 'स्वयमेव' इत्यनेनैक्यप्रतिपादनमेव तयोरवगन्तव्यम्। यत एकस्यैवाज्ञानस्य विक्षेपशक्तिमत्त्वेन मायापदवाच्यत्वात्, आवरणशक्तिमत्त्वेनाविद्यापदवाच्यत्वाच्च, उपाधिप्रयुक्तवास्तवभेदस्यास्वीकारादिति ॥

इतिधातुजस्यापि घटशब्दस्य चेष्टावाचकत्वाभाववत् अत्रापि ज्ञानवाचकत्वाभावात्, किञ्च 'मय ज्ञाने' इति तु पाणिनीयधातुपाठे नास्त्येव '-अयवयपयमयचयतयणय गतौ' इत्यस्यैव तत्र सत्त्वात्। पूर्वोक्तं निघण्टुकारवचनं चाज्ञानस्य मायाया ज्ञानाकारपरिणामित्वादुपपन्नम्, वृत्तिज्ञानस्याज्ञानाभिन्नत्वात्। अपि चाज्ञानस्यैव विविधदृश्याकारप्रयोजकानिर्वचनीयविचित्रशक्तियोगात्, मायाशब्दपर्यायत्वं नानुपपन्नम्, यतो मायाया अपि–'**इन्द्रो मायाभिः पुरुरूप ईयते**' (ऋ० ६। ४७। १८) '**कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्। जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥**' (भा० १०। १४। ५५) '**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया॥**' (गी० ४। ६) **यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकं।**' (सांख्यवृद्धैः पातञ्जलयोगभाष्ये चतुर्थपादे त्रयोदशसूत्रे धृतम्) '**माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद!। सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि॥**' (म. भा. शां. मोक्षधर्मे) इत्यादिश्रुतिस्मृत्यादौ तादृशशक्तियोगस्य श्रवणात्, तादृशशक्तिमति–ऐन्द्रजालिकादौ मायाशब्दप्रयोगदर्शनाच्च तयोरैक्यमेवावगन्तव्यम्। तथा चेदृशेन–तत्त्वप्रतिभासप्रतिबन्धकेन–अतत्त्वप्रतिभासकारणेन–सर्वद्वैतप्रपञ्चप्रकृतिभूतेन–आत्मचैतन्याश्रयविषयेण तत्त्वज्ञानैकनिवर्त्येन मायालक्षणेन–अनिर्वचनीयेनाज्ञानेन यूयं सर्वे जीवाः प्रावृताः अवगुण्ठिताः स्थ। न केवलं प्रावृताः किन्तु जल्प्या च= 'मनुष्योऽहं कर्ता भोक्ता ममेदं धनं गृहमि' त्याद्यनृतजल्पनेन व्याप्ताश्च मदिरामदान्धा इव। किञ्च भवन्तः असुतृपः=असून्–प्राणान् केनाप्युपायेन भृत्वा तावतैव तृप्यन्ति, न तु ब्रह्मात्मतत्त्वं विचारयितुं प्रवर्तन्ते। न केवलमैहिकभोगेन तृप्ताः किन्तु उक्थशासः=परलोकभोगान् संपादयितुं नानाविधेषु यज्ञेषु उक्थं

मन्त्रं शंसन्तः—शस्त्रमन्त्रस्तोतारः कर्मठाः सन्तः चरन्ति=पृथिव्यां विविधकामनाकुला वर्तन्ते । केवलमैहिकामुष्मिकभोगपरा यूयं वर्तध्वे, यतोऽज्ञानमिथ्याज्ञानपराधीनानां विषयभोगलम्पटानां भवतां नास्ति तत्त्वज्ञानमतो देवं सर्वात्मानं स्वस्वरूपं न जानीथ इति सम्बन्धः । श्रुत्यन्तराण्यपि द्वैतभ्रमोपादानाज्ञानसद्भावप्रतिपादनपराण्यत्रानुसंधातव्यानि—' **एवं ब्रह्मलोकं न विन्दन्ति, अनृतेन प्रत्युढाः** ' ( छां० ८ । ३ । २ ) ' **तम आसीत्** ' ' **तमसा गूढमग्रे** ' ( ऋ. १० । १२८ । ३ । ) ' **मायान्तु प्रकृतिं विद्यात्** ' ( श्वे. ४ । १० । ) ' **अविद्यायामन्तरे वर्तमानाः** ' ( क० १ । २ । ५ ) इत्यादीनि । गीतासु भगवान् पुरुषोत्तमोऽपि प्राह—' **अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः** । ' ( गी० ५ । १५ ) इत्यादिकम् । यद्वा ननु—तत्तादृशमावरकं स्वप्रकाशमानस्य तस्य कथं स्यात् ? इत्याशंक्याह—नीहारेण=तुषारेण सूर्यमिव । यथा स्वस्य प्रकाशकं स्वतो भासमानमपि सूर्यं तुषारः आच्छादयति, तत्प्रकाशं विना तद्दर्शनाभावात्, तथा स्वस्य प्रकाशकं तमात्मानं स्वप्रकाशं तदज्ञानमाच्छादयति ' अहमज्ञः ' इति प्रकाशमान एवात्मन्यज्ञानानुभवात्, अनुभवसिद्धे तर्कानवकाशात्, वस्तुमाहात्म्यस्याधिक्षेपायोगादिति ।

यद्वा तमात्मानं न यूयं विदाथ, य आत्मा इमाः प्रजा जनयामास, कुतो न विद्मस्तत्राह—अन्यदित्यादि—अन्यत्=आत्मनो विलक्षणमसद्रूपं, अन्तरं=आवरकं—व्यवधायकं—आत्मनि सत्यपि स न भातीति व्यवहारजनकं न भातीति व्यवहार—प्रतिबन्धकञ्च बभूव=अनादिकालं व्याप्यास्ति । ननु—तस्यानादित्वमिवाविनाशित्वमपि स्यात्, तथा चास्मान् प्रति तन्निवारणोपदेशो व्यर्थस्तत्राह—नीहारेण—तत्सदृशेन तेनान्तरेणाच्छादिताः, तथा च नीहारवदेव तस्य विनाशित्वमावरकत्वादिति ।

केचनैवमत्र व्याचक्षते—'तं यूयं न विदाथ' अतः कारणात् युष्माकं च तस्य च पुरुषस्य मध्ये अन्यत्=महत्, अन्तरं=भेदो बभूव—पुरुषो जनको यूयं जन्याः, पुरुषो भ्रामको यूयं भ्राम्याः, पुरुषः सर्वज्ञः सर्वशक्तिमान्, युयमल्पज्ञाः अल्पशक्तिमन्तः, पुरुषः उपास्यः स्वामी यूयं उपासकाः सेवकाः, पुरुषः असंसारी मायापतिः यूयं संसारिणो मायामोहिताः, इत्येवं महदन्तरं बभूव। इति। तत्रेदं विज्ञेयं तच्च महदन्तरमविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तकत्वात्कालपनिकमेव मन्तव्यं न पारमार्थिकम्। ततो यदा च 'यूयं तं पुरुषं विदाथ, यथावत् विजानीथ, आत्मत्वेनोपास्यध्वम्। तदाऽऽ विघकं महदन्तरं तद्विद्ययाऽविद्यानिवृत्तिद्वारा विध्वस्तं भविष्यति। पुरुषविदो यूयं पुरुष एव भविष्यथ। यदज्ञानान्महाभेदलक्षणो बन्धः प्राप्तः तज्ज्ञानादभेदलक्षणो मोक्षो भवितव्य एव। श्रुत्यन्तरमपि—' **यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति**' ( बृ० २। ४। १४ + ४। ५। १५ ) इत्यादिनाऽविद्याविषये महाभेदलक्षणं प्रत्यक्षादिव्यवहारमुक्त्वा पुनर्विद्याविषये—' **यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्**' ( बृ० २। ४। १४ + ४। ५। १५। इत्यादिना तदभावं परमाभेदलक्षणं ब्रह्मात्मभावावस्थानात्मकं मोक्षं दर्शयति। तदेतत्स्मृतं विष्णुपुराणेऽपि—' **विभेदजनकेऽज्ञाने, नाशमात्यन्तिकं गते। भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत्॥**' इति। यतो यूयं नीहारेण प्रावृता अतो जल्प्या चासुतृप उक्थशासश्चरन्तीत्यन्वयात्, द्वैतप्रपञ्चलक्षणस्य दृश्यमात्रस्य नीहाररूपाविद्याऽऽवरणप्रयुक्तत्वं स्पष्टमवगम्यते, यत्—यदविद्याप्रयुक्तं तत्तद्विद्यया निवर्तते ऽतस्तन्मिथ्याभूतमेवेत्यर्थतोऽपि स्पष्टं सूच्यते इति।

× × ×

# ( ३७ )

( महाबलवतो विश्वविजयिनः परमेश्वरस्येन्द्रस्य सेनाधिपतेर्वा वर्णनम् )

महाबलवन्तं विश्वविजयिनं परमेश्वरमिन्द्रं वर्णयति—

**ॐ आशुः शिशानो वृषभो न भीमो**
**घनाघनः क्षोभणश्चर्षणीनाम् ।**
**संक्रन्दनोऽनिमिष एकवीरः**
**शतꣳसेना अजयत्साकमिन्द्रः ॥**

( शु० य० १७ । ३३ । ऋ. १० । १०३ । १ साम० १८४९ । अथर्व० १९ । १३ । २ ) । तै० सं० ४ । ६ । ४ । १. नि० १ । १५)

इन्द्रः=परमैश्वर्योपेतः परमेश्वरः इत्यर्थः । आशुः=सर्वत्र व्यापकः ' अशूङ् व्याप्तौ ' स्मरणात् । अश्नुते=सर्वं व्याप्नोतीति तद्व्युत्पत्तेः । यद्वा—आशुः=संकल्पमात्रेण शीघ्रं विश्वकार्यकारीत्यर्थः, तस्य परमेश्वरस्येन्द्रस्य सत्यसंकल्पत्वात् । पुनः कथंभूतः ? शिशानः=निशितः—अत्युग्रः—शत्रूणामसुराणां भयजनक इत्यर्थः । देवानामपि—' भीषाऽस्माद्वातः पवते ' ( तै. उ. २ । ८ ) इति श्रुतेः । तत्र दृष्टान्तः क इव ? वृषभो न भीमः=बिभेत्यस्मादिति भीमः तादृशो वृषभ इव, नकारोऽत्रोपमार्थको न निषेधार्थकः । स यथा तीक्ष्णाभ्यां शृङ्गाभ्यां भीमो भयङ्करो भवति तद्वत् । घना-घनः=घातुको हिंसक इत्यर्थः, शत्रूणामिति शेषः । हन्तेः पचाद्यचि ' हन्तेर्घ-

श्चेति ' द्विर्वचनं, अभ्यासस्याडागमः, घत्वं च धात्वभ्यासयोः । चर्षणीनाम्= चर्षणयः=आसुरीसम्पद्भाजो मनुष्याः तेषां क्षोभणः—क्षोभयितेत्यर्थः । चर्षणय इति मनुष्यनामसु निघण्टौ ( २ । ३ ) पठितम् । संक्रन्दनः=सम्यक् क्रन्दयिता दुष्टानामाकर्षणेन प्रहारेण च, प्राणिनां समेषां मृत्युकाले कालरूपेण वा, " अत्ता चराचरग्रहणात् " ( ब्र. सू. १ । २ । ९ ) इति न्यायात् । अनिमिषः=नास्ति निमेषो यस्य सः—चक्षुर्निमेषपक्ष्मकस्पन्दरहितः अत्यन्तसावधानो विश्वव्यवस्थायामिति यावत् । यद्वा अनिमिषः=अचलोऽयं सनातन इत्यर्थः । 'एकवीरः=वीरयत्यमित्रानिति वीरः, एकश्चासौ वीरश्चेति, अथवा एक एव विक्रान्तः—असहायेन× कार्यक्षम इत्यर्थः । ईदृशोऽयं इन्द्रः परमात्मा रामावतारं गृहीत्वा धर्मसंस्थापनाय साधुपरित्राणाय च रावणादिराक्षसानां शतं सेनाः साकं=सह लीलयैवेत्यर्थः, शतमिति प्रभूतस्योपलक्षणमेक एव अजयत्= जयतीत्यर्थः ।

अथवा स्वदेशधर्मादिरक्षणाय ईदृशः सेनापत्यधिकारे स्थापनार्हः क्षत्रियो ऽभ्युपेयः, योऽसौ सर्वविघो धनुर्वेदवित्—क्रमादिशास्त्रवित्—निर्भयो बलिष्ठो 'धार्मिकः स्वदेशस्वात्मन्यायानुरागी जितेन्द्रियः स्वसेनायाः शिक्षणे योधने चातिकुशलः शूरवीरोऽदीर्णो विजेता चास्ति, तं क्षत्रियप्रवरं सेनाधिपतिं निरूपयति— आशुः=शीघ्रगामी=शीघ्रं कार्यसाधको वा । शिशानः=श्यति—वज्रादिशस्त्रास्त्रं शत्रुवधाय तीक्ष्णीकरोति—शत्रुविजययोग्यं करोतीत्यर्थः, ' शो तनूकरणे ' " बहुलं छन्दसि ' इति जुहोत्यादित्वाच्छानचि द्वित्वम् । यद्वा शिशानः=तीक्ष्ण-मतिः—प्रकृष्टज्ञानसम्पन्न इत्यर्थः । वृषभो न=बलिवर्द इव भीमः=भयङ्करः ।

× तदुक्तं—' क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ' ... 

× तदुक्त—' विधीयते यदानुनन्दनेन, नापेक्ष्यते यत्र सहायशक्तिः । पाञ्चालबालाञ्चलदीर्णतायाः, न तत्र तन्तुर्न च तन्तुवायः ॥

घनाघनः=शत्रूणामतिशयेन घातकः । यद्वा घनाघनः=वृष्टिगर्जनकर्तृमेघसदृशः, 'वर्षुकाब्दो घनाघनः' इत्यभिधानात् । हन इन=यूयं विध्वंसयत–विध्वंसयत सपदि शत्रूनिति प्रोत्साहेन वक्ता वा । चर्षणीनां=दुष्टानां म्लेच्छानां मनुष्याणां क्षोभणः=क्षोभयतीति क्षोभकर्ता इत्यर्थः । संक्रन्दनः=सम्यक् रोदयिता शत्रूणां यद्वा सम्यक् क्रन्दनं परभयहेतुः सिंहनादो यस्य सोऽसौ संक्रन्दनः । यद्वा संक्रन्दनः=शत्रूणां समाह्वाता इत्यर्थः । अनिमिषः=विजयायाहर्निशं प्रयतमानः, अतीवसावधान इत्यर्थः । एकवीरः=एकश्चासौ वीरश्चेति, अन्यनिरपेक्षं शत्रूनेक एव जेतुं समर्थ इत्यर्थः । एवंविधः इन्द्रः=सेनाधिपतिः क्षत्रियप्रवरः शतं सेनाः=शतसंख्याकाः शत्रुसेनाः साकं=सहैव एकेन–प्रबलतमप्रयत्नेनैव अजयत्= जयतीत्यर्थः ॥

## ( ३८ )

### ( स्वधर्मस्वदेशस्वाधिकारपरिरक्षणाय स्वस्वातन्त्र्यलाभाय चाऽवश्यमेव युद्धं कर्तव्यम् )

दुष्टेभ्यो म्लेच्छेभ्यो विधर्मिभ्यश्च स्वधर्मस्य स्वदेशस्य स्वदेशवास्तव्यप्रजायाश्च स्वाधिकारस्वराज्यस्वस्वातन्त्र्यादेश्च परिरक्षणाय तल्लाभाय च धर्मैधाराक्तिसम्पन्नैः क्षत्रियैर्धर्मशास्त्रशिष्टाचारपरिप्राप्तं युद्धमभ्युदयावहमवश्यमेव करणीयम् । तदकरणे प्रत्यवायापकीर्तिपारतन्त्र्यादिदोषसम्भवात् । अत एव शूरवीरधीरोदारगम्भीरतरं सकलयुद्धकलाप्रवीणं निःसीमानुपमोत्साहबलधैर्यबुद्धिशक्तिमन्तं जितेन्द्रियं सर्वहितचिन्तकं देशनायकाधिपतिं राष्ट्रपतिमनुसृत्य युद्धाय सर्वेऽपि क्षत्रियाः परस्परं सुहृदो भूत्वाऽन्योऽन्यमनुमोद्य शीघ्रमेव संघटिताः सन्तः स्वपक्षविजयाय शत्रुपक्षध्वंसनाय च महत्तरं सफलं प्रयत्नं विदधतु इत्युपदिशति—

ॐ गोत्रभिदं गोविदं वज्रबाहुं,

जयन्तमज्म प्रमृणन्तमोजसा ।

इमꣳ सजाता ! अनुवीरयध्व-

मिन्द्रꣳसखायो अनुसꣳरभध्वम् ॥

( शु. य. १७ । ३८ । ऋ. १० । १०३ । ६ । साम. १८५४ । अथर्व. ६ । ९७ । ३ + १९ । १३ । ६ । तै. स. ४ । ६ । ४ । २ । )

हे सजाताः !=समानं—तुल्यं जातं—जन्म—एकस्मिन् पावने भारते देशे, एकस्यामार्यहिन्दुजातौ, एकस्मिन् वैदिकसनातनधर्मे येषां ते समानजन्मानः ! हे सखाय. !—समानाः ख्यायन्ते लोकैः स्वजातिस्वदेशहितचिन्तनेन सद्विचारेण गमनेन वदनेन धर्मेण स्नेहेन चेति मिथ. सौहार्दसौजन्यसाख्यसौशील्यौदार्य-साहाय्यादिसद्धर्मशीला भवन्त. सर्वे योद्धारः क्षत्रियाः, इमं इन्द्रं=विशिष्टते-जोबुद्धिबलाद्यैश्वर्यसंयुक्तं देशनेतारं राष्ट्रपतिं—अनुवीरयध्व=वीरकर्म युद्धं कुर्वाणं तमनुसृत्य वीरकर्मणा यूयं प्रोत्साहयत । ' शूर वीर विक्रान्तौ ' अदन्तश्चुरादि-र्णेद् । यद्वा एनमिन्द्रमग्रत. कृत्वा अनु=पश्चात्—वीरयध्वं=वीरकर्म युद्धं यूयमपि कुरुध्यम् । वीरशब्दात्करोति तदाचष्टे इति णिच् । अनुसंरभध्वं=सरम्भं= देशजात्यै घोषणा—शत्रुभ्यः कोप—युद्धाय वेगं च कुर्वाणमनु सरम्भं कुरुत । यद्वा अनुसंरभध्वं=अयमिन्द्रः सेनाधिपतिः पुरतो घोषणायुद्धादिकं सम्यक् आर-भतां, पश्चात् भवन्त आरभन्ता युद्धोद्युक्ता भवत इति । कीदृशमिन्द्रम् ? गोत्र-भिदं म्लेच्छानां शत्रूणां गोत्राणि कुलानि भिनत्तीति गोत्रभित्—त—दुष्टसमुदायभे-त्तारमितियावत् । गोविदं=गां—वाचं सम्पूर्णां सार्थां यथावद्वेत्ति जानातीति गोवित्—तं पण्डितं कृत्याकृत्यहेयोपादेयार्थज्ञं विचक्षणमिति यावत् । यद्वा

गोविदं=गां--स्वकीयां मातृभूमिं म्लेच्छादिशत्रुभिरपहृतां युद्धेनोपायेन विन्दति-लभते--प्राप्नोतीति सोऽसौ गोवित् तमित्यर्थः अन्यायेनात्याचारेण धृतराष्ट्रान् म्लेच्छा दस्यून् विजित्य हृतस्वराष्ट्रभूमिस्वायत्तकारिणं युधिष्ठिरमिति यावत्। वज्रं-बाहुं=वज्रं बाहौ यस्य तम्। प्रहरणार्थेभ्यः परनिपातः। वज्रमिदमन्येषामपि विविधानां शत्रुसैन्यभेदनसमर्थानां शस्त्राणामुपलक्षकम्। सकलशस्त्रास्त्रसुसज्जितमिति यावत्। अज्म=संग्रामं जयन्तं=विजयशीलम्, अज्म इति संग्रामनामसु निघण्टौ ( २ । १७ ) पठितम्। ओजसा=बलेन, प्रमृणन्तं=शत्रून् हिंसन्तं, मृणातिर्हिंसाकर्मा। अयं भावः--आततायिनां दुष्टानां वधोऽवश्यमेव विधातव्यः, तेषां वधे नास्ति पापस्य लेशोऽपि तु प्रभूतं पुण्यं लभ्यते, सद्युद्धञ्च सद्गतिं प्रापयति। विद्यन्ते च तत्र शतशः प्रमाणभूतानि शास्त्रवचनानि--'**आततायिनमायान्तं हन्यादेवाविचारयन्। नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः।**' इत्यादिकानि। भगवान् श्रीकृष्णचन्द्रोऽप्यर्जुनाय क्षत्रियाय क्षत्रियप्रवरायान्यायधृतराष्ट्राणां धार्तराष्ट्राणां दुष्टानां वधार्थं युद्धमुपदिशन् तस्य पुण्यवत्त्वमुत्तमलोकप्रापकत्वं तदकरणप्रयुक्ताकीर्तिपापादिकञ्च प्राह--'**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्। सुखिनः क्षत्रियाः पार्थ ! लभन्ते युद्धमीदृशम् ॥ अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि। ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि ॥**' ( २ । ३२--३३ ) इति। राष्ट्रपतिं नेतारमनुसरणशीला आयुधाद्युपकरणवन्तो भक्ता योद्धारो भवन्तु इत्येवमाह--भगवान् ऋग्मन्त्रोऽपि--'**वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः। स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥**' ( ऋ० सं० ५ । ५७ । २ । ) इति। अयमर्थः--

हे मरुतः ! हे शूरवीराः ! यूयं पृश्निमातरः=पृश्निः पृथिवी—स्वदेशभूमिः एव माता येषां ते, स्वमातृभूमिभक्ताः सन्तः दुष्टवधार्थं स्वातन्त्र्यलाभार्थं वाशीमन्तः=वाशीति तक्षणादिसाधनं विशिष्टमायुधं तद्वन्तः ऋष्टिमन्तः=ऋष्टिः—छुरिकादिसदृश आयुधविशेषः तद्वन्तः, सुधन्वानः=शोभनधनुष्मन्तः, इषुमन्तः=बाणवन्तः, निषङ्गिणः=निषङ्गवन्तः स्वश्वाः=शोभनाश्वाः, सुरथाः=शोभनरथाः, स्वायुधाः=शोभनायुधोपेताः, मनीषिणः=शोभनबुद्धिमन्तः स्थ=भवथ, एतादृशयुद्धोपकरणसज्जिता यूयं शुभं=राष्ट्रपतिप्रमितिप्रदर्शितं शोभनं युद्धमार्गं याथन=गच्छथ । इति ।

## (३९)

### ( परमात्मातिप्रियाभिधानस्य ओमित्येतदक्षरस्य महत्त्ववर्णनम् )

ओङ्कारो हि सर्ववेदसारभूतो ब्रह्मात्मादितत्त्वप्रकाशकश्च, यतस्तस्य सर्ववाग्व्यापकत्वात् सर्वात्मकत्वाच्च । अत एव सर्ववेदात्मकस्य तस्योच्चारणं सर्ववेदोच्चारणतुल्यं, तन्निरूपणञ्च सर्ववेदार्थनिरूपणात्मकं वेदितव्यम् । तथा चश्रुतयः—' तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णा '× ( छां. २ । २३ । ४ ) 'ॐ इत्येतदक्षरमिदं सर्वम् ' ( छां. १ । १ । १ ) ' भूतं भवद्भविष्यदिति सर्वमोङ्कार एव ' ( माण्डूक्य० १ ) इत्याद्याः । स्मृतयोऽपि–एकाक्षरं परं ब्रह्म, प्राणायामः परं तपः । प्रणवाधास्तथा वेदाः प्रणवे पर्यवस्थिताः ॥ नोद्गीथेन (प्रणवेन) समं किञ्चिच्छोधकं जगति स्मृतम् । यं

× यथा लोके अश्वत्थपर्णानि शङ्कुशब्दवाच्येन स्वगतसन्तुजालसदृशशलाकाविशेषेण व्याप्तानि, तद्वदोङ्कारेण सर्वा शब्दात्मिका वाग्व्याप्तेति ।

विनाऽऽम्नायधर्मोऽपि स्वकार्ये न प्रवर्तते ॥ ' वेदः प्रणव एवायम् ' इत्यादिकाः । अत एव सोऽयं श्रेष्ठं परमात्मोपासनसाधनत्वं सम्पद्यते, यतस्तस्य परमात्मप्रियतमाभिधानत्वात्, प्रतिमादिकपरमात्मप्रतीकत्वाच्च । तस्मिन् हि उच्चार्यमाणे ध्यायमाने च परमात्मा प्रसीदति । प्रियनामप्रतीकग्रहणे लोक इव । तदुक्तं–' अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः *। तस्योङ्कारं स्मृतं नाम तेनाहूतः प्रसीदति ॥ ( योगियाज्ञवल्क्यस्मृतौ ) इति । अत एव तज्जपतदर्थानुसन्धानमेवेश्वरप्रणिधानमित्युच्यते, तेन हि प्रत्यक्चेतनाधिगमान्तरायाभावसमाधयः सिद्ध्यन्ति । यदाहुर्महर्षयः पतञ्जलयः–'तस्य वाचकः प्रणवः' ( यो. सू. १ । २७ ) 'तज्जपस्तदर्थभावनम् ' ( यो. सू. १ । २८ ) ' ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ' ( यो. सू. १ । २९ ) 'समाधिसिद्धिरीश्वरप्रणिधानात् ' ( यो. सू. २ । ४५ ) इति । किञ्च ओमित्येतदक्षरस्य प्रकृतिप्रपञ्चार्णवं संतरीतुं रम्यनवनावान्तरतुल्यत्वात्, तदभ्यासिनां प्रपञ्चं निरस्य मोक्षं प्रति नयनाच्च प्रणवमिति नामधेयान्तरं श्रुतिस्मृत्यादिषु परिगीयते । तदुक्तं शिवपुराणे विद्येश्वरीसंहितायाम्–' प्रो हि प्रकृतिजालस्य संसारस्य महोदधेः । नवं नावान्तरं रम्यं प्रणवं वै विदुर्बुधाः ॥ प्र=प्रपञ्चो न=नास्ति वो=युष्माकञ्च बोधयन् । प्रकर्षेण नयेद्यस्मान्मोक्षं यः प्रणवं विदुः ॥ ' ( १७ । ४+५ ) इति । अत एव तस्यैतस्य प्रणवस्य माहात्म्यं माण्डूक्योपनिषत्कारिकायां गौडपादाचार्यैरप्यभिहितम्–' युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् । प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः । अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः । सर्वस्य प्रणवो ह्यादिर्मध्य-

* भावग्राह्य:=भक्तिग्राह्य, मनोमय:=मनोभिलषिताकार इत्यर्थ ॥

मन्तस्तथैव च। एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥' इति। इत्थं–'एतद्वै सत्यकाम! परञ्चापरञ्च ब्रह्म यदोङ्कारः।' (५।२) इति प्रश्नोपनिषद्श्रुत्याऽपि परापरब्रह्मदृष्ट्यवलम्बनत्वेन 'ओमिति' शब्दलक्षणं परञ्चापरञ्च ब्रह्म प्रतिपत्तव्यम्। तस्योपासनं हि द्वयोः तयोर्ब्रह्मणोः साक्षात्कृतये पर्याप्तं साधनमित्युक्तम्। स्मृत्यापि च–'प्रणवेन' परं ब्रह्म ध्यायीत नियतो यतिः। जपँश्च प्रणवं "नित्यं ब्रह्मविष्णुशिवात्मकम्। कोटिसूर्यसमं तेजो ध्यायेदात्मनि निर्मलम् ॥' इति। एवं तस्य मात्रापादानुसंधानेन यथावदवगमो ब्रह्मात्माद्वैततत्त्वप्रतिपत्त्युपायभूतः। तथाहि–माण्डूक्यादिश्रुत्युक्तप्रकारेण तत्त्वचिन्तनरसिकः साधकः, ॐकारस्याकारोकार-मकारमात्रात्रयेण विश्ववैश्वानरतैजससूत्रात्मप्राज्ञेश्वरान् पादभूतान् विजानीयात्, प्रथमं तावत्–अकारमात्रया विश्वं M. वैश्वानरात्मत्वेन 'अहमेव वैश्वानरोऽस्मी'ति विभावयेत्। ततस्तैजसं सूत्रात्मत्वेन 'अहमेव सूत्रात्माऽस्मी'ति उकारमात्रया विभावयेत्। अनन्तरं प्राज्ञमीश्वरात्मत्वेन N. 'अहमेवेश्वरोऽस्मी'ति मकारमात्रया विभावयेत्। पश्चात् व्यष्टिसमष्टिस्थूलसूक्ष्मकारणोपाधिकमोङ्कार-वाच्यं 'परं ब्रह्माऽहमस्मी'ति सर्वात्मत्वेन स्वं विभावयेत्। ततः एकाग्रेण

---

M. सकलस्थूलशरीरसमुदायलक्षणसमष्टिब्रह्माण्डोपलक्षितं चैतन्य विराट् विविध राजमानत्वात् सर्वनराभिमानित्वाच्च वैश्वानर इत्युच्यते। प्रत्येकस्थूलशरीरोपहितं चैतन्य विश्व इत्युच्यते। सामान्यविशेषयोरिव समष्टिव्यष्टिशरीरयोः तादात्म्यात्, तदुपहितविश्ववैश्वानरयोरपि तादात्म्यमभ्युपगम्यते ॥

N. सकलसूक्ष्मसमष्टिशरीरोपलक्षित चैतन्य हिरण्यगर्भः सूत्रात्मा इति। प्रत्येक-सूक्ष्मव्यष्टिशरीरोपलक्षित तत्तैजस इति। तथा सकलकारणाविद्योपलक्षितं तदीश्वर इति। प्रत्येककारणाविद्योपलक्षितं तत्प्राज्ञ इत्युच्यते इति ॥

विशुद्धेन मनसा सर्वं जगत्स्थूलसूक्ष्मादिक्रमेण अर्धमात्रात्मकोंमात्रोङ्कारोपलक्षिते निर्विशेषचिन्मात्रेऽखण्डैकरसानन्दे परब्रह्मणि विलाप्य स्वस्याखण्डैकरसब्रह्मानन्दात्मतां साक्षात्कुर्यात्। तदुक्तं सुरेश्वराचार्यैः—'अकारं पुरुषं विश्वमुकारे प्रविलापयेत्। उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्॥ मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्। चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः। परमानन्दसन्दोहवासुदेवोऽहमोमिति॥' (पञ्चीकरणवार्तिके) इति। तथा च श्रुतिस्मृतयः—'ॐ इत्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते।' (प्र. उ. ५।५) 'ॐ इत्यात्मानं युञ्जीत' (तै. आ. १०।६३) 'ॐ इत्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्' (मु. २।२।६) 'ॐ इत्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥' (गी. ८।१३) इत्याद्याः। अत एव तत्त्वमस्यादिमहावाक्यवत् प्रणवस्याप्यखण्डैकरसवस्तुबोधकत्वेन महावाक्यत्वमवगन्तव्यम्। यथा 'सोऽहमि○.'त्यस्य परमात्माऽहमित्यभेदार्थः, तथा प्रणवस्यापि। तथाहि—सोऽहमित्यत्र सकारहकारयोर्लोपे कृते परिशिष्टयोः 'ओ अम्' इत्यनयोः सन्धिं कृत्वोच्चारणे ओमिति शब्दो निष्पद्यते। तदुक्तं—'सकारञ्च हकारञ्च लोपयित्वा प्रयोजयेत्। सन्धिञ्च पूर्वरूपोत्थं ततोऽसौ प्रणवो भवेत्॥' इति। किञ्च ॐकारस्य सर्वेभ्यो वेदेभ्यः प्रथमं प्रतिभातत्वात्, सर्वदेवात्मकत्वेन सर्वमन्त्रात्मकत्वात्, सर्वकामेशत्वेन सर्वमन्त्रफलदातृत्वाच्च श्रेष्ठतमत्वं प्रस्फुटमवगतं भवति। अत एव प्रथमं

---

○. सोऽहमित्यत्र स इति शब्देन परमात्मा, अहमिति शब्देन च प्रत्यगात्मोच्यते, अनयोः सामानाधिकरण्यात् महाक्यैक्यमुच्यते। इति।

ॐकारं प्रणवमुच्चार्यैव वेदविहिताः सर्वा अध्ययनयागदानादिकाः क्रियाः प्रवर्तमाना भवन्ति । तज्जपाभ्यासाच्च बहुकल्मषनिवृत्त्या शीघ्रमप्रतिबद्धममृतत्वलक्षणमोक्षहेतुभूतं तत्त्वज्ञानमपि करामलकवत्सिद्धं भवति; इत्येवमादिकं तद्विपुलं महत्त्वं प्रस्फुटयन्नाह—

ॐ समुद्रादूर्मि मधुमाँ उदारद्,
उपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति,
जिह्वा देवानाममृतस्य नाभिः ॥
वयं नाम प्रब्रवामा घृतेनास्मिन्
यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं,
चतुःशृङ्गोऽवमीद् गौर एतत् ॥

(शु. य. १७ । ८९+९० । ऋ. ४ । ५८ । १+२ । तै. आ. १० । १० । १+२ )

समुद्रात्=परमात्मनः, समुद्भवन्ति भूतानि यस्मात् सर्गकाले, सम्मोदन्तेऽस्मिन् स्थितिकाले, समुद्रवन्ति यस्मिन् प्रलयकाले सोऽसौ तथेति व्युत्पत्तेः, भूतसर्गस्थितिप्रलयङ्करः परमात्मा समुद्र इत्युच्यते । ऊर्मिः=ऊर्मिसदृशः—ॐकारः—सकलाभिधेयार्थकारणाखिलाभिधाननिदानभूतः प्रणवः, मधुमान्=माधुर्यगुणयुक्तः सन्, उदारत्=उदगच्छत्=उद्भूत इत्यर्थः । 'ऋ गतौ' च्लेरङ् 'ऋदृशोऽङि गुणः'। यथा लोके समुद्रात्तरङ्ग उत्पद्यते, एवं चिदेकरसात्परमात्मनः प्रणवः समुत्पन्नः । आम्नातश्च परमात्मनः समुद्रनामधेयत्वं 'समुद्रोऽसि

विश्वव्यचा' (शु. य. ५। ३२) इत्यत्र श्रूयन्तेऽपि। प्रसिद्धसमुद्रोर्मि-
दृष्टान्तेन परमात्मोङ्कारयोर्वाच्यवाचकयोः तादात्म्यसम्बन्धोऽपि स्फुटीकृतः।
ॐकारस्य माधुर्यन्तु अभ्यासपराणां योगिनामनुभवसंवेद्यम्। अयं भावः—ॐकार-
मन्तराऽभिधानस्याभावात्, अभिधानादृतेऽभिधेयस्याभावात्, सर्वमभिधेयमर्थं
प्रपञ्चलक्षणमभिधानात्मकं, सर्वञ्च शब्दप्रपञ्चलक्षणमभिधानं ॐकारात्मकम्, अत-
एव ॐकारोद्भूतया सर्वं तदन्तर्निहितं नामरूपात्मकं विश्वमपि समुद्भूतं
भवतीति। अनेन ॐकारस्य सर्ववेदमन्त्रात्मकसर्वदेवात्मकत्वादिलक्षणं महत्त्वं
सूचितं भवति। अत एव यत्=निगमागमप्रसिद्धं, सर्वत आदौ साक्षात् परमा-
त्मसकाशात्समुद्भूतं प्रणवरूपं घृतस्य=दीप्तस्य स्वप्रकाशस्य ब्रह्मणः परमात्मनः
इत्यर्थः। 'घृ क्षरणदीप्त्योः' स्मरणात्। एतस्माद्धातोः समुत्पन्नस्य घृतशब्दस्य
स्वप्रकाशदीप्तिमद्ब्रह्मबोधकत्वमविरुद्धम्। नाम=साक्षाद्वाचकं नेदिष्ठं श्रेष्ठतमं
प्रेष्ठतममभिधानं, गुह्यं=सर्ववेदेषु निशिष्टरहस्यभूतं गोपनीयं, तदस्ति। तथा च
काठकैराम्नातम्—'सर्वे वेदा यत्पदमामनन्ति' (१। २। १५) इति प्रस्तुत्य
**'तत्ते पदं सङ्ग्रहेण ब्रवीमि, ॐमित्येतत्'** (क. १। २। १५) इति।
अनेन तस्य सर्ववेदसारभूतत्वस्वप्रकाशकत्वादिलक्षणं महत्त्वं द्योतितं भवति।
तेन प्रणवनाम्ना ॐकारेण उपांशुना=जपध्यानकाले तदर्थपरात्परब्रह्मानुसन्धानपुर-
स्सरं शनैरुच्चार्यमाणेन, तदभ्यासशीलः साधकः, अमृतत्वं=उत्पत्तिविनाशरहित-
निर्भयनित्यमखण्डानन्दात्मकमोक्षस्य हेतुभूतं तत्त्वज्ञानं समानट्=सम्यक्—
आनशे—प्राप्नोतीत्यर्थः। यद्वा अमृतत्वं=ब्रह्मनिर्वाणं कैवल्यं मोक्षं तत्त्वज्ञान-
द्वारा समानट्=अधिगच्छतीत्यर्थः। तच्च प्रणवाख्यं पावनं नाम, देवानां जिह्वा=
देवैः—ऐश्वर्यशालिभिः तत्त्वध्यानरतैर्मुमुक्षुभिर्निरन्तरमुच्चार्यमाणत्वेन हेतुना जिह्वेव
सर्वदा मुखमध्ये वर्तते। किञ्चेदं प्रणवात्मकं नाम, अमृतस्य=मोक्षस्य नाभिः=

रथचक्रस्य नाभिरिवाश्रयभूतम् । अत एव काठकैराम्नातम्—'**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्** ।' ( १ । २ । १६ ) इति । अनेन प्रणवस्य तत्त्वज्ञानमोक्षसाधनत्वमुक्तम् ।

इत्थं प्रणवस्य पूर्वोक्तं विपुलं महत्त्वं श्रुत्वा केचन तत्त्वजिज्ञासवः सादरं तत्पावन नाम ग्रहीतुं तदर्थभूतं ब्रह्मतत्त्वञ्च विमलेन चेतसाऽजस्रं भावयितुं प्रतिजानते इत्याह-वय=ब्रह्मविद्यार्थिनः पुरुषाः अस्मिन्—यज्ञे=ज्ञानयज्ञे; ज्ञानस्य यज्ञत्वं गीतासु भगवताऽपि स्मृतम्—'**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः** ।' ( ४ । २८ । ) इति । '**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप** ।' ( ४ । ३२) इति च । घृतेन=स्वप्रकाशेन ब्रह्मणा निमित्तभूतेन प्रणवरूपमोंकारं नाम प्रब्रवाम=सादरं सर्वदा उच्चारयामः—जपामः—अभ्यस्याम इत्यर्थः । एवं नमोभिः=नमस्कारैर्युक्ताः—तदुपलक्षिततदुरहङ्काराादिकल्मषरहिताः सन्तो वयं विशुद्धे एकाग्रे चित्ते तदर्थभूतब्रह्मतत्त्वं सर्वदा धारयामः=भावयामः—अनुसंदध्महे इत्यर्थः । अथेदानीं चतुःशृङ्गवृषभलक्षणस्य प्रणवस्य ब्रह्मतत्त्वप्रकाशकत्वमाह—शस्यमानं=अस्माभिः तत्त्ववेदिभिः प्रणवेन स्तूयमानं, उपशृणवत्=पार्श्ववर्तिभिः तत्त्वबुभुत्सुभिः श्रूयमाणं, एतत्प्रत्यक्चेतनं ब्रह्म=ब्रह्मतत्त्वं, चतुःशृङ्गः=अकारोकारमकारार्धमात्रारूपशृङ्गचतुष्टयोपेतः, चत्वारः अकाराद्याः शृङ्गभूता यस्य स इति तद्व्युत्पत्तेः; गौरः=श्वेतः—शुक्लः प्रणवाख्यो वृषभः अवमीत्=वान्तवान् प्रत्यपादयदित्यर्थः । यद्वा यतो गौरः चतुःशृङ्गोऽयं प्रणवः एतत्=स्वस्वरूपभूतं—ब्रह्मतत्त्वं प्राक्कालिकेभ्यो जिज्ञासुभ्यः, अवमीत्=न्यरूपयत्, अत एवेदानींतना जिज्ञासवो भवन्तोऽपि प्रणवेन शस्यमानं=उपदिश्यमानं—निरूप्यमाणं तथ, उपशृणवत्=उपशृण्वत्=उपशृणोतु—उपशृण्वन्तु, एकारवचनव्यत्यय , 'लेटोऽडाटौ' इत्यडागमः । श्रुत्वा चावधारयन्तु । इति ।

अकारादीनां प्रणवमात्राणां शृङ्गत्वं नृसिंहोत्तरतापनीयोपनिषदि समाम्नातम्—'**शृङ्गेष्वशृङ्गं संयोज्य सिंहं शृङ्गेषु योजयेत् । शृङ्गाभ्यां शृङ्गमाबध्य त्रयो देवा उदासते ॥**' (खण्ड. ६) इति। अयमस्यार्थः—शृङ्गेषु=छन्दसामृषभस्य प्रणवस्य शृङ्गेषु—मात्रासु—अकारोकारमकारेष्वित्यर्थः। अशृङ्गं=अमात्रं, निरवयवं तुरीयमात्मानं संयोज्य=वाच्यतया सन्धाय—अकारोकाराभ्यां त्वंपदार्थरूपं मकारेण तत्पदार्थरूपञ्च प्रतिपद्येत्यर्थः। सिंहं=नृसिंहानुष्टुभं तुरीयगतसर्वसंहर्तृत्वादिवाचकं, शृङ्गेषु=अकारादिषु—सर्वपदार्थरूपात्मवाचकेषु तत्तत्सर्वसंहर्तृत्वादिवाचकतया योजयेत्=अन्तर्भूतं भावयेदित्यर्थः। एवं पदार्थशोधनं विधाय शृङ्गाभ्यां=अकारोकाराभ्यां तदर्थप्रत्यगात्मरूपेणेत्यर्थः। शृङ्गं=मकारं तदर्थं ब्रह्मेत्यर्थः। आबध्य=आभोऽभेनाऽत्यन्तैकत्वेन संयोज्य प्रतिपद्येत्यर्थः। त्रयो देवाः=मन्दमध्यमोत्तमभेदेन तत्त्वनिष्ठाः—विद्वद्वर—विद्वद्वरीयो—विद्वद्वरिष्ठाः, उदासते—उत्=ऊर्ध्वं तदासते। सविलासाज्ञानमतिक्रम्येतिशेषः। सर्वेषां हि तेषां देवानां विदुषां तुरीयब्रह्मप्रतिपत्तेर्विद्यमानत्वात्, उदासनं उर्ध्वब्रह्मरूपेणावस्थानं न भिद्यत इति भावः। उपासते इति पाठान्तरं क्वचित्। निष्कामैरनुष्ठेयत्वेन निर्मलत्वात्प्रणवस्य शौक्ल्यम्। 'यश्छन्दसामृषभो विश्वरूपः' (तै० उ० १।१।४।) इति। अयमर्थः—गवां मध्ये प्रधानत्वाद्यथा ऋषभः श्रेष्ठः तथा वेदानां मध्ये प्रणवः श्रेष्ठः प्राधान्यादित्यर्थः। विश्वरूपः=सर्वरूपः सर्वव्याप्तेः। इत्यत्र तस्य वृषभरूपत्वमपि श्रुतमिति। 'प्रजवामा धारयामा भज्ञा' इत्यत्र छान्दसो दीर्घः।

याज्ञिकास्तु—अधियज्ञाधिदैवादिपक्षमाश्रित्यैवाभिमौ व्याचक्षते, समुद्रः=पार्थिवोऽग्निः, संमोदन्ते यस्मिन् यजमानाः इति। अथवा समुद्द्रवन्त्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः समुद्रः। तस्मात् ऊर्मिः=ऊर्मिवदुपर्युपरि उद्भूतः,

मधुमान्=माधुर्योपेतफलसमूहः; उदारत्=उद्गच्छति। अथवा वैशुनात्—ऊ-र्म्युत्पादकः रस उदारत्=उद्भूतः। अथवा समुद्रात्=समुद्रद्रवणसाधनात् आदित्यात्—ऊर्मिः=उदकलक्षणो रस उदारत्। 'आदित्याज्जायते वृष्टिः' इति स्मृतेः। यद्वा समुद्रात्—अन्तरिक्षात्—उदकोत्पत्तेः, ऊर्मिः=उदकमुदारत्। अथवा समुद्रात्=उदकलक्षणात्—गवामूधसः सकाशात् ऊर्मिः=उज्ज्वलः क्षीररसः। एतत् घृतपक्षेऽपि समानम्। यद्यपि घृतं क्षीराज्जायते। तथापि तस्योधस उत्पत्तेरेवमुपचर्यते। शिष्टं वाक्यमग्न्यादिपक्षसु पक्षेष्वपि समानम्। अंशुना=दीप्त्या—अंशेन वा, अमृतत्वं=मोक्षम्। उप, सम्, आनट्। उपैति पूर्णः प्राप्नोति नरः। घृतस्य=दीप्तस्य क्षीरद्रव्यरूपस्य वा गुह्यं नाम=गोपनीयं नम-नसाधनं यदस्ति तद्ब्रवीमि। तत् देवानां जिह्वा=आस्वादकजिह्वास्थानीयं भवति। तदेव अमृतस्य नाभिः=बन्धकं भवति। तदुभयं घृतस्य नामेत्यर्थः। वयं यज-मानाः घृतस्य नाम प्रब्रवाम—स्तुमः। अस्मिन् यज्ञे नमोभिः=नमस्कारैः हवि-र्भिर्वा, धारयाम च। ब्रह्मा=परिवृढो देवः शस्यमानं=स्तूयमानमिदम्। उप-शृणवत्=शृणुयात्। चतुःशृङ्गः=चत्वारि शृङ्गाणि वेदचतुष्टयरूपाणि यस्य सः। आदित्याग्निपक्षेऽप्येवम्। इतरेष्वपि यास्कोक्तव्युत्पत्त्या शृङ्गशब्दो व्याख्येयः। गौरः अरुणवर्णः तादृशो देवः, एतत्=कर्म जगद्वा अवमीत्=उद्गिरति निर्वहतीत्यर्थः।

अथवा समुद्रात्=घृतमयात्, मधुमान्=रसवान्—ऊर्मिः—कल्लोलः उदारत्=उदगच्छत्, अक्षीणत्वात् घृतस्य समुद्रेणोपमानम्। अन्नदेवताभिप्रायं वा। सा ह्यक्षीणैव। उद्गत्य च स ऊर्मिः अंशुना=प्राणेन—जगत्प्राणभूतेनाग्निना सं-सङ्गत्यैकीभूय अमृतत्वं=अमरणधर्मित्वं, उपानट्=उपव्याप्नोतु। प्राणश्चान्नश्च एकीभूयामृतत्वं प्राप्नुत इत्यर्थः। तस्य घृतस्य गुह्यं=अविज्ञातं नाम अवि-

द्भिरज्ञेयं श्रुतिमन्त्रपठितं यदस्ति तत्कथ्यते इति शेषः। किं तदाह—देवानां जिह्वा—अत्यभिलापादेवानां जिह्वोत्थाननिमित्तं, अतोजिह्वाऽभीत्युक्तं, यच्च सर्व-प्रसादो नाम तदप्युच्यते, अमृतस्य नाभिः अमरणधर्मस्य नहनं—बन्धनम्। यो हि घृतमश्नाति स दीर्घायुर्भवति। अतोऽग्निविद्भिर्हूयते स्तूयते च घृतमिति भावः। यतो घृतनामोच्चारणमपि देवानां प्रियमतो वयं घृतस्य नाम प्रब्रवाम=अस्मिन् यज्ञे घृतनाम स्तुमः। नमोभिः=अन्नैः धारयाम यज्ञमिति शेषः। किञ्च ब्रह्मा= ऋत्विक्, शस्यमानं=स्तूयमानं, एतत् घृतनाम, उपशृणवत्=उपशृणोतु। यथा गौरः=गौरवर्णः शुद्धो यज्ञःएतत्,=घृतयज्ञफलरूपं, अवमीत्=उद्गिरति, यज्ञ-परिणामाभिप्रायम्। कीदृशो गौरः? चतुःशृङ्गः=चत्वार ऋत्विजः शृङ्गभूता यस्य सः।

## ( ४० )

## ( ससाधनादिब्रह्मात्मज्ञानप्रणवमन्त्रक्रियायज्ञशब्दग्रामादीनाम-लौकिकवृषभरूपकेण वर्णनम् )

ज्ञानमात्मैव, अन्यथा जडोऽस्मीति भानप्रसङ्गात्, आत्मा च ब्रह्म, एक-मेव तद्विषयोपाधिभेदेन भिन्नवद्दृश्यते, नित्यञ्च तदन्तःकरणादिवृत्त्यवच्छेदेनो-त्पत्तिविनाशादिवद् भ्रान्त्या प्रतिभाति। सामान्यविशेषात्मन्यात्र तदेवाज्ञानस्य साधकञ्च बाधकञ्च भवति, स्वप्रकाशचैतन्यरूपं यज्ज्ञानमात्रं तत्सामान्यमित्यु-च्यते, श्रवणादिसाध्याखण्डब्रह्माकारापरोक्षवृत्तिसमारूढं तदेव विशेष इति परि-गीयते। यथा तृणादेर्भासिकापि सूर्यप्रभा सूर्यकान्तं मणिमुपारुह्य तृणादिकं दहति, तथैव सविलासाज्ञानभासकमपि ज्ञानं विशिष्टवृत्तिं समारुह्य तस्य नाशकं भवति। तदेव विशिष्टवृत्तीद्धं महोदेवपदगम्यं सर्वेषु पदार्थेषु वियोतमा-

सान्तरङ्गबहिरङ्गसाधनं सफलं साधिष्ठानं सोपाधिकमात्मज्ञानं सर्वाभीप्सितं- 'अर्थालङ्काररहिता विधवेव सरस्वती ।' 'किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्तते ।' 'न कान्तमपि निर्भूषं विभाति वनितामनम् ।' इत्यादिकं रसिकरूपकविन्यायमादृत्य चेतश्चमत्कृतिनिदानयाऽलौकिकवृषभरूपकालङ्कृतभाषया निरूपयति—

ॐ चत्वारि शृङ्गा त्रयो अस्य पादा,
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति,
महो देवो मर्त्याँ आविवेश ॥

( शु० य० १७ । ९१ । ऋग्वेद. ४ । ५८ । ३ ) (तै. आ. १० । १० । २ । नि० १३ । ७ )

यो वृषभः=अद्वैतब्रह्मात्मज्ञानलक्षणोऽलौकिको P बलिवर्दः स कीदृशः ? इत्यत आह—महोदेवः=महः=महान्—महद्भिर्देवर्षिब्रह्मर्षिराजर्षिदेवराजादिभिरपि पूज्यतमः—कल्याणसाधनत्वेन वैरप्यङ्गीक्रियमाणः—सर्वोपजीव्यः इत्यर्थः । महति—पूजयति, मह्यते पूज्यते सर्वैरपि वेति तद्व्युत्पत्तेः 'मह पूजायां' स्मरणात् । महशब्दोऽकारान्तोऽत्र घञर्थे कविधानमिति कर्मणि कान्तः । यद्वा महः स्वप्रकाशचैतन्यलक्षणब्रह्मतेजोरूप इत्यर्थः । देवः=ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां प्रकाशकः, मर्त्यान्=मनुष्यान् आविवेश=आविशति, मनुष्यानप्यन्तर्बहिर्व्याप्य सदाऽवतिष्ठमान इत्यर्थः । तदेतदन्यत्रेऽप्याम्नातं भवति— 'मर्त्यानामन्त-

---

P द्विशृङ्गचतुष्पादेकशिरःकरद्वितयमात्रवद्लौकिकवृषभादस्य वैलक्षण्यादलौकिकत्वम् ।

महाँश्चरसि रोचनेन' ( ऋ० १० । ४ । २ । ) अमर्त्यो मर्त्यां२ऽ आविवेश ' ( ऋ० ८ । ४९ । १२ ) इति । त्वं हे भगवन् ! मर्त्यानां=मरणधर्माणां प्राणिनां अन्तः=मध्ये, महान्—ज्ञाननिधिरात्मा रोचनेन=प्रकाशेन स्फूर्तिशक्त्या चरसि=वर्तसे इति मन्त्रद्रष्टुर्महर्षेः संस्तवोऽयमित्यर्थः । सोऽयमद्वैतप्रत्यगात्मबोधः परमाभीष्टकैवल्यमोक्षामृतवर्षकत्वेन वृषभ इत्यन्वर्थसंज्ञयाऽभिहितो भवति । तस्यास्य वृषभस्य चत्वारि शृङ्गाः=शृङ्गाणि—विवेकादिसाधनचतुष्टयसम्पत्तिरेव तस्य सर्वस्पृहणीयानि—नितान्तकमनीयानि चतुःसंख्याकानि विषाणानि सन्ति । यथा शृङ्गैर्वृषभः कमनीयः, तेन च तानि तथा प्रतिभान्ति । तथोद्देश्यसाधकानि प्रयत्नातिशयेन प्राप्तानि तानि विवेकादिसाधनानि प्रशंसनीयतया कमनीयानि प्रतिभान्ति, सिद्धैस्तैरभीप्सितं साध्यमात्मज्ञानमपि तथैव प्रतिभाति, अतस्तत्सारूप्यम् । तथा चाम्नायते—'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति ।' (बृ. ४ । ४ । २३ ) इति । यद्वा तत्त्वमस्यादिमहावाक्यचतुष्टयमेव शृङ्गाणि तस्य, श्रुतिमौलिषु सर्वासूपनिषत्सु तेषां विषाणवत् प्राधान्यात् । त्रयो अस्य पादाः=तत्प्राप्तिसाधनभूताः श्रवणमनननिदिध्यासनान्येवास्य त्रयः पादाः, पद्यते—गम्यते—प्राप्यते ब्रह्मात्मसाक्षात्कार एभिरिति करणव्युत्पत्तेः, तदेतदात्मदर्शनशुद्धिरिव श्रवणादित्रयं तत्साधनत्वेन श्रुत्यन्तरेणापि समाम्नातं भवति—'आत्मा वा अरे ! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।' ( बृ. २ । ४ । ५ ) इति । त्रयो अस्येत्यत्र 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावः । तस्य द्वे शीर्षे=शिरसी, जीवन्मुक्तिः विदेहमुक्तिश्च तस्य द्वे मस्तके—उत्तमाङ्गस्थानीये । शीर्षशब्दोऽकारान्तः क्लीबः । अस्य सप्त हस्तासः=चिदाभासत्याविद्याऽऽवरणविक्षेपपरोक्षापरोक्षज्ञानशोकापगमनिरङ्कुशतृप्तिरूपाः सप्त अवस्था

एव हस्तस्थानीया इत्यर्थः। हस्तासः इत्यत्र 'आज्जसेरसुक्' इत्यसुक्। यश्च त्रिधा बद्धः=भगवद्गीतोपनिषद्ब्रह्मसूत्ररूपवेदान्तप्रस्थानत्रय्या बद्धः=सम्बद्धः, तयैव तस्य निरूप्यमाणत्वात्; यद्वा सच्चिदानन्दात्मकभावत्रयेण बद्धः=तेन रूपेण तस्य सर्वत्रोपलभ्यमानत्वात्। सोऽयं वृषभो ब्रह्मविदि तत्त्वदर्शिनि महापुरुषे वर्तमानः सन् तद्द्वारा रोरवीति=अत्यर्थं शब्दं करोति—'धन्योऽहं कृतकृत्योऽहमहो ज्ञानमहो गुरुरहो शास्त्रमि'त्यादिलक्षणानि लोकोत्तरप्रहर्षसन्तोषानन्दसूचकानि भाषणानि पौनःपुन्येन तनोतीति यावत्। यद्वा रोरवीति=मुमुक्षून् स्वयमेव श्रुतियुक्त्याद्यवलम्बनेनात्यर्थं पौनःपुन्येन स्वस्वरूपमुपदिशतीत्यर्थः। 'रु शब्दे' यङ्लुगन्तम्।

अथवा सर्वतोमुखस्यातिगम्भीरस्य सूत्ररूपस्य भगवतो वेदस्य विशिष्टानेकार्थप्रतिपादनस्य भूषणत्वात्। सर्वसाधकाराध्यतमं निखिलमन्त्रशिरोरत्नं प्रणवमन्त्रमपि वृषभरूपकेण वर्णयति—चत्वारि शृङ्गा इति। अस्य=प्रणवमन्त्ररूपस्य अक्षरब्रह्मणः ब्रह्मवाचकत्वात् प्रतिमादिवत्, ब्रह्मप्रतीकत्वाच्च तस्य तत्त्वम्। चत्वारि=अकारोकारमकारार्धमात्रालक्षणानि, शृङ्गाः=शृङ्गाणि। अस्य त्रयः पादाः=पद्यते—गम्यते—अवगम्यते ब्रह्मतत्त्वमेभिरिति व्युत्पत्तेः। ब्रह्मतत्त्वबोधकाः—अध्यात्मं त्रयः पादाः विश्वतैजसप्राज्ञाः, अधिदैवं विराड्ढिरण्यगर्भाव्याकृतानि। अस्य द्वे शीर्षे=उत्तमाङ्गस्थानीये चिदचिद्रूपे द्वे ज्ञानक्रियालक्षणे शक्ती। तथैवास्योङ्कारब्रह्मणो भूरादयः सप्त लोकाः हस्तासः=हस्तस्थानीयाः, यश्च प्रणवः त्रिधा बद्धः=अकारोकारमकारेषु विश्वादिभिर्विराजादिभिश्च त्रिप्रकारेण संबद्धः, एतादृशः प्रणवो वृषभः=इष्टसिद्धीनां वर्षिता। अस्य वृषभरूपत्वञ्च संहितोपनिषदाम्नातम्—'यश्छन्दसामृषभो विश्वरूपः' (तै. आ. १। ४। १) इति। एतादृशो वृषभः प्रणवो मन्त्रः, महः=स्वयंप्रकाशं तेजोरूपं ब्रह्मतत्त्वं

रोरवीति=प्रतिपादयितुमत्यर्थं शब्दं करोतीत्यर्थः, अतिशयेन प्रतिपादयतीति यावत्। प्रणवप्रतिपाद्यं तदेव तत्त्वं स्पष्टीक्रियते—देवः=परमेश्वरो मर्त्यान्= मनुष्यादिदेहान् आविवेश=सर्वतः प्रविष्टः '**स एष इह प्रविष्ट आनखाग्रेभ्यः**' ( बृ० १ । ४ । ७ ) इति श्रुत्यन्तरात्। इति।

अथाधियज्ञे—वृषभरूपेण क्रियायज्ञमपि प्रतिपादयति—यो यज्ञाख्यो वृषभः= कामानां—काम्यानां वर्षिता, यस्य चत्वारि शृङ्गाणि—ब्रह्मोद्गातृहोत्रध्वर्य्याख्यानि, त्रयः पादाः=ऋग्यजुःसामलक्षणास्त्रयो वेदाः पादस्थानीयाः। द्वे शीर्षे=हविर्धानप्रवर्ग्याख्ये। यद्वा पत्नी—यजमानौ द्वे शीर्षे। सप्त हस्तासः=सप्त होतारो वा हस्ता इव व्याप्रियन्ते, सप्त गायत्र्यादीनि छन्दांसि वा हस्ताः। यथ त्रिधा=त्रिप्रकारैर्बद्ध—प्रातःसवनमाध्यन्दिनसवनतृतीयसवनैर्बद्धः। यद्वा चत्वारो वेदाः शृङ्गाणि, त्रयः पादाः सवनानि प्रवृत्तिसाधनत्वात्पादा इत्युच्यन्ते। द्वे शीर्षे=प्रायणीयोदयनीये, सप्त हस्तासः छन्दांसि, हस्ता इवानुष्ठानस्य मुख्यं साधनं, छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति तत्र हस्तत्वव्यवहारः। त्रिधा—मन्त्र ब्राह्मणकल्पैर्बद्धो बन्धनमस्य तन्निष्पादकत्वम्। सोऽयं यज्ञो महोदेवः—सर्वेषां प्राणिनामुपजीव्यत्वात्। तदुक्तं—'**अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥**' ( मनु० ३। ७६ ) इति। मर्त्यान्=अधिकारिणोऽनुष्ठातॄन्—मनुष्यान्—आविवेश=आविशति, तान् व्याप्य तिष्ठतीत्यर्थः। सोऽयं रोरवीति=भृशं शब्दायते—होमाद्युपादितैः स्तुतिमन्त्रध्वनिभिरसौ रोरवीतीत्यर्थः॥

शब्दब्रह्मो व्याख्येयः—चत्वारि शृङ्गाणि—परापश्यन्तीमध्यमावैखरीरूपाणि—पदजातानि, यद्वा नामाख्यातोपसर्गनिपाताश्च शृङ्गाणि, नाम=सुबन्तम्।

नमस्याद्यात्मार्थे प्रति विशेषगीभवतीति तद्व्युत्पत्तेः । आख्यातं=तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलिवर्दन्यायेन । त्रयः पादाः=प्रथममध्यमोत्तमपुरुषाः । यद्वा त्रय' काला लडादिविषया भूतभविष्यद्वर्तमाना. । द्वे शीर्षे=द्वौ शब्दात्मानौ नित्य. कार्यश्च व्यङ्ग्यव्यञ्जकभेदेन । व्यङ्ग्यः=आन्तरः पश्यदिरूपः, व्यञ्जको वैखरीरूप । सप्त हस्ता =सप्त विभक्तिरूपाः । त्रिधा बद्धः=एकद्विबहुवचनैर्बद्ध. । यद्वा त्रिषु स्थानेषु—उरसि—कण्ठे—शिरसि च बद्धः—व्यञ्जकध्वन्यनुत्पत्तावनभिव्यक्त इत्यर्थ । वृषभः=कामानां वर्षणात् । यद्वा वृषभः इवायमन्यशास्त्राण्यथ. कृत्वा रोरवीति—शब्दं—गर्जनं करोति । व्याकरणज्ञानाधीनत्वादन्यशास्त्रज्ञानस्य । महान् देवः=शब्दब्रह्म, मर्त्यां मरणधर्माणो मनुष्यास्तानाविवेश, शब्दशास्त्रप्रतिपाद्यस्य तस्य वृषभाकारस्यान्तर्यामिरूपेणावेशः स्वाभेदाविष्करणाय, तस्य व्याकरणज्ञाप्यतया तद्विज्ञस्तदाविष्ट इव भवतीति भावः ॥

भगवानतिधन्यः सर्वप्रमाणमूर्धन्यो वेदोऽपि वृषभरूपेण व्याख्येयः—अभ्युदयनिःश्रेयसलक्षणसुखवर्षकत्वादस्य वृषभत्वम् । अस्य धर्मार्थकाममोक्षाख्या प्रतिपाद्या चत्वार. पुरुषार्था एव चत्वारि शृङ्गाणि । अस्य कर्मोपासनज्ञानकाण्डाख्या त्रयः पादाः, ऐहिकपारत्रिकसुखप्राप्तिसाधनत्वाच्चेषां पादत्वम् । साधनयज्ञफलयज्ञाख्ये द्वे शीर्षे । गायत्र्यादिलक्षणानि सप्त छन्दांस्येवास्य सप्त हस्तासः, त्रिधा=ब्राह्मणक्षत्रियवैश्याख्येषु त्रिषु द्विजेष्वेवायं बद्धः, तदध्ययने तेषामधिकृतत्वात् । अयं वेदाख्यो वृषभो महो=महान् पूज्य' सर्वलोकश्रद्धेयः । यतो देवः=सत्यधर्मज्ञानप्रकाशको नित्यनिरवद्यत्वात् । मर्त्यान् ब्राह्मणादिद्विजान् आविवेश, तेषु प्रविश्याय रोरवीति=सकलमनुजकल्याणकरान् सदुपदेशान् अत्यादरेण तनोतीत्यर्थः ।

न्यायशास्त्रमप्यत्र व्याख्येयम्—न्यायशास्त्रलक्षणो वृषभः, पदार्थतत्त्वज्ञानवर्षकत्वात् तस्य तत्त्वम्। अस्य प्रत्यक्षानुमानोपमानशब्दाख्यानि प्रमाणान्येव चत्वारि शृङ्गाणि। अस्य उद्देशलक्षणपरीक्षारूपाः सर्वत्रावगतिसाधनाः त्रयः पादाः। अर्थानर्थलक्षणे द्वे शीर्षे। धर्मविशेषप्रसूततत्त्वज्ञानसाध्योऽपवर्ग एवोपादेयतयाऽर्थः। दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानलक्षणः संसारबन्ध एव हेयतयाऽनर्थः। अस्य द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्या वर्णनीयाः सप्त पदार्था एव सप्त हस्तासः। त्रिधा=वादजल्पवितण्डाभिः तिसृभिः कथाभिरयं बद्धः। एतादृशोऽयं वृषभो महोदेवः स्तुत्यः। मर्त्यान्=वैदिकपथपथिकानास्तिकान् मनुजान् आविवेश, तेषु प्रविष्टः सन् रोरवीति=नास्तिकमतानि खण्डयितुं अतिशयेन गर्जतीत्यर्थः। एवं योगादिशास्त्रमपि व्याख्येयम्॥

संसारोऽपि वृषभरूपेण व्याख्यातुं शक्यः, तथाहि—अजस्रं वैषयिकसुखदुःखरूपमूत्रवर्षणादस्य वृषभत्वम्। ब्राह्मणादयश्चत्वारो वर्णाः, ब्रह्मचर्यादयश्च चत्वार आश्रमा वा एवास्य शृङ्गाः। पाश्चात्यविद्वांसोऽपि—चातुर्वर्ण्यभेदकाः स्वकृतानेकविधपरीक्षयोपलब्धाः—'ओ' 'ए' 'बी' 'एबी' इत्येवं रूपाः चतुर्विधाः रुधिरप्रभेदाः सर्वजनेषु सन्ति। तदनुसारेण जनानां सात्त्विकादिरूपाः विभिन्नाः स्वभावा अस्माभिरवलोक्यन्ते इति वदन्ति। अत एव संसारमनुजानां चातुर्विध्यं निर्विवादं सिद्धम्। अस्य कामक्रोधलोभाख्याः त्रयः पादाः संसारगत्यागतिप्रयोजकत्वात्तेषां पादत्वम्। हर्षशोकहानिलाभादिलक्षणो द्वन्द्व एव तस्य द्वे शीर्षे, यद्वाऽहंताममते एव द्वे शीर्षे। भूरादयः सप्त लोका एवास्य सप्त हस्तासः। त्रिधा=जाग्रत्स्वप्नसुषुप्तिलक्षणेनावस्थात्रयेण कालत्रयेण वा शुभाशुभमिश्रलक्षणकर्मत्रयेण वा उत्तममध्यमकनिष्ठलक्षणप्रकारत्रयेण वाऽयं बद्धः। अयं संसाराख्यो वृषभः, महः—महान्, अनादित्वादपारत्वाच्चास्य महत्त्वम्। 'नान्तो न चादिर्न

च सम्प्रविष्टा ' (गी. १५ । ३) इति स्मरणात्। नामरूपगुणक्रियाजात्यादिभिरस्य विद्योतनात् देवत्वम्। मर्त्यान्=मर्त्यदेहात्माभिमानिनोऽज्ञान् मनुजादीन् अयं समारवृषभ आविवेश, आविश्य च तेषु रोरवीति=अयमहं ! ममेदं ! हा ! हा ! हन्त ! हन्त ! सुखी—दु खी इत्यादिरूपान् मिथ्यामोहशोकादिसूचकान् शब्दान् अतिशयेन करोतीत्यर्थ ।

अनयर्चा जीवात्मापि व्याख्येय —अमृतो महादेवो मर्त्यान्—मरणधर्मकान् स्थूलादिदेहान् जीवात्मना प्रविवेश। तेभ्योऽविद्यया लोहादिवाग्नि तादात्म्यापन्नो बभूव। [1]इयमेवात्र तविविक्तयोरपि चिज्जडयो मर्त्यामर्त्ययोरात्मानात्मनो र्मिथ्याज्ञानलक्षणा ग्रन्थिरित्युच्यते। नामरूपातीतो महादेवो नामरूपव्यवहारविषय इव, अमूर्तोऽपि मूर्त इव, महानप्यल्प इव मर्त्यसम्पर्कादभवत्। तथाऽप्यय वस्तुतो वृषभ =श्रेष्ठ इन्द्र परमात्मैवास्ति। तस्य मनबुद्धिचित्ताहङ्कारलक्षणानि चत्वारि शृङ्गाणि। कर्मोपासनज्ञानान्येवास्य त्रय पादा । त्रिपादेकपाल्लक्षणे सान्तानन्ते द्वे शीर्षे। सप्त प्राणा एवास्य सप्त हस्तास । निस्त्रैगुण्योऽपि सत्त्वादिभिस्त्रिभिर्गुणैरय बद्ध । सोऽय रोरवीति=अतिशयेन रौति—पारमार्थिक स्वस्वरूप विस्मृत्य मिथ्याव्यवहारविषयाननेकान् शब्दाननादिकालत कुर्वन् सन् वर्तते। अमृत महद् ब्रह्मैवाविद्यया नामरूपाभ्या ससृष्ट सत् मर्त्योऽल्पो जीवोऽभवदित्यत्र शतपथब्राह्मणश्रुतिरप्यस्ति प्रमाण—' **अथ ब्रह्मैव परार्द्धमगच्छत्। तत्परार्द्धं गत्वा ऐक्षत कथं न्विमाँल्लोकान प्रत्यवेयमिति। तद् द्वाभ्यामेव प्रत्यवैद्, रूपेण चैव नाम्ना च** ' (११ । २ । ३ ।) इति। ब्रह्मज्ञानादज्ञान बाधित्वा स्वस्वरूपममृतममृत सदा प्राप्त ब्रह्म पुन प्राप्तमिव

---

1. कल्पिततादात्म्यापत्तिरेवेति।

शक्यते इत्यध्याह–'मर्त्या ह वाग्रे देवा आसुः। स यदैव ते ब्रह्मणाऽऽपुरथामृता आसुः।' ( श० ब्रा० ११ । २ । ३ । ६ ) इति।

अथ सूर्योऽपि व्याख्यायते–अस्य आदित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः। एता श्रयणार्थत्वात्, शृङ्गाणीत्युपचर्यन्ते। त्रयो वेदाः पादस्थानीया भवन्ति, गमनसाधनत्वात्। 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' (तै. ब्रा. ३ । १२ । ९ । १ ) इत्यादिश्रुत्या सूर्यस्य वेदत्रयेण गतिराम्नाता। अहश्च रात्रिश्चेति द्वे शिरसी, त्रिषु स्थानेषु क्षित्यादिषु अन्यायात्मकत्वेन बद्धः। ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्बद्धो वा। सप्त रश्मयः, षड्विलक्षणा ऋतवः, एकः साधारण इति वा सप्त हस्ता भवन्ति। वृषभः=वर्षिता, रोरवीति=शब्दं करोति वृष्ट्यादिद्वारा, स महो=महान् देवो मर्त्यानाविवेश तन्नियन्तृतया। 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ. १ । ११५ । १ ) इतिश्रुतेः।

एवमन्यादिपक्षेऽप्ययं मन्त्रो योज्यः। इदमत्र प्रत्येतव्यम्–अस्य मन्त्रस्य प्रतिपाद्यो वृषभो न लोकदृष्टः, अतो लोकेऽसतोऽदृष्टस्यार्थस्याभिधायके मन्त्रेऽस्मिन् गौणस्यार्थस्योपपद्यमानस्य कल्पनं तत्स्तुतिप्रयोजनाय क्रियते। लोकेऽप्येवं गौणप्रयोगा दृश्यन्ते–यथा 'चक्रवाकस्तनी, हंसदन्तावली, काशवस्त्रा, शैवलकेशिनी' इत्येवं नद्यपि युवतिसुन्दरीरूपेण स्तूयते। एवं 'ओषधे त्रायस्व' 'शृणोत ग्रावाणः' इत्याद्यचेतनसम्बोधनानि 'यस्मिन् केशवपने ओषधिरपि त्रायते, तत्र वपनकर्ता नापितः त्रायेत' इत्यत्र किमु वक्तव्यम्। एवं यदा ग्रावाणः–पाषाणाः जडा अपि प्रातरनुवाकं शृण्वन्ति, तदा विद्वांसो ब्राह्मणाः शृणुयुरित्यत्र कोऽयं विस्मयः' इत्येवं स्तुतिपरत्वेन योज्यन्ते। तथै-

÷ ब्रह्मणा=ब्रह्मात्मभावेनेत्यर्थः।

वालौकिकवृषभनिरूपकोऽयं मन्त्रो यत्र यत्राभीष्टे शास्त्रप्रतिपाद्ये विषये वृषभ-शृङ्गादियौगिकशब्दार्थसारूप्यमुपपद्यते, तं तं स्तोतुं प्रवर्तमानो भवति। अत एव भगवतो वेदस्यालौकिकभाषयाऽलौकिकं बहुविधमर्थं वर्णयतोऽन्यगम्यमानम-लौकिकत्वं तदीयगाम्भीर्यमाधुर्यप्रसादादिदिव्यगुणानाविष्कुर्वदनन्यसामान्यं महि-मानं प्रख्यापयतीति सर्वं निर्मलम् ॥

× × ×

## ( ४१ )

### ( एकस्यैव परमात्मनस्त्रिरूपेणावस्थानस्य वर्णनम् )

यथा एक एव देवदत्तो विभिन्नक्रियोपाधिवशेन पाठकः पूजकः पाचक इति—व्यपदिश्यते, तथा एक एव परमात्मा मायोद्भासितपिण्डब्रह्माण्डावस्था-त्रयोपाधिवशेन विश्वः तैजसः प्राज्ञः, विराट् हिरण्यगर्भ ईश्वरश्चेति त्रेधा समा-ख्यायते। स एव परमात्मा कार्यकारणोपाधिं प्रविश्य जीवो भूत्वा जाग्रदवस्थायां पिण्डाख्यव्यष्टिस्थूलसूक्ष्मकारणाविद्यात्मकशरीरत्रितयाभिमानी सन् विश्वात्मा इत्युच्यते। स एव स्वप्नावस्थायां सूक्ष्मशरीरकारणाभिमानी सन् तैजसात्मा इत्युच्यते। स एव सुषुप्तौ कारणाविद्याभिमानी सन् प्राज्ञ इत्युच्यते। स एव ब्रह्माण्डाख्यसमष्टिस्थूलसूक्ष्मशरीरतत्कारणमायोपहितः सन् विराट् वैश्वानर इत्युच्यते। स एव समष्टिसूक्ष्मशरीरतत्कारणमायोपहितः सन् हिरण्यगर्भः सूत्रात्मा इत्युच्यते। स एव केवलमायोपाधिकः सन् ईश्वर इत्युच्यते। स एव मायो-पाधिरहितः शुद्धः केवलो निरञ्जनः एक एवाद्वयः परमात्मा भवति। यथा लोके तन्तुष्वोतप्रोतोऽपि पटोऽविचारेण तेभ्यः पृथगिव प्रतिभाति, परन्तु सम्यक् मीमांस्यमानः स एव सूत्रात्मावशेषो भवति तद्व्यतिरेकेण कथमप्यसौ नानु-

भूतो भवति। तथैव शुद्धे परमात्मन्येवोतप्रोता अपीमे विश्वादयोऽविचारेण पृथक्-भूता इव प्रतिभान्ति, परन्तु मीमांस्यमानास्ते शुद्धपरमात्ममात्रावशेषा भवन्ति। तद्व्यतिरिक्तास्ते कथमपि नानुभूता भवन्ति। अत एव यथा एकरूपे रज्जुखण्डे तदविद्योद्भासितानां सर्पसम्मूत्रधारादीनां, यथा चैकरूपे स्वप्नद्रष्टरि निद्रयोद्भा-सितानां स्वाप्निकानां गजरथतुरगादीनां नानारूपाणामध्यस्तत्वात्, तस्मात्तेषां पृथक्सत्त्वं न सिद्ध्यति, तथैव नानारूपाणां मायोद्भासितानां पिण्डब्रह्माण्डाद्यु-पाधीनामेकरूपे तस्मिन् परमात्मन्यध्यारोपितत्वादेव तेषामपि तस्मात्पृथक्सत्त्वं कथमपि न सिद्धं भवतीत्यतस्तेषामुपाधीनां वाचारम्भणमात्रत्वेन कल्पितत्वं तदु-पहितानां विश्वाद्यामनाञ्च सच्चिदानन्दलक्षणत्वेन तदनन्यत्वं युक्तमेव। तथा च तत्त्वमादिपदार्थशोधनशीलयाऽन्तर्मुखया शेमुष्याऽखण्डैकरसं सर्वाद्वैतमेकं पूर्णं तत्त्वं निश्चितं भवतीत्यभिप्रयन्नाह—

ॐ त्रिधा हितं पणिभिर्गुह्यमानं,
गवि देवासो घृतमन्वविन्दन्।
इन्द्र एक ँ सूर्य एकं जजान,
वेनादेक ँ स्वधया निष्टतक्षुः॥

(शु. य. १७। ९२। ऋ ४। ५८। ४। तै.आ. १०। १०। २।)

त्रिधा हितं=व्यष्टिस्थूलसूक्ष्मकारणशरीरलक्षणे पिण्डे विश्वतैजसप्राज्ञाख्येन त्रिप्रकारेण, समष्टिस्थूलसूक्ष्मकारणशरीरलक्षणे ब्रह्माण्डे विराड्हिरण्यगर्भाव्याकृता-ख्येन च त्रिप्रकारेण एकमेव ब्रह्मात्मतत्त्वं हितं=अवस्थितं, घृतं=दीप्तं स्वप्रकाशं तत् देवासः=देववत्सात्त्विकाः—अन्तर्मुखाः श्रवणादितत्पराः पुरुषाः, गवि=

वाचि=प्रणवतत्त्वमस्यादिमहावाक्यरूपायाम् । अन्वविन्दन्=अनु=क्रमेण, विचारानन्तरं वा लब्धवन्तः । कीदृशं तत् ? पणिभिर्गुह्यमानम्=पणिभिः=स्तोतृभिः=उपदेष्टृभिः श्रोत्रियब्रह्मनिष्ठैराचार्यैः 'पण व्यवहारे स्तुतौ च' स्मरणात् परमरहस्यत्वेन गोप्यमानं । यद्वा त्रिधा हितं गवि गुह्यमानं घृतं पणिभिः=निमित्तैः देवासः अन्वविन्दन् इत्यन्वयः कार्यः । त्रिधा हितमित्येतदेव विवृणोति—इन्द्रः=परमैश्वर्ययुक्तो विश्वाभिन्नो विराट् पुरुषः, एकं=जागरणरूपं स्थूलप्रपञ्चं, जजान=उत्पादितवान्, जनी प्रादुर्भावे स्मरणात् । परस्मैपदमार्षम् । सूर्यशब्दस्तेजस्वित्वेन हिरण्यगर्भमुपलक्षयति । स च तैजसाभिन्नो हिरण्यगर्भः, एकं=स्वप्नरूपं सूक्ष्मप्रपञ्चं जजान । वेनधातुः कान्तिकर्मा । वेनात्=सर्वदुःखराहित्येन कमनीयात्—अव्याकृतमायोपाधिकात् प्राज्ञाभिन्नपरमेश्वरात्—एकं=सुषुप्तिरूपं कारणाख्याऽविद्याप्रपञ्चं निष्पन्नमितिशेषः । स्वस्मिन्नेव धीयतेऽवधीयते इति व्युत्पत्त्याऽऽश्रयान्तररहिता सच्चिदानन्दलक्षणा प्रत्यक्चितिः स्वधारूपेणोच्यते, '**स भगवः ! कस्मिन् प्रतिष्ठित इति स्वे महिम्नि**' ( छां. ७।२४।१ ) इति श्रुत्यन्तरात्, तया स्वधया ब्रह्मात्मरूपया ते पूर्वमुक्ता इन्द्रसूर्यवेनाः निष्टतक्षुः=समन्विताः=ओतप्रोताः बभूवुः । यद्वा यतस्ते स्वधया समन्विताः, अतो निष्टतक्षुः=सत्त्वेन चित्त्वेन आनन्दत्वेन च स्वस्वरूपं निष्पादितवन्तः प्रकाशितवन्त इत्यर्थः । 'अस्मी' ति विश्वाधात्मनां सत्त्वस्य 'भामी' ति चित्त्वस्य, 'अप्रियो न भवामी' त्यप्रियत्वनिषेधानुभवेनानन्दत्वस्य च प्रकाशकत्वं सर्वानुभवसिद्धमिति भावः । एतेन एकस्यैव त्रिधाऽवस्थितत्वेन समानलक्षणत्वेन च्चाविद्याको पाधिभेदभिन्नानामपि विश्वादीनां परमार्थतस्तदनन्यत्वं तत्त्वमस्यादिमहावाक्यविचारनिश्चिताखण्डैकरसत्वलक्षणं सूचितं भवति । जागरणादिद्वैतप्रपञ्चस्योत्पत्तिलिङ्गेनानिर्वचनीयत्वलक्षणं मिथ्यात्वमपि च । यतः परमार्थसतो

ऽत्यन्तासतश्च प्रमातत् शशशृङ्गवदोपपत्त्ययोगेन, तद्विलक्षणमनिर्वचनीयमेवोपपद्यते सिनश्यति चेति सिद्धान्तितत्वादिति ।

अत एव श्रुत्यन्तरे जागरणादीनां त्रयाणां मिथ्यात्वबोधकं स्वप्नत्वं स्पष्टमाम्नायते—' तस्य त्रय आवसथास्त्रयः स्वप्ना:, अयमावसथोऽयमावसथो ऽयमावसथ इति ' ( ऐ. आ. २ । ४ । ३ ) इति । अस्यायमर्थः—यथा महाराजस्य क्रीडार्थमुपर्यधोभावेन वर्तमानाः प्रासादस्य भूमयो निर्मीयन्ते, एवमस्यात्मनः पिण्डब्रह्माण्डाख्यशरीरमध्ये त्रिधा प्रविष्टस्य क्रीडार्थं, त्रय आवसथाः =त्रीणि स्थानानि निर्मितानि, त्रिषु तेषु स्थानेषु त्रयः स्वप्नाः तेन तेनात्मनाऽवलोक्यन्ते, अयमावसथ इत्यादिना नेत्रकण्ठहृदयाख्यानि स्थानानि हस्तप्रेण प्रदर्श्यन्ते, तेषु हि जागरणाद्यवस्थानां निष्पत्तिः । ननु—जागरणसुषुप्त्योः स्वप्नादन्यत्वे त्रयः स्वप्ना इत्ययुक्तमिति चेन्न, स्वप्नलक्षणोपेतत्वात्, विद्यमानं वस्तुतत्त्वं तिरोधाय समुत्पन्नोऽन्यथाप्रतिभासः स्वप्न इति तल्लक्षणम् । जागरणसुषुप्त्योरपि विद्यमानस्य ब्रह्मतत्त्वस्य तिरोधानेनान्यथाभूतस्य जीवतत्त्वस्य चावभास इत्यस्ति लक्षणम् । तस्माल्लोकप्रसिद्धस्य स्वप्नस्यैकत्वेऽपि लक्षणसिद्धाः स्वप्नात्रयः । इति सर्वमनाविलम् ।

अथाधियज्ञादिदृष्ट्येदम्—पणिभिः=असुरैः, गवि=गोषु, त्रिधा=क्षीरदध्याज्यभेदेन त्रिप्रकारं हितं निहितं, गुह्यमानं=गोपितं, घृतं=दीप्तं रसरूपं वा द्रव्यं, देवास =देवाः, अन्वविन्दन्=अलभन्त, तत्र इन्द्र एकं क्षीरं जजान=उदपादयत् । सूर्य एकं जजान, वेनात्=कान्तिमतः—अग्नेर्गमनवतो वायो र्वा एकं घृतं स्वधया =अन्नेन निमित्तेन रूपेण वा साधनेन निष्टतक्षुः=निरपादयन् देवाः । इति ।

× × ×

# ( ४२ )

( तेजोवीर्यबलौजोमन्युसहसां प्राप्तये भगवत्स्तुतिप्रार्थनम् )

ॐ तेजोऽसि तेजो मयि धेहि,
वीर्यमसि वीर्यं मयि धेहि ।
बलमसि बलं मयि धेहि,
ओजोऽस्योजो मयि धेहि ।
मन्युरसि मन्युं मयि धेहि,
सहोऽसि सहो मयि धेहि ॥

( शु० य० १९।९ )

हे परमात्मन् ! सर्वदेवात्मन् ! हे तेजोनिधे ! त्वं तेजोऽसि=तु सद्दिव्यदीप्तिमान् त्वमसि, आदित्यादिषु स्थितं जगद्भासकं प्रसिद्धं यत्तेजस्तत्सर्वं तावकमेव, अतो मयि त्वच्छरणागते त्वदुपासके भक्ते तादृशं तेजो धेहि=स्थापय, मां तेजस्विनं कुर्विति यावत् । यद्वा तेजः=प्रागल्भ्यं=पराभिभवनसामर्थ्यं परैश्चानभिभाव्यत्वलक्षणं, यत एतादृशतेजस्वित्वमन्तरेण विघ्नकर्तॄन् शत्रूनभिभवितुं सर्वविधमभ्युदयं निःश्रेयसं कल्याणं वा साधयितुं न शक्नोति कश्चनापि । अतः कृपया मह्यं तत्सामर्थ्यं समर्प्यताम् । तथा च श्रुत्यन्तरमपि—'आयुष्मन्तं मां तेजस्वन्तं मनुष्येषु कुरु ।' ( मै. सं. ४।७।३ ) इति । हे सर्वशक्त्याधार ! त्वं वीर्यमसि=सर्वस्य बीजं पुष्टिहेतुस्त्वमसि अतस्त्वं मयि वीर्यं धेहि, त्वदनुग्रहादहं वीर्यवान्—ऊर्ध्वरेता ब्रह्मचारी—शारीरकशक्ति—भव्य—

पुष्टि—नव्योत्साहसम्पन्नो भूयासम्। वीर्यधारणलक्षणस्य ब्रह्मचर्यस्य महत्त्वं शास्त्र-प्रणेतृभिर्महद्भिः परिगीयते—'मरणं वीर्यपातेन जीवनं वीर्यधारणात्। सामर्थ्यमिन्द्रियाणाञ्च बलं बुद्धिः स्मृतिर्धृतिः॥ सुकान्तिर्जायते पुष्टिर्देहस्य वीर्यधारणात्॥ प्राप्नोति वीर्यनाशाद्धि सर्वनाशं व्रजत्यधः। यावद्वीर्यं स्थिरं देहे तावत्कालभयं कुतः। आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः। क्षये ह्यस्य बहून् रोगान् मरणं वा निगच्छति॥ तस्माद्वीर्यं मनश्चैव रक्षणीयं प्रयत्नतः॥' इति। 'मृत्युव्याधिजरानाशि पीयूषं परमौषधम्॥ ब्रह्मचर्यं महद्रत्नं सत्यमेव वदाम्यहम्॥ शान्तिं कान्तिं स्मृतिं ज्ञानमारोग्यं चापि सन्ततिम्। यदीच्छति महद्धर्मं ब्रह्मचर्यं चरेदिह॥' इति। अत एवाथर्वणश्रुतिरपि—'ब्रह्मचर्यवत एव ब्रह्मसाक्षात्कारं, तस्यैवाचार्यत्वं, प्रजापतित्वञ्चाह—'ब्रह्मचारी ब्रह्म भ्राजद् बिभर्ति।' ( अथर्व. ११।५।२४ ) इति। 'आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः।' ( अथर्व. ११।५।१६ ) इति च। एवमात्मज्ञानसंयुक्तस्य रेतोधारणलक्षणस्य ब्रह्मौदनपदाभिधेयस्य ब्रह्मचर्यस्य महामहत्त्वमस्य आथर्वणो निगमोऽप्याह—यस्मात्पक्वादमृतं संबभूव, यो गायत्र्या अधिपतिर्बभूव। यस्मिन् वेदा निहिता विश्वरूपाः तेनौदनेनाति तराणि मृत्युम्॥' 'अपबाधे द्विषन्तं देवपीयुं सपत्ना ये मेऽप ते भवन्तु। ब्रह्मौदनं विश्वजितं पचामि शृण्वन्तु मे श्रद्दधानस्य देवाः॥' ( अथर्व. ४।३६।६+७ ) इति। अयमर्थः—यस्मात्=ब्रह्मौदनात् पक्वात्, अमृतं=मोक्षानन्दलक्षणं संबभूव=संपद्यते। तथा, यः—परिपक्वब्रह्मचर्यव्रतेन, गायत्र्याः=अखिलछन्दसामभिमाया महामन्त्ररूपायाः अधिपतिर्बभूव=भवति गायत्रीमन्त्रजपध्यानसिद्धिसम्पन्नो भवतीति यावत्। तथा यस्मिन्

विधृतपरिपक्वरेतोरूपे ब्रह्मौदने एव वेदाः=ऋग्यजुःसामाद्याः, विश्वरूपाः=शाखाभेदेनानन्ताः, विहिताः=निक्षिप्ताः—अवस्थिताः सन्ति—ब्रह्मचर्यतपोयुक्तस्यैव महापुरुषस्य यथावदखिला वेदाः प्रतिभान्तीति यावत् । तेन ओदनेन, मृत्युं=जन्ममरणाद्यनेकदुःखनिदानमज्ञानादिरूपं, अतितराणि=अतिक्रामामि—अत्येमि—मृत्योःपारंगतो भवामीति यावत्। अत एवाहं ब्रह्मौदन—रूपब्रह्मचर्य प्रभावेण स्तृपन्तं=हिंसन्तं—ज्ञानविज्ञाननाशकं दुरासदं कामरूपं शत्रुं अपहन्मि । कीदृशं तं देवपीयुं=पीयतिर्वधकर्मा, देवत्ववधकर्तारमिति यावत् । अवबाधे=अपहन्मि । तथा मे=मम, ये सपत्नाः=शत्रवः—प्रमादादिरूपाः तेऽपि अप=अपहता भवन्तु । तदर्थमहं विश्वजितं=सर्वस्य जेतारं—विजयिनं ब्रह्मौदनं—ब्रह्मचर्यलक्षणं, पचामि=परिपक्वं करोमि । इत्येवं, श्रद्दधानस्य=ब्रह्मौदनपरिपक्वे—श्रद्धायुक्तस्य, मे=मम वाक्यं देवाः=शुभसंस्कारभाजो दैवीसम्पत्संयुक्ता भवन्तो शृण्वन्तु=आकर्णयन्तु । मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायादत्र देवा उत्तमा मनुष्या एव प्रत्येतव्याः । मन्त्रदृष्टा ऋषिरुपदिशति—यथाऽहं अमृतत्वप्राप्तये, ब्रायव्याधिपत्याय, वेदतत्त्वज्ञानलब्धये, कल्याणपरिपन्थिकामादिशत्रुवधाय च विश्वविजयिब्रह्मौदनं परिपक्वं करोमि, चकार वा, तथा भवद्भिर्मनुजैर्देवत्वाहैं कर्तव्यमिति । हे बलेश्वरप्रभो ! त्वं बलमसि=सकलसामर्थ्यसंयुक्तस्त्वमसि, अतो मयि बलं धेहि । यतो बलस्य प्रसिद्धं माहात्म्यं श्रुत्यन्तरेऽप्याम्नायते ।—'स यदा बली-भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति ।' (छां. ७ । ८ । १) 'बलेन लोकः तिष्ठति' (छां. ७ । ८ । १) 'नायमात्मा बल-हीनेन लभ्यः' (मुं. ३ । २ । ४) इति । यस्मान्नैर्बल्यमेव पापसन्तापहेतुः, तस्मान्निर्बलो जनः सुखेन जीवितुमपि न शक्नोति, कथञ्चिज्जीवन्नपि प्रबलानां पदाघातं सहन्नेव रुदन् सन् जीवति । अतो मयि कामरागवर्जितं

सात्त्विकं पुण्यमयं देशप्राणिधर्मोपकारकमात्मलाभप्रयोजकं बलं स्थाप्यतामिति प्रार्थनं मे । हे जगदीश्वर ! विश्वनाथ ! त्वमोजोऽसि=अद्भुतपराक्रमो महाप्रतापस्सौन्दर्यलावण्यकान्तिसुधानिधिस्त्वमसि, अतो मयि ओजः=प्रतापं-पराक्रमं सौन्दर्यं लावण्यं कान्तिं धेहि । तत्प्रभावादहं सर्वत्र सदा विजयी भूयासम् । हे दुष्टविध्वंसक ! महाकालेश्वर ! त्वं मन्युरसि=मानसं प्रज्वलनं कोपस्त्वमसि, अन्याय्यमत्याचारं पापाचारञ्च दृष्ट्वा त्वमत्युग्रकोधो भवसि । साधुपरिरक्षणाय धर्मसंस्थापनाय च दुष्टान् विध्वंससे । अतो मयि त्वं तादृशं मन्युं धेहि, येनाहमपि बाह्याभ्यन्तरान् दोषान् शत्रूंश्च दृष्ट्वा जातमन्युस्तन्निवारणाय समर्थो भवेयम् । हे अचलेश्वर ! निर्विकार ! विभो ! त्वं सहोऽसि=सहनशीलोऽसि, अनर्थबहुले प्रपञ्चे विद्यमानोऽपि सदा शान्तेऽनन्ते स्वमहिम्नि निर्विकारः प्रतितिष्ठसि, सहते इति सहः, अकारान्तोऽयं, सह मर्षणे स्मरणात् । अतो मयि तादृशं सह =सहं-सहनशीलत्वं धेहि । येनाहमपि सुखदुःखादिद्वन्द्वसहिष्णुर्निर्विकारो भूयासम् । कामादिवेगान् सोढुं शक्नुयाम् । 'इदं सर्वं द्वैतजातं नामरूपात्मकमनन्तचिदानन्दाद्वयात्मन्यविद्यया कल्पितं, आत्मैवैकः परमार्थः पूर्णः समरसः स एवाहमिति ' तत्त्वज्ञानेनाज्ञानं तत्कार्यं द्वैतं बाधित्वा शशशृङ्गादाविव प्रयोजनाभावात् द्वन्द्वविषयकधीवृत्त्यनुदयेन सदा निर्विकारः पूर्णस्वस्थः स्वात्मारामो भूयासमिति मे महत्वाकांक्षां सफलां विधेहीति तत्त्वम् । तदेतत्स्मृतं भगवता श्रीकृष्णेन गीतासु-' तांस्तितिक्षस्व भारत ! ' ( गीता. २ । १४ ) ' शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ ' (गी. ५ । २३) इति । महाभारते शान्तिपर्वण्यपि-' वाचो वेगं मनसः क्रोधवेगं विधित्सावेगमुदरोपस्थवेगम् । एतान् वेगान् यो विषहेदुदीर्णांस्तं मन्येऽहं ब्राह्मणं वै मुनिञ्च॥' ( शा० २९९ । १४ ) इति ॥

## ( ४३ )

( व्रतदीक्षादक्षिणाश्रद्धाभिः सत्यं ब्रह्म दृष्टं भवति )

सत्यस्य परस्य ब्रह्मणः साक्षात्कारसाधनानि व्रतादीन्याह—

**ॐ व्रतेन दीक्षामाप्नोति,**
**दीक्षयाऽऽप्नोति दक्षिणाम् ।**
**दक्षिणा श्रद्धामाप्नोति,**
**श्रद्धया सत्यमाप्यते ॥**

( शु० य० १९ । ३० )

व्रतेन=सत्यब्रह्मचर्यादियम—शौचसन्तोषादि—नियमलक्षणेन महाव्रतेन । दीक्षां=ज्ञानप्राप्तियोग्यतालक्षणमुत्तमाधिकारम् । यद्वा दीक्षां=करुणामृतवरुणालयस्य जगद्गुरोर्विश्वेश्वरस्य कृपापूर्णावलोकपीयूषपात्रतां; यद्वा दीक्षां=सद्गुरुब्रह्मनिष्ठप्रसादलभ्यां सद्विद्यामयीं शिक्षां, आप्नोति=प्राप्नोति । यथा यथाऽयं विवेकविचारशीलो दृढप्रतिज्ञो मानवो भूयांसि ब्रह्मचर्यादीनि व्रतानि समाचरति, तथा तथा प्रमादकृतेभ्यो दुरितेभ्यो निवर्तमानो विशुद्धसत्त्वः सन् प्रशस्तां योग्यतां, पात्रतां शिक्षां च समवाप्नोति । दीक्षास्वरूपमभिहितमभियुक्तैः—'दीयते ज्ञानसद्भावः क्षीयते पशुवासना । दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता ॥' इति । दीक्षया दक्षिणां=प्रतिष्ठां श्रियं ब्रह्मविद्यां च, आप्नोति । यदाऽयं दीक्षितोऽभयसत्त्वसंशुद्ध्यादिदिव्यसद्गुणमण्डनमण्डितो महात्मभ्यानामृतरसास्वादातिशान्तस्वान्तो भवति, तदा शास्त्राचार्येश्वरप्रसा-

दादुर्लभतमां ब्रह्मविद्यां समवाप्य सर्वेभ्यः प्रणामसहस्रार्पणेन विविधपुष्पफलद्रव्यप्रदानादि लक्षण परिचर्यया च सर्वतो नैकविधया सपर्याद्युपचारेण पूजितश्च धन्यभावमवाप्नोति तादृशोऽयमस्य दक्षिणाऽत्रावगन्तव्या। तदुक्तं—**उदारचरितस्य दीक्षितस्य महत्त्वं—'सर्वाभिमतदानेन, पूजनीया गुणान्विता। गुणवत्सङ्गमौपम्या, मृत्युरप्येति मित्रताम् ॥ उदारगुणयुक्ता ये, विचरन्तीह देहिनः। धरातलेन्दव-सङ्गाद्भृशं शीतलयन्ति ते ॥'इति।**
दक्षिणा=दक्षिणया विभक्तिलोपः श्रद्धा=ऋतम्भरां प्रज्ञामित्यर्थः, आप्नोति। 'श्रत्' इति सत्यनामसु निघण्टौ ( ३ । १० ) पठितम्। श्रत्=सत्य धीयते यस्यां बुद्धौ सा श्रद्धा सत्यावधारणशीला—निर्मला—स्थिरा—बुद्धिः, तया श्रद्धया—ऋतम्भराप्रज्ञया, सत्यं—ज्ञानमनन्तं स्वस्वरूपं ब्रह्म आप्यते=प्राप्यते।

## ( ४४ )

( आहारशुद्धि—शरीरस्वास्थ्य—प्राणेन्द्रियबुद्धिबलशक्ति—पुष्टप्रजोत्पत्ति—ऐहिकपारलौकिकाभ्युदय—प्राणसंयम—इन्द्रियमनः—शुद्धिस्थैर्य—ब्रह्मविद्योत्पत्ति—कल्याणाभयपदानां समवाप्तये परमेश्वराभ्यर्थनम् )

धार्मिको गृहस्थः स्वेष्टमाहारशुद्ध्यादिकमनेन प्रार्थयते—

**ओ३म् इदं हविः प्रजननं मे अस्तु**
**दशवीरं सर्वगणं स्वस्तये।**
**आत्मसनि प्रजासनि**
**पशुसनि लोकसन्यभयसनि।**

**अग्निः प्रजां बहुलां मे**
**करोत्वन्नं पयो रेतो अस्मासु धत्त ॥**

( शु० य० १९ । ४८ )

इदं=सन्निकृष्टं भोग्यत्वेनोपादीयमानं हविः=अत्यद्य जाठराग्नौ हूयमानं पयोदधिघृतौदनगोधूमादिरूपमाहारद्रव्यं स्वास्थ्यकान्तिपुष्टितुष्टिसम्पादकं सात्त्विकं शुद्धं प्राप्तं भवेत्, यत्खलु मे=मम गृहस्थस्य, प्रजननं=प्र—प्रकृष्ट—जनयति—उत्पादयतीति प्रजननं—प्रकृष्टबलबुद्धिकान्तिसंयुक्तमनोरमप्रजाया उत्पादनाय समर्थं, अस्तु=भूयात् । कीदृशं तत् ? दशवीरं=दश वीराः वीर्ययुक्ताः प्राणाः यत्र तत् । यस्मिन् हविष्यशिते सति दशानां=प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जयसंज्ञकानां वायुविकाराणां प्राणानां, चक्षुःश्रोत्रघ्राणरसनात्वक्वाक्पाणिपादपायूपस्थाख्यानां ज्ञानकर्मेन्द्रियात्मकदशप्राणानां वा वीर्यवत्त्वं, स्वास्थ्य, धर्ममर्यादानुवर्तित्वञ्च भूयादिति यावत् । '**प्राणा वै दशवीराः**' '**प्राणो ह्येवैतानि सर्वाणि भवति**' इति श्रुतेः । एतानि=ज्ञानकर्मेन्द्रियाणीत्यर्थः । तथा सर्वगणं=सर्वे गणाः स्वस्थाः—वीर्यवन्तो यस्मिन् तत् । यस्मिन् हविषि भुक्ते सति सर्वाण्यङ्गानि शिरोवक्षउदरादीनि स्वस्थानि वीर्यवन्ति च स्युरित्यर्थः । '**अङ्गानि वै सर्वे गणाः**' इति श्रुतेः । आहारशुद्ध्यैव सर्वं कार्यकरणसंघातं शुद्ध्यति । नान्यथा, तदभावे हि मानवो रुग्णस्तेजोबलबुद्धिविहीनः सर्वपुरुषार्थभ्रष्टश्च भवति । अत एव महता प्रयासेन स्वाभ्युदयकामैः शुद्ध आहारः सम्पादनीयः । तदुक्तं—'**यादृशं भक्षयेच्चान्नं बुद्धिर्भवति तादृशी । दीपस्तिमिरमश्नाति कज्जलञ्च प्रसूयते ॥**' इति । तादृशं हविर्मम स्वस्तये=ऐहलौकिकपारलौकिकाभ्युदयाय स्वेष्टविनाशाय वाऽस्तु ।

यद्वा यज्ञशिष्टं सर्वकिल्बिषनाशकममृतकल्पमन्नं हविः प्रजननत्वादिमहत्त्वसंयुक्तं मे प्रत्यहमदनाय भूयात् । तदुक्तं भगवता श्रीकृष्णेन गीतासु—' यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।' (४ । ३१) ' यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।' (३ । १३) इति । तत्पुनः कीदृशं हविः ? आत्मसनि=आत्मानं सनोति ददाति—देहादिव्यतिरिक्तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्यासंसारिण आत्मनोऽप्रतिबद्धमपरोक्षं ज्ञानं समर्पयतीत्यात्मसनि इत्यर्थः । अहेयोपादेयस्वरूपस्यात्मनः सदा प्राप्तत्वेन तद्दानस्यासम्भवात् तज्ज्ञानदानमेवात्र लक्षणया ज्ञेयम् । शुद्धेन हविषा स्वान्तं शुद्ध्यति । शुद्धिश्च दोषापनयो गुणाधानम् । तस्यां हि तस्यां सद्गुरूपदेशादात्मतत्त्वज्ञानमप्रतिबन्धं प्रादुर्भवति । तथा च स्मृतिः—' ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि ॥ ' इति । प्रजासनि=लौकिकविशिष्टप्रजासुखं सनोति—ददातीति, पशुसनि=विशिष्टगवादिपशुसुखं सनोति=ददातीति । लोकसनि=लोकसुखं सनोति—ददातीति । अत्र प्रजादिपदानि तत्प्रभवे सुखे लाक्षणिकानि । यतस्तेषामुपयोगस्तदर्थमेव । अभयसनि=अभयं स्वर्गं सनोति—ददातीति । ' स्वर्गो वै लोकोऽभयम् ' इति श्रुतेः । ' षणु दाने ' तुदादौ स्मरणात् । एवं हविषो महत्त्वमुपवर्ण्याग्निपदाभिधेयं परमात्मानं प्रार्थयते—अग्निर्भगवान् मे=मम प्रजां बहुलां=तेजोबलबुद्ध्यायुरादिसमर्प्य प्रवृद्धां करोतु । इत्थमग्निं प्रार्थ्य विशिष्टतपोबलसम्पन्नान् महर्षिसिद्धान् महापुरुषान् ब्राह्मणान् देवान् वा प्रार्थयते—हे महापुरुषाः ! देवाः ! यूयमस्मासु सदाचारसद्विचारपरायणेषु अन्नं=व्रीह्यादि, पयः=दुग्धादिकं, रेतः=वीर्यं चात्र धत्त=स्थापयत, शुभाशीर्वादेन वृष्ट्यादिना च सम्पादयत इत्यर्थः ॥

अथ चतुर्थाश्रमस्थो विरक्तपरिव्राजकः स्वाभीप्सितमनेन कामयते—इदं=

हृदि स्थितं, हवि =हूयमाने–परमात्मनि स्थाप्यमानं मनोद्रव्यं मनसोऽनन्य-त्वात्तस्य हविष्ट्वमन्नमिव नाविरुद्धम् । मे निर्मलं विक्षेपरहितमेकाग्रं भवेत् यत्खलु प्रजननं=प्रकृष्टायाः महाभागायाः सारिष्ठाया ब्रह्मविद्यायाः समुत्पादनाय योग्यं भूयात् । 'मनसैवानुद्रष्टव्यम्' (बृ. ४ । ४ । १९) 'मनसैवेदमाप्तव्यम्' (क. ४ । २ । ११) इति च श्रुतेः । दशवीरं=दशप्राणसंयमदशेन्द्रियस्थैर्य-संस्थापकः सर्वगणं=निखिलविवेकादिबहिरङ्गश्रवणाद्यन्तरङ्गसाधनगणसम्पादकं सत् तत् स्वस्तये=निःश्रेयसे कल्याणाय प्रभवेत् । यत् आत्मसनि=प्रत्यगात्मा-भिन्नब्रह्मसाक्षात्कारजनकं, प्रजासनि=विद्यावंशलक्षणब्रह्मविच्छिष्यसम्प्रदाय-प्रवर्तकं पशुसनि=दुग्धादिसात्त्विकाहारप्रदगवादिलाभप्रदं, लोकसनि=सर्वलोक-विस्तृतानवद्ययश प्रयोजकं, अभयसनि=पूर्णाद्वैतभावनया भयराहित्यस्थिति-स्थापकञ्च भूयात् । अग्निः परमेश्वरो ज्ञानाग्निर्वा मे प्रजां=तितिक्षोपरति-ध्यान्यादिरूपां बहुलां=प्रवृद्धां करोतु । हे अन्नपूर्णाद्याः ! लोकमातरः ! देव्यः ! अस्मासु=संसारादुपरतेषु–उपरिस्थेषु वा भिक्षालक्षणं, अन्नं पयः, धत्त=स्थाप-यत–समर्पयत इत्यर्थः । तदुक्तं–'अन्नपूर्णे ! सदापूर्णे ! शङ्करप्राणवल्लभे !। ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ! ॥' इति । 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ।' (बृ. ४ । ४ । २२) इति श्रुतेः । हे पवित्रतमसद्वृत्तमसद्विचारप्रवाहाः ! रेतः=ब्रह्मचर्यादिव्र-तानुष्ठानेन वीर्यवत्ता धत्त, येन वयं स्वेष्टं स्वात्मसाक्षात्कारं लभेमहि । 'यदि-च्छन्तो ब्रह्मचर्यं चरन्ति ।' (क. १ । २ । १५) इति श्रुतेः । इति ।

× × ×

## ( ४५ )

( अनृतवर्जनसत्यग्रहणाभ्यां जीवितममृतं मधुरञ्च भवति )

प्रजापालकः प्रजापतिः सत्यानृतयोर्विविक्तं रूपं संप्रेक्ष्य सत्यरूपमुपादातुं, अनृतरूपं च परिहातुं सर्वान् मनुजानुपदिशति–

ॐ दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः,
अश्रद्धामनृतेऽदधाच्छ्रद्धाँ सत्ये प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धसः,
इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥

( शु. य. १९ । ७७ )

प्रजापतिः=परमेश्वरः, रूपे=रूपवती–प्रातिस्विकासाधारणलक्षणनिरूपिते–सुखदुःखबीजे–सत्यानृते दृष्ट्वा–निरीक्ष्य–समालोच्य, व्याकरोत्=व्याकरणं–पृथक्त्वं च कृतवान्–इदं सत्यमिदमनृतमिति पृथक् पृथक् सर्वेषां मानवानां प्रत्यक्षानुभवो यथा स्यात्तथा तदुपदेशेनावस्थापयत्, इति यावत्, अत एव प्रजापतिः=स्वाचरणेन प्रजायाः पालकः–सन्मार्गे संस्थापकः सत्पुरुषः सदुपदेष्टा, अनृते=असत्ये–असत्कर्मणि–असद्वचने–असच्चिन्तने–अधर्मे–अन्याये–अश्रद्धां=अप्रीतिं–अनुपेक्षां, अदधात्=दधाति, तथा सत्ये–सत्कर्मणि–सद्वचने–सच्चिन्तने धर्मे न्याये–श्रद्धां–परां प्रीतिं–प्रभूतादरं–अदधात्=दधाति । तस्मात्त्वमनुसरन्तो भवन्तोऽपि सर्वे मनुजाः–अनृते अश्रद्धां अदधात्–दधतु–धारयन्तु । लिङ्ग-वचनव्यत्ययः, सन्त्रोच्चारणमपि, अनृतं कथमपि कदाचित्कुत्रापि भवद्भिर्न श्रद्धेयं,

तत्करणन्तु दूरापास्तम् । तत्रत्या श्रद्धापि महान्तं पापं संतापञ्च जनयति इति भावः । सत्ये श्रद्धां दधतु-धारयन्तु, यदेव वेदादिशास्त्रप्रतिपादितं प्रत्यक्षादि-प्रमाणपरीक्षितं शिष्टपरिगृहीतं पक्षपातादिदोषवर्जितं धर्म्यं न्याय्यं सत्कर्म स्यात्, तत्रैव सच्छ्रद्धा विधातव्या, तदेव श्रद्धापुरःसरमनुष्ठेयं नान्यदिति भावः । इदमत्र तात्पर्यं प्रस्फुटति-सत्यानृतविवेचनाय तावदादौ मनुजैः सद्विद्या समुपार्जनीया । निरवद्ययाऽतिहृद्यया सद्विद्यया विना मानवशरीरमिदं नार्थाय न कामाय न धर्माय न मोक्षाय च प्रभवति । सद्विद्याविरहे तु नरो वानरोपमतामुपैति । यतो विना विद्यया न सत्यानृतयोः कर्तव्याकर्तव्ययो र्हेयोपादेययोः पार्थक्यानुभवो भवितुम-र्हति । तस्मादृते नानृतवर्जनं न वा सत्यग्रहणं कर्तुं शक्नोति कश्चित् । तस्मात् सर्वैः पुंभिः सर्वाभिः स्त्रीभिश्च परया प्रयत्नपरम्परया यथाऽधिकारं सद्विद्यासम्पत् सम्पादनीया । विद्यायाः प्रसिद्धं माहात्म्यमिदम्-'**मातेव रक्षति पितेव हिते नियुङ्क्ते, कान्तेव चापि रमयत्यपनीय खेदम्। लक्ष्मीस्तनोति वित-नोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या॥**' इति । परन्तु विद्यानां साफल्यं न पठनपाठनप्रवचनधनाद्युपार्जनमात्रेणापि तु परोपकार-परम्परया निष्कलङ्ककीर्तिचन्द्रोद्योतेन निखिलपुरुषार्थसार्थसम्पादनेन परमेश्वर-प्रसादपात्रतया च भवति । सम्पादितसद्विद्योऽपि स्वाधीनीकृताखिलकलाकलापो-ऽपि नरो यदि न परोपकारपुरुषार्थकीर्तिपरमेश्वरकृपाः सम्पादयेत् । तर्हि स मूर्खतम एव मन्तव्यः । अपि च विद्याफलमसद्धानं सदुपादानञ्च '**विद्याफलं स्यादसतो निरोधः**' इत्युक्तेः । अज्ञानादल्पज्ञानाद्वा मोहप्राबल्याद्वा लोकानां असत्ये सत्यबुद्धिः, सत्ये चासत्यबुद्धिः, असारे सारबुद्धिः, दुःखेषु सुखबुद्धिः, अनात्मस्वात्मबुद्धिः, अनित्येषु नित्यबुद्धिः, कुत्सितेषु रमणीयबुद्धिः, अपवित्रेषु पवित्रबुद्धिः, अकृत्येषु कृत्यबुद्धिः, हेयेषूपादेयबुद्धिः, अभक्ष्येषु भक्ष्यबुद्धिः,

अपेयेषु पेयबुद्धिः, अहितेषु हितबुद्धिः, असाधुषु साधुबुद्धिः, साधुषु चासाधुबुद्धिः, नीचेषूच्चबुद्धिः, मित्रेषु शत्रुबुद्धिः, शत्रुषु मित्रबुद्धिः; पापेषु पुण्यबुद्धिश्च वितता दरीदृश्यते। तयैतया भ्रान्त्या विपरीतग्रहणमनृतमित्युच्यते। सद्विद्यया तामेतां विपरीतभ्रान्तिं विनिवार्य यथार्थग्रहणं सत्यमित्युच्यते। तथैव सत्पक्षपातित्वात्सदाचारः सत्यमित्युच्यते। अनृतपक्षपातित्वाच्च दुराचारोऽनृतमित्युच्यते। विविधवस्त्रालङ्कारभाराऽलङ्कृतसकलाङ्गानां स्वपराङ्गनानां मुखान्येवावलोकयद्भिः क्रीडामृगैरिव निर्मर्यादं सद्मनि संयमञ्च विहाय सर्वथाऽहोरात्रं मिथ्यामोहमयुक्तं भ्रष्टाचरणं स्वतनुपुष्टिकान्तिबुद्धिशक्तीनामतिह्रासकरं विदधद्भिर्गृहस्थाभासैरतिदुर्बलायाः बुद्धिशक्तितेजोविहीनायाः भूभाररूपायाः प्रजाया यदुत्पादनं क्रियते, तदनर्थकारकमनृतमेव क्रियते। परललनाऽऽलोकलोभक्षोभलक्षणां विविधविषप्रदानपटुकटुफलवतीं विषयलतामतिक्रुद्धां विषधरीं सर्पिणीमिव दूरतो विहाय सदा सत्सङ्गसदुपदेशामृतसमास्वादनपरायणैः स्वदारसन्तुष्टमानसैः संयमिभिर्विशिष्टप्रजोत्पादनाय स्वभार्यामृतुकालमेवोपगच्छद्भिः सद्गृहस्थैर्यत्सदाचरणं विधीयते, तत्सत्यमित्युच्यते। यत्तनुधनयौवनविद्याकलाकुलमदैर्महामदैरिवान्धोन्मत्तवद्वर्तनं, अल्पज्ञानेनानल्पोच्छृङ्खलतावलम्बनं, पापान्यायाचरणादस्मिन् भवे दुर्यशःकूपे निपत्य परस्मिन् भवे महानरकनिपाताधिकारसम्पादनं, दुरभिमानदूषित-कामकोपपराभूत-द्वेषेर्ष्यापर्याकुल-लोभतृष्णाक्षोभित—मोहमत्सरमाहग्रस्त—स्वान्तःकरणं, अतिविकटासु भवाटवीषु विषयमृगतृष्णाविप्रलब्धस्य मनोमृगबालस्य सततं परिभ्रमणधारातानुबन्धित्वादनृतमित्युच्यते। देहादेर्मलीनत्वक्षणभङ्गुरत्वाद्यनुसन्धानेन मदमपहाय स्वात्मौपम्येन समभावावलम्बनेन विश्वहितैषित्वं सम्पाद्य, निरन्तरं मृदुलमञ्जुलविनयमवलम्ब्योत्कृष्टनिकृष्टसमानदुष्टजनेषु क्रमशो मैत्रीकरुणामुदितोपेक्षाभावनाः सन्निधाय, शान्त्यादिसद्गुणलुण्टाकेषु कामादिषु परिपन्थिषु दृढां

वैरबुद्धिं बद्ध्वा सदाचारसद्विचारमयीः परदारपरद्रव्यपरद्रोहपराङ्मुखा ऐहिकामुष्मिकश्रेयस्करीः देवद्विजप्राज्ञगुरुजनचरणपरिचरणसंयुक्ताः शुभाः प्रवृत्तीर्विधाय शमदमदयादाक्षिण्यशौर्यौदार्यधैर्यसौशील्यसारल्यक्षमातितिक्षासमानदृष्टित्वाद्यनेकसद्गुणरत्नसम्पादनं सत्त्वाभिमुख्यप्रयोजकत्वात्सत्यमित्युच्यते । एवं विलासोद्भाव्यसूचकवस्त्रालङ्कारवेशधारणं, जराप्रवैकल्यदुष्कर्मासहीनाङ्ग—जनोपहसनं, अनल्पजल्पनाडम्बरेण दीनजनभयकरणं, मिथ्यामधुरैः कपटपटुभिर्वचनैः सरलाशयलोकवञ्चनञ्च पापाञ्चितपक्षपातित्वादनृतमित्युच्यते । तपस्वित्व—श्रेष्ठित्व—सेवकत्वसूचकं वस्त्रालङ्कारवेशधारणं हीनदीनदयनीयजनसत्करणाभयप्रदानादञ्च सत्पुण्यसम्पादकत्वात्सत्यमित्युच्यते । तदाम्नातं शतपथब्राह्मणे—

' एतद्धैव देवा व्रतं चरन्ति यत्सत्यम्, तस्मात्ते यशोयशो ह भवति, एवं विद्वान् सत्यं वदति ।' ( श. कां. ब्रा. १ । १ । १ ) इति । यशोयशः=यशस्विनां मध्ये यशस्वी भवतीत्यर्थः । इत्येवं निगमागमपारंगमप्रज्ञया वा सद्विद्वत्सदुपदेशेन वाऽस्माकं को धर्मः कश्चाधर्मः ? किं कृत्यं किञ्चाकृत्यं ? किं न्याय्यं किञ्चान्याय्यं ! किं सत्यं किञ्चासत्यं ? इति इदं विचार्य-निश्चित्य स्वधर्मकर्मममज्ञानसम्पादनमेव सत्यानृतरूपयोर्निरीक्षणं व्याकरणञ्च श्रुत्युक्तं वेदितव्यमित्यलं विस्तरेण । ऋतेन—यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितोऽर्थः ऋतं, तेन, सत्ये=वाक्कायाभ्यां सम्पाद्यमानः [illegible] पदार्थः प्राप्तो भूयादिति शेषः । अन्धसः=भुज्यमानस्य परिशुद्धस्य मोदकादेरन्नस्य, विपानं=विविच्य पानं—भक्षणं, यद्वा विपानं=विविधं रक्षणं, शुक्रं=शुद्धं—स्वान्तशुद्धिकरं वा, इन्द्रियं=वीर्यप्रदञ्च भूयात् । इन्द्रस्य=जीवात्मनो धार्मिकस्य सदाचाररतस्य, पयः पानार्थमीदृशं भवतु ? कीदृशं ! इन्द्रियं=वीर्यवत्—अमृतं=अजरामरत्वप्रदं, मृत्युदुःखात्पृथक्करं, वा, मधु=मधुरं—आनन्दप्रदं मधुमत्—वा

भूयात्। यत आहारशुद्धिस्वान्तशुद्धि-अनृतहानसत्योपादाने जीवितं शुद्धं मधुरञ्च भवतीति भावः ॥

× × ×

## ( ४६ )

### ( त्रयस्त्रिंशत्संख्याका विशिष्टमहत्त्वोपेता देवा मामभिरक्षन्तु )

परमात्मस्वरूपान्तःसारान् विशिष्टसामर्थ्ययुक्तान् त्रयस्त्रिंशत्संख्याकान् देवान् स्वरक्षणाय च प्रार्थयते—

ॐ त्रया देवा एकादश
त्रयस्त्रिंशाः सुराधसः ।
बृहस्पतिपुरोहिता देवस्य सवितुः
सवे, देवा देवैरवन्तु मा ॥
( शु० य० २० । ११ )

देवाः=दिव्यगुणकर्मस्वभावाः, देवैः=द्योतमानैः स्वप्रभावैः सह, मा=मां देवप्रणयिनं, अवन्तु=अभिरक्षन्तु । कियन्तः सन्ति ते सर्वे देवाः ? इत्यत आह—त्रया एकादश=त्रयः—अवयवाः येषां ते 'संख्याया अवयवे तयप्' तस्यायजादेशः, एकादशत्रिगुणा इत्यर्थः । मिलितान् तान् स्वयमेवाह—त्रयस्त्रिंशाः= तिसृभिः संख्याभिरधिका त्रिंशत्संख्या येषां ते त्रयस्त्रिंशत्संख्याकाः देवाः सन्तीत्यर्थः । के ते त्रयस्त्रिंशत् (३३) देवा इति ? उच्यते, अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्यास्ते एकत्रिंशत्, इन्द्रश्च प्रजापतिश्च मिलित्वा त्रयस्त्रिंशत् । किं लक्षणास्ते अष्टौ वसवः ? इत्युच्यते; अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चा-

श्चेतना एकादश रुद्राः; वीरभद्र–शम्भु–गिरिश–अजैकपाद्–अहिर्बुध्न्य–पिनाकि–भवानीश–कपालि–दिक्पति–स्थाणु–रुद्रसञ्ज्ञकाः । मासादिरूपा अपि तदधिष्ठातारश्चेतना द्वादशादित्याः,–विष्णु–शक्र–अर्यम–धातृ–त्वष्टृ–पूष–विवस्वत्–सवितृ–मित्र–वरुण–अंशु–भग–सञ्ज्ञकाः मन्तव्या इति । अत एव भगवद्गीतासु स्मृतमेतत्–'**रुद्रादित्या वसवः**'–'**वीक्षन्ते त्वां विस्मिताश्चैव सर्वे**' ( गी. ११ । २२ ) इति । तदेतत् देवानां विग्रहवत्त्वे सचेतनत्वे च सत्येव संगच्छते, नान्यथा–तेषां चेतनत्वमन्तरेण विस्मितत्ववीक्षणकर्तृत्वलक्षणस्तद्धर्मस्तत्र कथमुपपद्येत । अत एवाहुर्भगवन्तो बादरायणाचार्या ब्रह्ममीमांसायाम्–'**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्**' ( ब्र. सू. २ । १ । ५ ) इति । अस्यायमर्थः–तु शब्दः पृथिव्यादिलक्षणासु वस्वादिदेवतासु केवलाचेतनत्वाशङ्कामपनुदति, न खलु '**मृदब्रवीत्**' '**आपोऽब्रुवन्**' ( श. ब्रा. ६ । १ । ३ । २–४ ) इत्येवं जातीयकया श्रुत्या केवलाचेतनानां भूतेन्द्रियादीनामेव देवतात्व शङ्कनीयम् । यतोऽभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवादादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते, न जडभूतेन्द्रियादिमात्रम् । कस्मात् ' विशेषानुगतिभ्यां; विशेषणं विशेषः, अनुगतिश्च ताभ्याम् । '**एता ह वै देवता अहंश्रेयसे विवदमानाः**' ( कौ. उ. २ । १४ ) इत्यादिश्रुतौ भूतकरणादिमात्राशङ्काविनिवृत्तये तदधिष्ठातृचेतनदेवपरिग्रहाय च चेतनत्व विना देवताशब्देन विशेषितत्वात् । अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहासपुराणेभ्योऽवगम्यन्ते । '**अग्निर्वाग्भूत्वा मुखं प्राविशत्**' ( ऐ. आ. २ । ४ । २ । ४ ) इत्येवमादिका श्रुतिः करणेष्वनुग्राहिकामनुगतां चेतनां देवतां दर्शयति । तस्मादग्न्यादिविषया अपि वस्वादयो देवतावाचकाः शब्दाश्चेतनाक्तत्मैश्वर्ययुक्तं तं

तं देवात्मानमपि तत्तदधिष्ठातृत्वेन बोधयितुं शक्नुवन्ति; मन्त्रार्थवादादिशास्त्रेषु तथा व्यवहारात्। देवतानामैश्वर्ययोगादन्याचारमभिधावस्थातुं यथेष्टं तं तं विग्रहञ्च ग्रहीतुं सामर्थ्यस्य विद्यमानत्वाच्च। तथा च श्रूयते स्मर्यते च—'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंश ब्रा० २ । १) 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' (म० भा०) इति। निरुक्तकारेणाप्युक्तं—'महाभाग्यत्वात् देवतायाः' (७ । १ । ४) इति। एवमशनियज्ञविषयावपीन्द्रप्रजापतिशब्दौ तदभिमानित्वेन सचेतनं वज्रहस्तत्वादिविग्रहवन्तं देवराजमिन्द्रं ब्रह्मलोकाधीश्वरं चतुर्मुखत्वादिविग्रहवन्तं ब्रह्माणमपि शास्त्रव्यवहारमनुसृत्य बोधयितुं शक्नुतः। अपि च परस्या एव ब्रह्मदेवताया विश्वाधिष्ठात्र्याः सर्वज्ञत्वादिधर्मविशिष्टायाः सकलपृथिव्यादिकार्येष्वनुगतायाः सर्वैरास्तिकैः सत्तास्वीकारात् नाचेतनमात्रत्व पृथिव्यादीनां देवानां प्रत्येतव्यम्। एक एव परमेश्वरो विभिन्नोपाधिविशेषैः विभिन्नदेवादिभेदेन भिन्नमिव जलसूर्यकादिवत् प्रतीयते इति तु शास्त्रहृदयं विदाङ्कुर्वन्त्येव शुद्धाशया बुधोत्तमाः। इति। तथा च ऋग्वेदानुक्रमणिकायामभिहितं माधवभट्टेनापि—'तपोविशेषयुक्तानां युगेष्वन्येषु देवताः। आसन् ऋषीणां प्रत्यक्षा प्रभावैस्त्रिविधैर्युताः। आगोपालं विप्रथितां प्रसिद्धिमिह लौकिकीम्॥ देवताऽस्तित्वविषयां तन्मूलां कवयो विदुः॥ यथाशब्दमिह मीवाश्चेतनाः केचिदीश्वराः। दद्त्यभिमतानर्थान् इति वक्तुञ्च युज्यते॥ प्रत्यक्षाश्च परोक्षाश्च द्विविधास्तत्र देवताः॥ तत्प्रवादैर्विजानीयो द्वैविध्यमिह वैदिकैः॥ अग्निर्वायुश्च सूर्यश्च मरुतः पृथिवी तथा। आपो रात्रिरुषा गावः प्रत्यक्षे कर्मभिः स्तुताः॥ प्रत्यक्षाश्च[R] परोक्षाणां[S] महिमानः[T] इति स्थितेः। तेषु ते सन्ति दधति

R. प्रत्यक्षाः=स्थूलाः पृथिव्यादयः S. परोक्षाः=सूक्ष्माः तदभिमानिनः
T. महिमानः=विस्ताराः। इति।

भवन्त्यपि च तन्मयाः । देवतातत्त्वविज्ञानं महता तपसा भवेत् । शक्यते किं तदस्माभिर्यथावच्येन भाषितुम् । न सर्वे चेतनाः देवाः नापि सर्वे अचेतनाः ॥ इति वादैर्विजानीमो मन्त्रब्राह्मणगोचरैः ॥इति । अथेदानीं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरामः । कीदृशास्ते देवाः ? सुराधसः=सु-शोभनं राधः=धनमैश्वर्यं येषां ते, यद्वा सुष्ठु राधसः=संसिद्धयो येभ्यस्ते सुराधसः=सकलेष्टसिद्धिविधायिन इत्यर्थः । 'राध संसिद्धौ' स्मरणात् । बृहस्पतिः=प्रजापतिः, पुरोहितः=पुरः—अग्रे, हितः—अवधृतो येषां ते सोऽसौ, श्रेष्ठतमत्वेनाग्रेसरो येषां ते बृहस्पतिप्रमुखा इतियावत् । तथा सवितुः=सकलजगदुत्पादकस्य देवस्य=स्वयंप्रकाशमानस्य विश्वेश्वरस्य, सवे=आज्ञायां वर्तमानाः तिष्ठन्तीतिशेषः । यद्वा सवे=प्रेरयितरि । जगति परमेश्वरेण नियामकत्वेन नियुक्ताः ते देवाः चतुर्दशभुवनस्य व्यवस्थाहेतुषु तेषु तेष्वधिकारविशेषेषु प्रवर्तमाना यावदधिकारमवतिष्ठन्ते । तदुक्तं परमर्षिणा—'**यावदधिकारमवस्थितिराधिकारिकाणाम्**' (ब्र. सू. ३ । ३ । ३२) इति भगवदाज्ञापालनोपयिकं बलवत्सुकृतं कर्माऽधिकारस्तत्समाप्तिपर्यन्तमाधिकारिकाणां सूर्येन्द्रादीनां देवानां वसिष्ठव्यासादीनां महर्षीणां च शरीरग्रहणप्रवाहावस्थितिरित्यर्थः ।

× × ×

न ह्यनध्यात्मवित् किञ्चित्क्रियाफलमुपाश्नुते ।
न ह्यनध्यात्मविद् वेदान् ज्ञातुमर्हति तत्त्वतः ॥

## (४७)

### ( निरतिशयनिरवधिकानन्दभूम्नः स्वप्रकाशधाम्नः प्रत्यगभिन्न-ब्रह्मभावस्य मोक्षस्वरूपस्य वर्णनम् )

विध्वस्तसंसाररागादिदोषाः प्रशान्ता ज्ञानानन्दतृप्ताः परमात्मभावमापन्ना विद्वद्वरिष्ठाः मन्त्रद्रष्टारो महर्षयो जीवन्मुक्तिदशायां यत्पूर्णमद्वैतं स्वस्वरूपमपरोक्षमनुभवन्ति । विदेहकैवल्यदशायाञ्च प्रारब्धप्रतिबन्धापगमात् यन्निरतिशयानन्दनिधिं ब्रह्मनिर्वाणं पर्याप्नुवन्ति, तदनुभवं—भगवती श्रुतिः स्वयमेव मुमुक्षूणां तत्र महतीं रुचिमुत्पादयितुं तन्मुखेन वर्णयति—

**ॐ उद्वयं तमसस्परि स्वः पश्यन्तः उत्तरम् ।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥**

( शु० य० २० । २१+२७ । १०+३५ । १४+३८ । २४ । ऋ० १ । ५० । १० । अथर्व० ७ । ५३ । ७ । तै० सं० ४ । १ । ७ । ४ । तै० ब्रा० २ । ४ । ४ । ९+२ । ६ । ६ । ४ । तै० आ० ६ । ३ । २ )

वयं=तत्त्वविदः, तमसः=अज्ञानान्धकारात्, तत्कार्यभूतादस्मात्—द्वैतसंसारात्, उद्गन्म=उद्गताः—स्म । उद् अगन्म इत्याख्यातेनान्वयः, गमेर्लुङि शपि लुप्ते मस्य नः । अत एव उत्तरं=उत्कृष्टतरं, स्वः=स्वर्गं—विमलाखण्डानन्दनिधिं प्रत्यगभिन्नं पूर्णं ब्रह्मात्मस्वरूपं परि=सर्वतः, पश्यन्तः=ईक्षमाणाः—जीवन्मुक्तिदशायामवलोकयन्तः पश्चात् विदेहकैवल्यावस्थायां देवत्रा=देवलोके=स्वयंप्रकाशात्मभूतलोके देवं=आत्मानं त्वंपदार्थं, सूर्यं=शुद्धं चराचरात्मानं तत्पदार्थं

परमात्मानं परि—पश्यन्तः—अभेदेनानुभवन्तः, उत्तमं ज्योतिः=पूर्णमद्वैतं ब्रह्मरूपं, उदगन्म=प्राप्ताः स्म, इत्यहो वयं! अहो शास्त्रं! अहो ज्ञानं! अहो सुखं! अहो-गुरुः! यदनुग्रहाद्वयं धन्याः कृतकृत्याः पूर्णतृप्ताः संवृत्ताः, मानुषजन्मनः साफल्यमभूदिति स्वानुभवं प्रकटयन्तो वदन्ति। तथैव यूयमप्येनं प्राप्य मनुजजन्मनः साफल्यं कुरुत इत्युपदिशन्ति च। उदगन्म परिपश्यन्त इति तन्त्रोच्चरितं ज्ञेयम्। यद्वा तमसः=अज्ञानलक्षणात् परि=परस्तात्, तमसो वाऽपनेतृ, यज्ज्योतिः, तत्—स्वः=स्वं—आत्मीयं त्वंपदार्थलक्षणं अस्मद्धृदि स्थितमादित्यस्थं तत्पदार्थलक्षणं च तदेकं ज्योतिः, तयो ज्योतिषोरेकत्वं—'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' (तै० उ० ३।४) 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि' (छां० ४।११।२) 'योऽसावसौ पुरुषः सोऽहमस्मि।' (ई० उ० १६) इत्यादिश्रुत्यन्तरेभ्योऽपि प्रसिद्धमेव। पुनः कथंभूतं तदित्याह—यदुत्तरं=उत्कृष्टतरमूर्ध्वतरं वाऽपरं ज्योतिरपेक्ष्य पश्यन्त उदगन्म वयम्, कमुदगन्मेत्याह—देवत्रा=सर्वेषु देवेषु, देवं=द्योतनवन्तं, सूर्यं=रसानां रश्मीनां प्राणानां च जगत ईरणात् सूर्यस्तमुदगन्म=गतवन्तो ज्योतिरुत्तमं=सर्वज्योतिर्भ्यः उत्कृष्टतमं परब्रह्मलक्षणमहो प्राप्ता वयमित्यर्थः।

अथाधिदैवतम्—वयं=यज्ञानुष्ठातारः, तमसस्परि=तमस उपरि—रात्रेरूर्ध्वं वर्तमानं तमसः=पापात् परि—उपरि वर्तमानं वा पापरहितमित्यर्थः। तथा चाम्नायते—'उद्वयं तमसस्परीत्याह—पाप्मा वै तमः पाप्मानमेवास्मादपहन्ति।' (तै० सं० ५।१।८।६) इति। ज्योतिः=तेजस्विनं, उत्तरं=उद्गततरं—उत्कृष्टतरं वा, देवत्रा=देवेषु मध्ये देवं=दानादिगुणयुक्तं सूर्यं पश्यन्तः=स्तुति-

भिर्हृदि निदिध्योपासीनाः सन्तः उत्तमं=उत्कृष्टतमं, ज्योतिः सूर्यरूपम् । आगन्म= प्राप्तवाम । तथा च श्रूयते—'अगन्म ज्योतिरुत्तममित्याहासौ वाऽऽदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति।' (तै० सं० ५ । १ । ८ । ६ ) इति । युक्तं चैतत्=' तं यथा यथोपासते तदेव भवन्ति । ' इति श्रुत्यन्तरात् । देवत्रा=इत्यत्र सप्तम्यर्थे त्राप्रत्ययः ॥

× × ×

## ( ४८ )

### ( त्वंपदलक्ष्ये जीवस्वरूपे तत्पदलक्ष्यस्य परमात्मस्वरूपस्यासिपदगम्येनाऽभेदेन ग्रहणलक्षणस्य महावाक्यार्थस्य प्रतिपादनम् )

अस्ति योऽनन्तशक्तिमान् भगवान् चराचराणामखिलानां भूतानामधिपतिः, अत एव सोऽसौ स्वकीययाऽप्रतिहतया परानपेक्षया स्वच्छन्दकारिण्येच्छाशक्त्या यत् किमपि कर्तुमकर्तुमन्यथा च कर्तुमर्हति, न शक्यते तस्य स्वातन्त्र्यं केनापि प्रतिरोद्धुम्; ' सोऽकामयत ' ( तै. उ. २ । ६ ) इत्यादिकं श्रुत्यन्तरमपीशितुस्तस्येच्छामात्रेण सकलस्यास्य विश्वस्य सर्जननियमनादिकं सुवत्स्वातन्त्र्यलक्षणमाधिपत्यं विज्ञापयति । परश्च तस्यैतादृशीच्छाशक्तिर्मायाविलासरूपाऽनिर्वचनीयैव न तथ्या । स्वस्वरूपमत्र कूटस्थनित्या, अन्यथा संसारप्रवृत्त्युपरमाभावमोक्षोपदेशानर्थक्यादिप्रसङ्गापातादिति । किञ्च मायाविलासरूपया तयेच्छाशक्त्या सृष्टा इमे दृश्यमाना ब्रह्मादिस्तम्बपर्यन्ताः स्वप्नकल्पाः सर्वे लोकाः 'दर्पणे प्रतिबिम्बितमिव' तस्मिन्नेवान्तरधितिष्ठन्ति, परन्तु ते भ्रान्त्या बहिरिवावभान्ति। अत एव तेषां सत्त्वस्य स्फुरणस्य च तदधिष्ठानपर्यवसायित्वमनुमिमतेऽनुमातारः; तथाहि

**' विमताः सर्वे इमे लोकाः स्वसत्तारहिताः दृश्यत्वात्, 'अन्याधीन-प्रकाशाः अन्यस्मिन् भासमान एव सति भासमानत्वात् स्वाप्नार्थवत्,** न चाप्रयोजकत्वं, दृश्यानामपि स्वसत्तावत्त्वे बाधाभावप्रसङ्गात्, अनन्याधीनप्रकाशत्वे चेन्द्रियाद्यनपेक्षणात् सत्सुप्तिवैयर्थ्यप्रसङ्गादिति । अत एव 'प्रबोधे सति विलीयमानस्वप्नप्रपञ्चवत्' तस्मिन् चित्राधिष्ठाने सर्वात्मनि—अनवच्छिन्नप्रकाशे परमात्मनि साक्षात्कृते सति सर्वे ते लोकाः प्रविलीना भवन्ति । अत एव वेदवागपि तस्य सर्वात्मकत्वलक्षणं महतो महीयस्त्वं वर्णयति । अपि च यथा स्वभावतोऽनवच्छिन्ने आकाशे घटमुपाधिं निमित्तीकृत्य घटेन क्रोडीकृतत्वेनांशं कल्पयित्वा घटाकाश-इत्येको भागो व्यपदिश्यते, घटाद्बहिष्ठत्वापेक्षया महाकाश इति, न परमार्थतः—आकाशस्यामूर्तस्य केनचित्परिच्छेदः सम्भवति । तथा जीवात्मपरमात्मनोर्देहोपाधिकृतो भेदो द्रष्टव्यः । निरंशे परमात्मन्यवच्छेदस्य परमार्थतोऽनुपपत्तेः । तथा च देहेनाहं मनुष्यः संसारी, इत्यादिप्रकारेण विशेष्यमाणः स एव चिदात्मा जीवात्मेत्युच्यते । स एव तेनाविशिष्यमाणः परमेश्वर इत्यभिधीयते । देहाद्युपाधेश्चिदात्मन्यध्यासमन्तरेण वास्तवसंबन्धानिरूपणान्न जीवेश्वरयो र्वास्तवो भेदः सम्भवतीति वस्तुस्थितिः । तथा च जाग्रतितराम्—सर्वाभेदस्य ब्रह्माभिन्नत्वेन द्वितीयाभावस्य च प्रतिपादिका भूयस्यः श्रुतयः—' **सलिल एको द्रष्टाऽद्वैतो भवति** ' (बृ. ४ । ३ । ३२) इति । सलिल इव सलिलः स्वच्छो-निरुपाधिक इत्यर्थः । आर्षो लिङ्गव्यत्ययः । यद्वा आचार्य[illegible]त् सलिल-पदस्य पुंस्त्वोपपत्तिः । एकः=सजातीयभेदशून्यः, अद्वैतः=विजातीयभेदशून्यः, द्विधा इतं=प्राप्तं द्वीतं तस्य भावो द्वैतम् । न विद्यते द्वैतं द्वित्वाभावो यत्र स अद्वैत इति तद्व्युत्पत्तेः । द्रष्टा=स्वप्रकाशचिद्रूपो भवतीति सिद्धवन्निर्देशात् सर्वदैवंरूपता तस्य विद्यते इति ज्ञापयति, तेन रूपान्तरभावित्वकमिति ध्वन्यते ।

तथा 'एकमेवाद्वितीयम्' (छां. ६ । २ । १) इति । अत्रापि एकमिति—यथा घट एकोऽस्तीत्युक्ते घटान्तराभावप्रतीतिस्तद्वत् सजातीयाभावः प्रतीयते; अद्वितीयमिति—न विद्यते द्वितीयं यस्येति व्युत्पत्त्या विजातीयाभावः प्रतीयते; अन्यथा तदुपादानवैयर्थ्यापत्तेः । यद्यपि 'एकमद्वितीयमि'ति पदद्वयेन सर्वभेदप्रतिषेधात्, निखिलद्वैतप्रपञ्चरहितं वस्तु प्रतिपादितं भवति; तथाप्येकत्व-संख्या, धर्मधर्मिभावः+ स्वगतभेदो वा तत्र भवेत् इति कस्यचिन्मन्दमतेराशङ्का स्यात्तन्निरासार्थं 'एव' इति पदम् । तदुक्तं खण्डनखण्डखाद्ये—'एकमद्वितीय-मित्युक्त्वा यदेवकारमादत्ते श्रुतिस्तदात्यन्तिकाद्वैतं प्रतिपादयितुमिति।' तथा च एवकारः तत्र केनापि प्रकारेण भेदगन्धो नास्तीति बोधयन् सर्वथै-वैकरसमद्वैतं वस्तु द्रढयति । ननु—'इह मण्डले एक एव नरपतिरद्वितीयः' यथा वा 'इह कानने किंशुकतरुरेक एव' इत्यभिधाने राजकिंशुकगत-नानात्वव्यतिरेकः प्रतीयते । न तु हस्त्यश्वादीनामप्यभावः, न वा वृक्षान्तरा-भावः, तथेहापि किं न स्यादिति चेत् न, तत्र हि राजकिंशुकयोः स्तुतौ तात्पर्यं, न तु वस्त्वन्तराभावे, तत्प्रतिपादने प्रयोजनाभावात्, समकक्षप्रमाणान्तरबाध-सत्त्वाच्च । अत्र तु सकलद्वैताभावप्रतिपादने—'मनसैवेदमाप्तव्यं नेह नाना-स्ति किञ्चन' (क. उ. २ । ४ । ११) 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' (मुं. ३ । २ । ९) 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुष-

---

+ धर्मधर्मिभावस्वीकारेऽर्थतो भेदाभेदौ स्वीकृतौ भवतः, तयोः तत्प्रयोजकत्वात् तथा भेदमात्रे स्वीकृते सामानाधिकरण्यप्रत्ययानुपपत्तेः, अभेदमात्रे स्वीकृते धर्मधर्मि-भावानुपपत्तेः भेदाभेदौ सिद्ध्यतः । तत्र भेदस्य धर्मिप्रतियोगिभावादिसापेक्षत्वेन संसृष्ट-त्वेन च मिथ्यात्वात्, अभेदस्यापि भेदाभावरूपत्वादिरूपेण तादृशत्वात्, एवकारेण धर्मधर्मिभावप्रयोजकौ भेदाभेदावपि प्रतिषिध्येते इति बोध्यम् ॥

-मुपैति दिव्यम्' (मुं. ३।२।८) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं विजानीयात्।' (बृ. ४।५।१५) इत्यादिश्रुतिभिः परमपुरुषार्थलक्षणं परमप्रयोजनमाम्नायते। प्रयोजनवत्यर्थ एव तात्पर्यस्य निश्चयात्, तादृशार्थबोधनपराणां तासां स्तुत्यर्थत्वानुपपत्तेः, श्रुतिसमकक्षप्रमाणान्तराभावात्, प्रत्यक्षादेश्च भ्रान्तत्वेन बाध्यत्वाभ्युपगमात् न तद्दृष्टान्तसाम्यावकाशः। एवं 'तत्त्वमसि' (छां. ६।८।७) 'अयमात्मा ब्रह्म' (बृ. २।५।१९) 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३।२) इत्यादिश्रुतिस्मृतिवादाः जीवपरयोरभेदमेव प्रतिपादयन्ति। अत एव 'यथा वस्तुतः कुन्तीपुत्र एव कर्णो भ्रान्त्यादिना राधापुत्रत्वेन प्रतीतः श्रीकृष्णोपदेशादिना राधापुत्रभावं परित्यज्य स्वस्मिन् कौन्तेयत्वं गृह्णन् कौन्तेय एव भवति' तथा वस्तुतः पूर्णाद्वैतब्रह्मरूप एवायं जीवोऽविद्यातत्कार्यदेहाद्युपाधिभ्रान्त्या जीवभावेन प्रतीतः। श्रुत्याद्युपदेशप्रसूतज्ञानध्यानादिना जीवभावं तत्प्रयोजकाविद्यादिकञ्च परिहाय स्वस्मिन् ब्रह्मभावं गृह्णन् ब्रह्मैव भवतीति तात्पर्यमभिव्यञ्जयन्नाह—

ॐ यो भूतानामधिपति-
र्यस्मिँल्लोका अधिश्रिताः।
य ईशे महतो महाँस्तेन गृह्णामि
त्वामहं मयि गृह्णामि त्वामहम्॥

( शु० य० २०।३२ )

यः=तत्पदार्थः परमात्मा भूतानां=आकाशादिपञ्चमहाभूतानां, जरायुजप्रभृतिप्राणिनाञ्च अधिपतिः=स्वामी—परमस्वातन्त्र्येण नियामकः—अधीश्वरः—

पालक इत्यर्थः । यस्मिन्=परमार्थसत्ये ब्रह्मणि लोकाः=भूरादयः सर्वे लोकाः मरीच्युदकस्वाप्नप्रपञ्चेन्द्रजालनिभाः परमार्थसाक्षात्काराभावावगमाः—अधिष्ठिताः—अन्तः समाश्रिता भवन्ति; नात्र संकोचकारणमस्ति किञ्चित्, सर्वलोककारणत्वात्तस्य । तथा चाम्नायते—'अन्तरस्मिन्निमे लोकाः अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठं, तेन कोऽर्हति स्पर्धितुम् । ब्रह्मन् देवास्त्रयस्त्रिंशत् ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन् ह विश्वा भूतानि÷ नावीवान्तः समाहिताः ॥' (तै. ब्रा. २ । ८ । ८) इति । 'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥' (क. २ । २ । ८) इति । यः, महत=समष्टिबुद्ध्युपाधिकस्य हिरण्यगर्भस्य महत्तत्त्वाभिधेयस्य ईशे=इष्टे—नियन्ता भवति । 'लोपस्त आत्मनेपदेषु' इति तल्लोपे छटि तङि प्रथमैकवचने ईशे इतिरूपं सिद्ध्यति । 'अधीगर्थदयेशाम्' इति कर्मणि षष्ठी । यद्वा महत=सांख्याभिमतस्य महत्तत्त्वप्रमुखस्य विकारजातस्य तत्त्वगणस्य, ईशे=नियमयति । स महान्=सर्वोत्कृष्टः—सर्वव्यापकः सर्वात्मा तत्पदार्थोऽस्तीति शेषः । यद्वा योऽधिश्रितानां सर्वेषां लोकानां, ईशे=तान् सर्वान्नियमयति । तथा यो महतः=महत्परिमाणात् पृथिव्यादेरपि महान्=महत्तरः—निरवधिकमहत्त्वसम्पन्नः, तेनैवात्मना तत्सर्वमात्मवत्सत्, तेन च विनिर्मुक्तमसत् सम्पद्यते, तस्मादसावेव महतो महान् इत्युच्यते । इत्थं तत्पदार्थं परमेश्वरस्वरूपं प्रतिपाद्येदानीं त्वंपदार्थे जीवात्मनि तस्याभेदेन ग्रहणं प्रतिपादयति—तेन=तत्पदलक्ष्येण निरुपाधिकपरिशुद्धपरमात्मस्वरूपेण कृत्वा त्वा त्वां, मयि=परमात्मभावमापन्ने त्वंपदार्थे, अहं गृह्णामि=त्वां

---

÷ यथा समुद्रनद्यादितरणवेलायां चेतनाचेतनानि वस्तूनि नौमध्येऽवस्थाप्यन्ते तद्वत्, ब्रह्मन्=ब्रह्मणि, सप्तम्याः लोपः. सर्वं स्थावरजङ्गमात्मकं विश्वमन्तःस्थितं भवतीति ॥

मुपैति दिव्यम्' (मु. ३।२।८) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं विजानीयात्।' (बृ. ४।५।१५) इत्यादिश्रुतिभिः परमपुरुषार्थलक्षणं परमप्रयोजनमाम्नायते। प्रयोजनवत्यर्थ एव तात्पर्यस्य निश्चयात्, तादृशार्थबोधनपराणां तासां स्तुत्यर्थत्वानुपपत्तेः, श्रुतिसमकक्षप्रमाणान्तराभावात्, प्रत्यक्षादेश्च भ्रान्तत्वेन बाध्यत्वाभ्युपगमात् न तद्बाधितसाम्यावकाशः। एवं 'तत्त्वमसि' (छा. ६।८।७) 'अयमात्मा ब्रह्म' (बृ. २।५।१९) 'क्षेत्रज्ञं चापि मां विद्धि' (गी. १३। २) इत्यादिश्रुतिस्मृतिवादाः जीवपरयोरभेदमेव प्रतिपादयन्ति। अत एव 'यथा वस्तुतः कुन्तीपुत्र एव कर्णो भ्रान्त्यादिना राधापुत्रत्वेन प्रतीतः श्रीकृष्णोपदेशादिना राधापुत्रभावं परित्यज्य स्वस्मिन् कौन्तेयत्वं गृह्णन् कौन्तेय एव भवति' तथा वस्तुतः पूर्णाद्वैतब्रह्मरूप एवायं जीवोऽविद्यातत्कार्यदेहाद्युपाधिभ्रान्त्या जीवभावेन प्रतीतः। श्रुत्याद्युपदेशप्रसूतज्ञानध्यानादिना जीवभावं तत्प्रयोजकाविद्यादिकञ्च परिहाय स्वस्मिन् ब्रह्मभावं गृह्णन् ब्रह्मैव भवतीति तात्पर्यमभिव्यञ्जयन्नाह—

ॐ यो भूतानामधिपति—
यस्मिँल्लोका अधिश्रिताः।
य ईशे महतो महाँस्तेन गृह्णामि
त्वामहं मयि गृह्णामि त्वामहम्॥

(शु० य० २०। ३२)

यः=तत्पदार्थः परमात्मा भूतानां=आकाशादिपञ्चमहाभूतानां, जरायुजप्रभृतिप्राणिनाञ्च अधिपतिः=स्वामी—परमस्वातन्त्र्येण नियामकः—अधीश्वरः—

पालक इत्यर्थः । यस्मिन्=परमार्थसत्ये ब्रह्मणि लोकाः=भूरादयः सर्वे लोकाः मरीच्युदकस्वाप्नप्रपञ्चेन्द्रजालनिभाः परमार्थसाक्षात्काराभावावगमाः—अधिष्ठिताः—अन्तः समाश्रिता भवन्ति; नात्र संकोचकारणमस्ति किञ्चित्, सर्वलोककारणत्वाद्त्तस्य । तथा चाम्नायते—'**अन्तरस्मिन्निमे लोकाः अन्तर्विश्वमिदं जगत्। ब्रह्मैव भूतानां ज्येष्ठं, तेन कोऽर्हति स्पर्धितुम्। ब्रह्मन् देवास्त्रयस्त्रिंशत् ब्रह्मन्निन्द्रप्रजापती। ब्रह्मन् ह विश्वा भूतानि÷ नावीवान्तः समाहिताः ॥**' (तै. ब्रा. २।८।८) इति। '**तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद्वै तत् ॥**' (क. २।२।८) इति। यः, महतः=समष्टिबुद्ध्युपाधिकस्य हिरण्यगर्भस्य महत्तत्त्वाभिधेयस्य ईशे=इष्टे—नियन्ता भवति। 'लोपस्त आत्मनेपदेषु' इति तलोपे लटि तङि प्रथमैकवचने ईशे इतिरूपं सिद्ध्यति। 'अधीगर्थदयेशाम्' इति कर्मणि षष्ठी। यद्वा महतः=सांख्याभिमतस्य महत्तत्त्वप्रमुखस्य विकारजातस्य तत्त्वगणस्य, ईशे=नियमयति। स महान्=सर्वोत्कृष्टः—सर्वव्यापकः सर्वात्मा तत्पदार्थोऽस्तीति शेषः। यद्वा योऽधिश्रितानां सर्वेषां लोकानां, ईशे=तान् सर्वान्नियमयति। तथा यो महतः=महापरिमाणात् पृथिव्यादेरपि महान्=महत्तरः—निरवधिकमहत्त्वसम्पन्नः, तेनैवात्मना तत्सर्वमात्मवत्सत्, तेन च विनिर्मुक्तमसत् सम्पद्यते, तस्मादसावेव महतो महान् इत्युच्यते। इत्थं तत्पदार्थं परमेश्वरस्वरूपं प्रतिपाद्येदानीं त्वंपदार्थे जीवात्मनि तस्याभेदेन ग्रहणं प्रतिपादयति—तेन=तत्पदलक्ष्येण निरुपाधिकपरिशुद्धपरमात्मस्वरूपेण कृत्वा त्वा त्वां, मयि=परमात्मभावमापन्ने त्वंपदार्थे, अहं गृह्णामि=त्वां

---

÷ यथा समुद्रनद्यादितरणवेलायां चेतनाचेतनानि वस्तूनि नौमध्येऽवस्थाप्यन्ते तद्वत्, ब्रह्मन्=ब्रह्मणि, सप्तम्याः लोपः सर्वं स्थावरजङ्गमात्मकं विश्वमवस्थितं भवतीति ॥

गृहीत्वा भेदहेतुमविद्यादिकं बाधित्वा त्वदात्मैवानन्यो निरस्ताखिलदुःखोऽनन्तानन्दभाक् स्वराट् भवामीति यावत् । 'गृह्णामि त्वामहमि'ति द्विरुक्तिरादरातिशयं तत्र सूचयति । तथा चाभेदग्रहणसमर्थनपराणि श्रुत्यन्तराण्यप्यामनन्ति—' यदग्ने ! स्यामहं त्वं त्वं वा घा स्या अहम् ।' (ऋ० ८ । ४४ । २३) ' तं त्वा भग प्रविशानि स्वाहा, स मा भग प्रविश स्वाहा ' ( तै. १ । ४ । ३ ) ' त्वं वा अहमस्मि भगवो देवते ! अहं वै त्वमसि भगवो देवते ! ' इत्येवमादीनि । एवं मुमुक्षुभ्यः तत्त्वजिज्ञासुभ्यः ' एष त आत्मा सर्वान्तरः । ( बृ० ३ । ४ । १ ) ' एष त आत्माऽन्तर्याम्यमृतः ' ( बृ० ३ । ७ । ३ ) ' तत्सत्यं स आत्मा तत्त्वमसि ' ( छां० ६ । ८ । ७ ) इत्येवमादीनि श्रुतिवाक्यानि ब्रह्मनिष्ठाश्चाचार्याः सद्गुरवः करामलकवदपरोक्षानुभूतं स्वीयं परमं साम्य तेष्वविद्यानिरासेन परमानुकम्पावशात्स्थापयितुकामाः ' भो मुमुक्षवः + यूयं न संसारिणः स्थ किन्त्वसंसारिणो नित्यशुद्धबुद्धमुक्तस्वभावाः परमात्मनः स्थ ' इत्येवं सादरं पौनःपुन्येनोपदिशन्तः परमेश्वरमात्मत्वेनैव ग्राहयन्ति, आत्मा चाभिन्नं स्वरूपम् । गृह्णन्ति च तथैव ते मोक्षाय स्पृहयालवः श्रुतिगिरामृजावर्धे श्रद्धालव । तथा च पारमर्षं सूत्रम्—' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' ( ब्रह्म० ४ । १ । ३) इति । ग्रहणमत्राभेदप्रतिपत्तिलक्षणं प्रत्येतव्यम् । न तूपादानलक्षणम्, स्वरूपस्य तस्य हेयत्वोपादेयत्वाभावात्, सदा प्राप्तत्वाच्च ।

---

+कालापरिच्छिन्नत्वं नित्यत्वं, रागद्वेषाद्यशुद्धिरहितत्वं शुद्धत्वं, स्वप्रकाशनिरतिशयानन्दत्वं बुद्धत्वं, अविद्यास्तमनन्थशून्यत्वं मुक्तत्वं, स्वमेव भाव —सत्ता यस्य स इति व्युत्पत्त्या अनन्याधीनसत्ताकत्वं स्वभावत्वं, अनात्माधिष्ठानत्वे सति जीवानां स्वरूपभूतत्वं परमात्मत्वमत्र प्रत्येतव्यमिति ॥

यत एता एव श्रुतयः अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति। तथा 'अन्योऽसावन्योऽहमस्मीति न स वेद' (बृ. १।४।१०) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. ।४।४।१९। क.४। १०) 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' (तै. २।७) 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद।' (बृ. २।४।६+४।५।७) इत्येवमाद्याः शतशः श्रुतयो भेदप्रतिपत्तेः प्रचुरानर्थं संसारागमनं दर्शयन्ति। अपि च प्रेम्णः पर्यवसानमप्यद्वैत एव भवति। समुत्कटप्रेमा प्रेष्ठस्य भेदगन्धमपि न सहते। स्वात्मैव परमप्रेमास्पदः, एतस्माद्भिन्नत्वेन प्रतिपन्ने भगवत्यनन्यप्रेम्णोऽसिद्धिप्रसङ्गात् स्वात्मनैव माद्यो भगवान्, तत एव भक्तिपथपथिका अपि–'तस्मिन् तज्जने च भेदाभावात्' (नारदभक्तिसूत्र, ४१) इति स्पष्टतरमुद्घोषयन्तो भगवन्तमभेदभावनया परिगृह्णन्तः समुपासते। तस्माच्चमुत्पनुगैर्विचारशीलैः 'पुरीषमूत्रसमाकीर्णां दुर्गन्धाढ्यां कुत्सितां वाटीमिव' दूरतो भेदप्रतिपत्तिं विहाय 'सुरभितरकुसुमस्वादुतमफलपरीता अतिरमणीया प्रमदवनवाटिका इव' अभेदप्रतिपत्तिरेव समादर्तव्या, इति।

(४९)

( भो भगवन्! त्वच्छरणागतोऽहं त्वामेव परमसर्मसुधानिधिं कामये संसारभयानि भेत्तुं च प्रार्थये )

हे निरतिशयानन्दनिधे! हे निगमैकवेद्य! विभो! जन्ममृत्युजराव्याधिदुःखयुक्तमसारं संसारं स्मारं स्मारं महत्या भीत्या 'किं कुर्वे? क्वाहं हन्त गच्छामि?

इति व्याकुलमानसो—विषयमृगतृष्णापरिभ्रमणसंजातातिमात्रव्यथो—हृषीकचोर-चौरापहृतप्रभूतसुखस्वापतेयो वराकोऽहं त्वत्पादाब्जशरणमृते नान्यमुपायं पश्यन् सर्वस्वसमर्पणेन '**प्रदीप्तशिरा जलराशिं प्रविविक्षुरिव**' त्वामेव परमशर्म-सुधानिधिं प्रपन्नोऽस्मि, '**मुमुक्षुर्वै शरणमहं प्रपद्ये.**' (श्वे० ६ । १८) '**सद्योजातं प्रपद्यामि**' ( तै. आ. १० । ४४ ) '**तमेव चाद्यं पुरुषं प्रपद्ये**' ( गी० १५ । ४ ) इत्यादिश्रुतिस्मृतिभ्यः, त्वां विहाय नान्यन्मम-शरणमस्ति किञ्चित्, अतोऽहं गजेन्द्रनरेन्द्रद्रुपदजार्तिहरणशील त्वामेव संसारभयेभ्य. स्वरक्षणाय प्रार्थयमानो निरतिशयसौन्दर्यमाधुर्यसौष्ठवाद्यनन्तक-ल्याणगुणगणाभिराम भक्तानुग्रहार्थं गृहीतलीलाविग्रहमपि सत्यज्ञानानन्तानन्दैकर-सविग्रहं त्वामेव कामये; अतो मामकीनमिदं सकरुण भक्तिभर प्रार्थनं श्रुत्वा सद्यो मामभीप्सितसिद्धिसमर्पणेन सुखयतु इत्याह—

**ॐ इमं मे वरुण ! श्रुधी हवमद्या च मृडय ।**
**त्वामवस्युराचके ॥**

(शु य २१। १। ऋ. १।२५। १९। साम १५८५। तै आ. २। १।११। ६ग।)

हे वरुण !=वरदायक ! विश्वव्यापक ! परमात्मदेव ! त्रियते सुखार्थिभिरिति वृणोति—आवृणोति—व्याप्नोति सर्वं विश्वमिति वा तद्व्युत्पत्ते । तदुक्त—' वरं वृणन्ति त देवा वरदश्च वरार्थिनाम् । धातुर्वै वरणे प्रोक्तः तस्मात्स वरुणः स्मृतः ॥' इति । मे=मम त्वद्भक्तस्य शरणागतस्य, इमं हवं=आह्वानं—सार्त्याहूतिं, ' मामक चञ्चलं मन. कामादिदोषरहितं शान्तं विधेहि तावकानन्यभक्ति विषय-

विरक्तिं तत्त्वज्ञानञ्च देहि ' इत्यादिलक्षणं प्रार्थनं वा त्वं कृपया श्रुधी=श्रुधि—शृणु ' श्रुशृण्विति ' हेर्धिः संहितायां दीर्घः । च=पुनः, अद्य दिने, मृडय=सुखय—दुःखबहुलान्मृत्युयुक्तात्संसारसागरान्मां सद्यः समुद्धृत्य सविद्यासाविद्यानिवृत्तिरूपपरमशान्तिविराजमानं शाश्वताद्वितीयानन्दस्वरूपावस्थानलक्षणं मोक्षं प्रापय इति यावत्; अद्या इत्यत्र निपातस्येति दीर्घः,कालविलम्बं मा कृथा. इति मुमुक्षोऽतिशयं सूचयति—यतोऽहं अवस्युः=अवनं अवः=पालनं ' अवतेरसुन् ' संसारभयेभ्य आत्मनो रक्षणं समुद्धारमिच्छतीति व्युत्पत्त्या स्वं रक्षितुमिच्छुः इत्यर्थः । अस्मीति शेषः । अतः त्वामाचके=त्वामेव कामये ' आचके इति कान्तिकर्मा ' ( नि. २ । ४ ) कान्तिरिह कामना । समुद्धर्तारं दयानिधिमानन्दनिधानं त्वामेव भगवन्तमिच्छामि, त्वामेवाश्रयामीतिभावः । यद्वा त्वामेव आ=आभिमुख्येन—तत्परतया चके=शब्दयामि—स्तौमीत्यर्थः । ' कै गै शब्दे ' स्मरणात् । लिटि रूपं, लटि परिणेयम् । अभीप्सितार्थसिद्ध्यर्थं कल्याणकरान् त्वद्दिव्यगुणानजस्रं भक्तिभरेण गायन् त्वामेव परिचिन्तयामीति भावः ।

## ( ५० )

### ( स्वदेशवद्वास्तव्यप्रजाभ्युन्नतये धार्मिकभावविवृद्धये च परमेश्वराभ्यर्थनम् )

स्वदेशस्यात्यन्ताभ्युदयप्रयोजकतद्वास्तव्यब्राह्मणादिपरिष्कृतप्रजोद्भूत्यै सकलविधैहिकसुखसम्पत्तये च विश्वलीलासूत्रधारं परमेश्वरमभ्यर्थयते—

**ॐ आ ब्रह्मन् ! ब्राह्मणो ब्रह्मवर्चसी जायता-**
**माराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो**

**जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धि-र्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां, निकामे निकामे नः पर्जन्यो वर्षतु, फलवत्यो न ओषधयः पच्यन्तां, योगक्षेमो नः कल्पताम् ॥**

( शु. य. २२ । २२ )

हे ब्रह्मन् । परमात्मदेव । जगन्निवास । विश्वनियन्तः । राष्ट्रे=अस्मद्देशे त्वद्विभूतिप्रवत्तरधारि पावने भारतवर्षे ब्रह्मवर्चसी=वेदाध्ययनशीलो—जितेन्द्रियो—ब्रह्मनिष्ठो—विद्वान्—सर्वजनप्रियः—अभयसत्त्वसंशुद्ध्यादिदैवीसम्पद्विशिष्टो ब्राह्मणः=भासुरो भूसुरः, आजायतां=समन्ततः समुत्पद्यताम् । तदुक्तं—'ब्राह्मण्यं ब्राह्मणानां हि ब्रह्मचर्यादभिव्यज्यते । सम्प्राप्य ब्रह्मनिष्ठत्वं पूर्णं ब्राह्मण्यमाप्यते ॥' इति । राजन्यः=राजपुत्रः क्षत्रियश्चेदृश आजायतां; कीदृशः ? शूरः=पराक्रमी—निर्भयः—'शूर विक्रान्तौ' शूरयतीति शूरः, सार्वभौमत्वादिगुणसम्पन्नः, तथा इषव्य =इषौ—बाणे कुशलो धनुर्धारी, उपलक्षणमिदं सकलशास्त्रास्त्रप्रयोगनिपुण इति यावत् । अतिव्याधी=अतिशयेन व्यद्धुं—शत्रूंस्ताडयितुं शीलं यस्य सः शत्रुभेदनशीलः इत्यर्थः । महारथः=महान्तः सर्वसुयुक्ताः रथाः यस्य सन्ति सः ,विशिष्टसेनाधीश्वर इत्यर्थः । यद्वा एकः सहस्रं जयति स महारथः, एवंभूतो बलवान् तेजस्वी धार्मिक उदारः प्रजावत्सलो जितेन्द्रियः परोपकारी क्षत्रिय उत्पद्यताम् । इदमुपलक्षणं वैश्यशूद्रयोः, लोभकापट्यादिरहितः कृषिगोरक्षावाणिज्यकुशलो धनसम्पन्नो धार्मिको वैश्यः,

शिल्पादिविद्याचतुरः सेवातत्परो विनयशीलः शूद्रश्चाऽऽजायताम् । जात्यभिप्रायत एकवचनमिदं व्यक्त्या सर्वत्र बहुत्वेनोन्नेयम् । तथा दोग्ध्री=दुग्धप्रचुरी—पयः—प्रपूरिका धेनुः=गौः, आजायतां राष्ट्रे इति सर्वत्र सम्बन्धः । अनड्वान्=वृषभो बलिवर्दः, वोढा=वाहको दृढाङ्गो जायताम् । सप्तिः=अश्वः, आशुः=शीघ्रगामी जायताम् । योषा=स्त्री, पुरन्धिः=पुरं शरीरं पातिव्रत्यसौन्दर्यसौशील्यौदार्यदयादाक्षिण्यादिस्त्रीनिरवद्यगुणगणसम्पन्नं दधाति—धारयतीति पुरन्धिः, आजायताम् । यद्वा पुरून् बहून् ऐहिकसुखसम्पत्तिकरान् व्यावहारिकगुणविशेषान् दधातीति पुरन्धिः । देशधर्मोद्धारकस्य दुष्टदमनशीलस्य पराक्रमशालिनः सद्विद्याविद्योतमानस्य वीरापसरस्य पुरुषधर्मस्याख्यानस्य करणात् तदभिध्यक्त्यर्थं पुनरपि प्रार्थयते—रथेष्ठितिष्ठतीति रथेष्ठाः, क्विप् सप्तम्या अलुक्, रथे स्थितो युद्ध सुनैपुण्य नोऽसौ, जिष्णुः=म्लेच्छराक्षसाधनार्यविधर्मिशत्रुप्रायस्य जयशीलो जायताम् । युवा अस्येति पदच्छेदः । अस्य यजमानस्य=सत्कर्मोपासनादिभिर्देवयजनशीलस्य सद्गुरुनिदेशसत्कारविनयशालिनः, युवा=प्राप्तयौवनः—समर्थः, सभेयः=सभामर्हतीति, सभायां साधुः—योग्यो वा सभेयः, विद्यापराक्रमसच्चरित्रादिप्रशस्तगुणशाली वीरः पुत्रो जायताम् । सभाशब्दादत्र साधुरित्यर्थे ढप्रत्ययः तस्य एयादेशः । किञ्च नः=अस्माकं राष्ट्रे=राज्ये, पर्जन्यः—स्तनदम्बुदो मेघः, निकामे—निकामे यदा—यदा लोकानां प्रार्थना प्रवर्तेत, तदा तदा निरतां वर्षतु=आवश्यकतामनतिक्रम्य वृष्टिं करोतु, अभ्यासो वीप्सार्थः । तथा नः=अस्माकं, ओषधयः=व्रीहियवगोधूममुद्गाद्याः फलवत्यः=फलिताः,फलवत्यः=बहूत्तमफलाः, भूमप्राशस्त्यार्थे मतुप्, पच्यन्ताम्=परिपक्वाः भवन्तु । नोऽस्माकं योगक्षेमः कल्पताम्=योगेन युक्तः क्षेमः क्लृप्तो भवतु—सम्पद्यताम् । अलब्धस्य धनधान्यैश्वर्यादेर्लाभो योगः, लब्धस्य तस्य परिरक्षणं क्षेम इत्यर्थः । स दयानिधिः भक्तकामकल्पतरुर्भगवान्

भारतीयानां सर्वविधमभ्युदयं विदधातु । यथा चास्मदेशवास्तव्याः सर्वे मनुजाः गुणवत्प्रियपुत्रदारबन्ध्वादिसंयुक्ताः सद्बुद्धिशक्तिलक्ष्मीप्रेमाशालिनो नीरोगाः पुष्टाः प्रसन्नाः शूरवीरा धार्मिका विद्वांसो ज्ञानभक्त्यादिकल्याणसम्पादकगुणविशिष्टाश्च भवन्तु । कलहानैक्येर्ष्यादिदोषकलङ्करहिताः परस्परहितचिन्तकाः संघटिताः-संग्रथिताः सन्तो मिथः प्रेम विवर्धयन्तु, सर्वविधामभ्युन्नतिमासादयन्तु, तथा परमेश्वरेण कृपानिधानेनानुग्रहो विधेय इति सर्वेषां नः प्रार्थना इति भावः ॥

## ( ५१ )

( अद्वैतपरमात्मनः, कल्पनामयजाड्यमौढ्यशीलमनसस्तन्नाशकज्ञानाग्नेः साधनधामशरीरस्य च गूढभाषया वर्णनम् )

कःस्विदेकाकी चरति, क उ स्विज्जायते पुनः। किं स्विद्धिमस्य भेषजं किं वाऽऽवपनं महत् ॥' ( शु. य. २३ । ९ ) इति । चतुर्णां प्रश्नानां क्रमशः समुत्तराणि गूढाध्यात्मिकार्थद्योतकमाचष्टऽऽह—

**ॐ सूर्य एकाकी चरति, चन्द्रमा जायते पुनः ।**
**अग्निर्हिमस्य भेषजं, भूमिरावपनं महत् ॥**

( शु. य. २३ । १०+२३ । ४६ )

सूर्यः=चराचरात्मा सर्वान्तर्यामी परमात्मा, 'सूर्य आत्मा जगतः तस्थुषश्च' ( ऋ. १ । ११५ । १ ) इति श्रुतेः । एकाकी=एक एव पूर्णाद्वितः-स्वभिन्नद्वितीयमात्रसम्बन्धशून्यसहायशून्य इत्यर्थः । सजातीयविजातीयस्वगतभेदरहित इति यावत् । चरति=वर्तते; तथा च श्रुतयः-'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छां. ६ । २ । १ ) 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ।' ( बृ. ४ । ३ । २३ ) 'सलिल एको

द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः' (बृ. ४ । ३ । ३२) इत्याद्याः [ तस्मिन् एकस्मिन् सूर्यस्य सूर्ये विश्वात्मनि केवले ब्रह्मणि द्वितीयस्यान्यस्याभावं दर्शयन्ति । यद्वा एकाकी सन् स्वमेवात्मानमेकं केवलं चरति=जानाति, स्वात्मभिन्नं—द्वितीयं वस्तु न जानातीत्यर्थः । चरतेर्ज्ञानार्थत्वात् । 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्, अहं ब्रह्मास्मीति, तस्मात्तत्सर्वमभवत्' (बृ. १ । ४ । १०) 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति' (बृ. ४ । ३ । २३) इति च श्रुतेः । प्रथमप्रश्नोत्तरानन्तरं द्वितीयप्रश्नमुत्तरयति—पुनः=अनन्तर, एकाकिनस्तस्य मायया चन्द्रमा=मनः, 'चन्द्रमा मनसो जातः' (शु. य. ३१ । १२) 'यत्तन्मन आसीत् स चन्द्रमा अभवत्' (जै. उ. २ । २ । २) 'तद्यत्तन्मनश्चन्द्रमास्सः' (जै. उ. १ । २८ । ५) इत्यादिवचनैः, कार्यकारणयोरभेदोपचारात्तदुपलक्षितं मनः, जायते=उत्पद्यते, उत्पन्नं तदेव मनः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिलक्षणसंसाररूपेण परिणमते, स्वकल्पनया नामरूपात्मकं विश्वं सृजति । तदुक्तं वासिष्ठे—'मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः । मनःकृतं कृतं राम ! न शरीरकृतं कृतम् ॥' इति । अन्यत्रापि—'जाग्रदादौ मनो विश्वं वितनोति चराचरम् । सुषुप्तौ कुरुते लीनं तस्माद्बीजं मनोऽस्य हि ॥' इति । 'ज्ञानस्य ज्ञेयतापत्तिर्बन्ध इत्यभिधीयते । तस्यैव ज्ञेयताशान्तिर्मोक्ष इत्यभिधीयते ॥' इति । ज्ञानस्य स्वप्रकाशस्य सूर्यस्य मनःकल्पितविश्वरूपेण ज्ञेयतापत्तिर्बन्ध इत्यर्थः । अत एव 'मनः कल्पितमेवेदं विश्वं न पारमार्थिकम् । नाममात्रमिदं विश्वमिन्द्रजालसमोपमम् । येन सम्यक् परिज्ञात न तत्र रमते बुधः ॥' इति । तृतीय समादधाति—हिमस्य=हिमेन जाड्यमुपलक्ष्यते, यथा हिमकराच्चन्द्रादतिमात्र-

भूतशैत्येनाङ्गानां जाड्यं सम्पद्यते, तथा मनश्चन्द्रेण विवेकजाड्यलक्षणं मौढ्य-मुद्भूतं भवति । अत एव हिमस्य–विपरीतप्रत्ययात्मकस्य मौढ्यस्य भेषजं=औषधं–तन्निवारकं, अग्निः=ज्ञानाग्निः । ज्ञानरूपोऽग्निर्हि मनोबीजमज्ञानं, तत्कार्यं मनः तदुद्भूतं मौढ्यं, तत्समवं पापपुण्यादिलक्षणं सर्वमपि बन्धजातं, तत्कल्पित-मखिलमपि नामरूपात्मकं जगत् भस्मसात्कुरुते । तदुक्तं–' अन्तर्निरन्तरम-निन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्नौ । कस्मिंश्चिदद्भुत-मरीचिविकासमाने विश्वं जुहोमि वसुधादि शिवावसानम् ॥ ' इति ।

परिशिष्टं चतुर्थप्रश्नमुत्तरयति–'भूमिः=तदुपलक्षितं पार्थिवं मनुजशरीरं' महत्=, बृहत् ब्रह्माण्डप्रतिबिम्बत्वात् ' यः पिण्डे स ब्रह्माण्डे ' इति न्यायात् । यद्वा महत्=श्रेष्ठ्यदेवदुर्लभ ब्रह्मोब्रह्मत्वादिमहत्त्वोपेतमित्यर्थः । आवपनं=मोक्षात्मक-फलबीजवपनसाधनसमुदायप्ररोहस्थानमित्यर्थः । आ–समन्तादुप्यते बीजं निक्षि-प्यते यस्मिंस्तदिति व्युत्पत्तेः, बीजवपनस्थानमिति यावत् । अत एव तस्य वाद्यं महार्घं श्रीमदाचार्यैः शंकरस्वामिभिरप्युपदिष्टम्–' लब्ध्वा कथञ्चित् नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् । यस्त्वात्ममुक्तौ न यतेत मूढधीः स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥ ' इति ( विवेकचूडामणिः )

अथाधिदैवतम्–सूर्यः=आकाशमण्डले दृश्यमान आदित्यः, एकाकी=एक एवासहायः, चरति=गच्छति । तदेतद्व्याख्यातं ब्राह्मणश्रुत्या–' असौ वा आदित्य एकाकी चरति, एष ब्रह्मवर्चसमेवास्मिंस्तद्धत्ते ' ( श. ब्रा. १३ । २ । ६ । १० ) इति । अर्घ्यप्रदानतमस्कारस्मरणध्यानादिना तं भजमानेषु मनुजेषु एष ब्रह्मवर्चसं=शुद्धप्रज्ञाविशिष्टदिव्यकान्त्यपरपर्यायं तेजः धत्ते=स्थापयतीत्यर्थः । चन्द्रमा पूर्वं कृष्णपक्षे क्षीणः सन् पुनर्जायते=वर्धते शुक्ले पक्षे । ' चन्द्रमा वै जायते पुनः, आयुरेवास्मिंस्तद्धत्ते । ' ( श.

ब्रा. १३ । २ । ६ । ११ ) इति ब्राह्मणश्रुतेः । वर्धमानः चन्द्रआटकादिना त्वं पश्यतां ध्यायिनामायुः प्रवर्धयतीत्यर्थः । हिमस्य–शीतस्य, भेषजं=औषधं, अग्निः=पावकः । 'अग्निर्वै हिमस्य भेषजं तेज एवास्मिंस्तद्धत्ते' (श. ब्रा. १३ । २ । ६ । १२) इति श्रुतेः । अभ्युपासको जाड्यं बुद्धेः त्यक्त्वा तेजस्वी बुद्धिमान् भवतीत्यर्थः । भूमिः=अयं मर्त्यलोकः, आवपनं महत्=विस्तृतं शुभाशुभकर्मबीजप्ररोहस्थानमिति यावत् । 'अयं वै लोक आवपनं महत्, अस्मिन्नेव लोके प्रतितिष्ठति' (श. ब्रा. १३ । २ । ६ । १३) इति श्रुतेः, यतः कर्मभूमिरयं मर्त्यलोकः, यो यो यद्यत्कर्म शुभमशुभं वा करोति, तस्य तस्य फलमवश्यं भुङ्क्ते, अभुक्तं तत्कदापि न क्षीयते । तथा चास्मिन्नर्थे श्रुतिस्मृती भवतः–'सस्यमिव मर्त्यः पच्यते, सस्यमिवाजायते पुनः ।' (क. १ । १ । ६ ) इति । 'बीजं पिता क्षेत्रमयी जनित्री वृष्टिस्तु कर्माणि शुभाशुभानि । भूतानि सस्यप्रतिमानि लोके, जातानि जातानि लुनाति कालः ॥' इति ( महाभारते शान्तिपर्वणि )

## ( ५२ )

( पूर्णानन्दमहोदधेः प्रियतमस्य स्पृहणीयतमस्य हितकृत्तमस्य सर्वात्मनो भगवतो गणपते परमश्रद्धाभक्तिभ्यामावाहनम् )

सर्वविद्यानिधिं परमानन्दमहोदधिं स्नेष्ठतमं प्रियपतिं गणपतिं महादेवं सादरं भक्त्या आह्वयन्ति–

ॐ गणानां त्वा गणपतिꣳ हवामहे,
प्रियाणां त्वा प्रियपतिꣳ हवामहे,

**निधीनां त्वा निधिपतिꣳ हवामहे, वसो मम ।**
**आऽहमजानि गर्भधमा त्वमजासि गर्भधम् ॥**

( शु. य. २३ । १९ )

हे विश्वपते ! हे प्रियतमस्वामिन् ! हे विश्वान्तर्यामिन् विभो ! गणानां=भूत–लोक–मनुज–देव–राक्षस–प्रभृतिनिखिलगणानां–गणनीयानां चराचरपदार्थसार्थानां मध्ये स्वसत्तास्फूर्ति समर्प्य वर्तमानमिति शेषः । 'मणिगणेषु सूत्रमिव' तेषु सर्वेषु दृश्येषु गणेषु द्रष्टृरूपेणानुस्यूतमिति यावत् । अत एव गणपतिं=तस्य तस्य सकलस्य गणस्य पालकं–रक्षितारं–विश्वस्वामिनं निगमागमनिकरगीतानन्तकीर्तिवार्धि–निरवधिकरुणाब्धिं केवलसमरसानन्दमूर्ति–दयनीयस्वजनरक्षणदीक्षितं त्वा=त्वां परमेश्वरं वयं त्वामेवात्मसर्वस्वं प्रेयांसं–श्रेयांसं मन्यमानाः लोकोत्तरविमलामोदसंदोहदायित्वच्चरणसरोजैकमात्रशरणाः स्वरक्षणाय बन्धविमुक्तये त्वत्साक्षात्कृतये च हवामहे=आह्वयामः–स्वीकुर्महे–हृदये गृह्णीमहे चेत्यनेकार्थः । पुनः कीदृशं त्वां मत्वा वयं हवामहे इत्यत आह–प्रियाणां=वल्लभानां धनदारपुत्रेष्टमित्रदेहेन्द्रियादिनिखिलप्रियपदार्थानां मध्ये प्रियपतिं=प्रियश्चासौ पतिश्च तं परमप्रेमास्पदं भर्तारं त्वामात्मानं मत्वा हवामहे । अत एव 'प्रचुरकामाः जायाः प्रियतमं स्वपतिं यथा गाढं परिष्वजन्ते, तथैव त्वामेवाखिलाधिपतिं परमप्रेमास्पदमात्मानं भगवन्तमस्माकं सर्वा बुद्धिवृत्तयोऽजस्रं दृढं परिष्वक्तुमभिलषन्ति ' इत्यस्यार्थस्य प्रख्यापकोऽन्योऽपि निगमो भवति–'अच्छा म इन्द्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत । परिष्वजन्ते जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥' ( ऋ. १० । ४३ । १ ) इति । अस्यायमर्थः–मे=मम, स्वर्विदः=स्वः–निरतिशय-

मखण्डं परमसुखं जानतः, 'भूमैव सुखं नाल्पे सुखमस्ती'ति श्रौतोपदेशमधिगतवतः इति यावत्। सध्रीचीः=तेनैवानन्दनिधिना संगताः, उशती:=तमेव कामयमानाः सत्यो विश्वाः=सर्वाः, मतयः=बुद्धिवृत्तयः, यथा जनयः=जायाः पत्न्यः, पतिं=प्रियतमं भर्तारं परिष्वजन्ते=समालिङ्गन्ति, मर्यं न=यथा च मनुष्यं, शुन्ध्युं=शुद्धं—क्रोधादिदोषरहितं दयादिगुणवन्तं मघवानं=धनवन्तं दरिद्रा जनाः, ऊतये=रक्षणार्थं, परिष्वजन्ते=समालम्बन्ते, तथैव इन्द्रं=परमानन्दसागरं परमात्मानं नित्यशुद्धबुद्धमुक्तस्वभावं, अच्छ अनूषत=अभितः स्तुवन्त्यो ध्यायन्त्यः परिष्वक्तुमभिलषन्तीत्यर्थः। अत्र'मे' इत्यनेन मन्त्रद्रष्टुः—आङ्गिरसस्य कृष्णस्य ऋषेः परामर्शोऽधिगन्तव्यः। स च महानुभावः स्वबुद्धिवृत्तीनां परमात्मनिष्ठामनेन दर्शयन्नन्यानपि जिज्ञासुभक्तानुपदिशति—भवद्भिरप्येवं परमात्मनिष्ठावत्यः ऋतम्भराः परमानन्दपरिष्वङ्गमेव कामयमानाः स्वीया मतयः कर्तव्या इति। एवं निधीनां=सुख—ज्ञान—बल—तेजः-सौन्दर्य—माधुर्यादिदिव्यमनोरमगुणरत्ननिधीनां मध्ये निधिपतिं=निधिश्वासौ तत्पतिश्च तं सर्वोत्तमनिरवधिकदिव्यतमसुखादिशेवधिं, तदेकमात्रस्वामिनं त्वां हवामहे। शिवस्य सत्यस्य सुन्दरतमस्य प्रियतमस्याखण्डानन्दस्वभावस्य सर्वपतेस्तव स्वभावतो 'लोहमणिरिव लोहं' सर्वस्य स्वाभिमुखाकर्षकत्वाद्धेतोः तवाह्वानं स्वीकरणं ग्रहणं अनन्यभावेन वा कस्मै स्पृहणीयं न भवेदपि तु सर्वस्य। अपि च यत्किमपि सौन्दर्यादिदिव्यगुणयुक्तं वस्तुजातमिह वा परत्र वा जगति दृश्यमानं श्रूयमाणं वा वर्तते, तत्तवैव विभूतिस्वरूपविशेषमेव, त्वत्सामर्थ्याज्जातत्वात्त्वय्येव स्थितत्वाच्चातो भगवांस्तत्र निधिपतित्वप्रियपतित्वादौ किमु वक्तव्यम्। अत एवाभिहितं शिष्टैः—'या या मङ्गलिरुदारा यो योऽप्यानन्दसुन्दरो भावः। यदपि च किञ्चिद्रमणीयं वस्तु शिवस्तत्तदाकारः॥' इत्येतदर्थजातं सूचयन्ती 'हवामहे' इति निरु-

किस्त्वादरातिशयमभिव्यनक्तीति । अतएव हे वसो !=यः सर्वेषु भूतेषु वसति, वसन्ति च सर्वाणि भूतानि यस्मिन् सः तत्सम्बुद्धौ हे वसो ! सर्वभूताधिवास ! सर्वात्मन् ! इत्यर्थः । 'वस निवासे' 'शृस्वृस्निहित्रप्यसिवसि' इत्यौणादिक उप्रत्ययः । श्रद्धाभक्तिभरेणानेन मदीयाह्वानेन त्वं मयि प्रसीद, कृपय, ममैकमात्रः प्रियपतिस्त्वं भूया इतिशेषः । यद्वा हे वसो ! हे वसुरूप ! परमप्रिय-सर्वोत्तमधनरूप ! विश्वेश्वर ! मम सर्वस्वं त्वमेवासि । कृपणस्य धनमिव, कामुकस्य कामिनीरत्नमिवान्धस्य नयनमणिरिव ममानन्यः प्रियतमस्त्वं भवेति शेषः । यद्वा वस—उ—इति पदच्छेदः, उ—इतिनिपातः सम्बोधनेऽनुकम्पायाञ्च वस—इतिक्रियापदं, कृपया हे प्रियतम ! मम घनान्धतामसे मानसे वस=प्रकटः सन् निवासं विधेहीत्यर्थः । यतस्तव मयि प्रकटनिवासे सति सर्वस्पृहणीयस्य निखिलानिष्टनिवारकस्य सकलेष्टसम्पादकस्य त्वत्सामर्थ्यस्याप्रतिबन्धेन लाभसम्भवात् । तदुक्तं—'**यदि भवान् विदधीत हृदि स्थितिं व्यसनसम्पदसौ प्रसरेत्कथम् । न हि महेश ! मनस्त्वदधिष्ठितं भ्रमयितुं प्रभवन्ति भवोर्मयः । न हि वनं हरिणाधिपरक्षितं क्षपयितुं कृपयः क्वचन क्षमाः ॥**' इति (स्तुतिकुसुमाञ्जलौ) अत एव विश्वविदितं स्तुत्यं महनीयं तव सामर्थ्यमहमपि तावकीनः कश्चित् यथा प्राप्तुं प्रभवामि, तथा कृपाशेवधिना भवता कृपा विधेयेत्याह—आ अहं—अजानि—गर्भधं—आ—त्वं—अजासि—गर्भधमिति पदच्छेदः । अहं त्वामेव याचमानो भजमानस्तावकः, गर्भधं=गर्भं धारकं लोकोत्तरमप्रतिहतं सामर्थ्यमित्यर्थः । अत्रान्तःसारभूतं कारणात्मकं वस्तु गर्भपदेनाभिधीयते, गर्भ=अन्तःसारभूतं पारमार्थिकं सूक्ष्मतममात्मानमविकृतकूटस्थस्वरूपेण पादैकस्थानीये विकृते द्वैतप्रपञ्चेऽपि सदा दधाति—धारयति यत्सामर्थ्यविशेषं तत्तादृशमिति व्युत्पत्तेः । आ=समन्ततः सर्वास्ववस्थासु, अजानि=त्वदनुग्रहात्प्राप्तं करवाणीत्यर्थः । 'अज

गतिक्षेपणयोः 'स्मरणात्, ज्ञानं गमनं प्राप्तिर्गत्यर्थः प्रार्थनायां लोडुत्तमपुरुषः। त्वमपि प्रार्थनां श्रुत्वा मयि कृपया गर्भधं=गर्भस्य धारयितृ स्वकीयं सामर्थ्यं, आ= समन्ततः, अजासि=प्रापयसि इत्यर्थः। परमेश्वरस्य गर्भरूपत्वं ऋक्संहितायाम- प्याम्नायते–'**आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।**' (ऋ. १०। १६९। ४) '**गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम्।**' (ऋ. १। ७०। ३) इति। अयं परमात्मा देवानामिन्द्रा- दीनामपि–आत्मा, तदात्मना तेष्ववस्थानात्, भुवनस्य=भूतभौतिकजातस्य, गर्भः, गर्भवत्तत्रान्तर्वर्तमानोऽस्ति। यथावशं=यथेच्छं, सर्वं यथा वशीभूतं स्यात्, तथा एष देवः चरति=वर्तते इत्यर्थः। यः परमात्मा, अपां=जलानां गर्भः, तत्रा- न्तरात्मरूपेण वर्तमानः सारभूतः सत्यः, यश्च वनानां=अरण्यानां गर्भः, स्थातां= स्थावराणां गिरिवृक्षादीनां मध्येऽपि स्थाता=अन्तर्यामिरूपेणावस्थाता, चरथां= चरणवतां–जंगमानां गर्भः–अन्तरात्माऽस्ति। यद्वा–' **प्रजा वै पशवो गर्भः प्रजामेव पशून् आत्मन् धत्ते**' (श. ब्रा. १३। २। २। ४) इति ब्राह्मणश्रुत्यां गर्भः=सर्वाः प्रजाः स्वस्मिन्नात्मनि गर्भवद्धाति–धारयति यः सोऽसौ गर्भधः तं=सकलप्रजाधारकं सर्वविश्वाधिष्ठानं स्वतो निराधारं त्वामेव सर्वात्मानं, अहं, आ=समन्ततः, अजानि=जानानि–जानामि, त्वामेव सर्वत्रजानन् परिचिन्तयामीति यावत्। त्वमपि मां प्रति गर्भधं=विश्वाधिष्ठानं पूर्णं स्वरूपं आ=समन्ततो वेदशास्त्राचार्यद्वारा अजासि=ज्ञापयसि बोधयसीत्यर्थः। अन्त- र्गर्भितणिजन्तोऽयमिति। यद्वा गर्भं=समस्तं ब्रह्माण्डं गर्भवद्धाति–धारयति– स्वात्मनि यः सोऽसौ गर्भधः तं=सकलब्रह्माण्डोपहितं चैतन्यं तत्पदार्थं त्वां आ= आकृष्य–उपाधितः पृथक्कृत्य अहं पिण्डोपहिते त्वंपदार्थे मयि, अजानि=क्षिपामि –तत्त्वंपदार्थयोः, आवयोरैक्यं परिभावयामीति यावत्। त्वमपि मयि योग्या- धिकारिणि गर्भधं, आ–अजासि=क्षिपसि=आविष्करोषीत्यर्थः। पुनर्गर्भधमि-

स्युक्तिस्तु ये प्रकृतिपरमाणुकालादयो विकृतिद्व्यणुकादीनपि गर्भयन्तिधारयन्ति, तेषामपि गर्भयतामयं परमेश्वरो गर्भोऽस्तीति सूचयितुमिति ज्ञेयम् ।

अथवा—गर्भः—बीजं—सर्वभूतजन्मकारणं—चिदाभासाख्यरेतः—सेकपूर्वकं—'बहु स्यां प्रजायेय' (तै. २ । ६) इति श्रुत्युक्तं मायावृत्तिलक्षणं, ईक्षण-रूपं गर्भं, अव्यक्ताव्याकृतापरपर्यायायां प्रकृतौ दधाति=अर्पयति—स्थापयतीति गर्भधः—बीजप्रदः पिता परमेश्वर इत्यर्थः । यथाहि—लोके पिता पुत्रमनुशयिनं व्रीह्याद्याहाररूपेण स्वस्मिँल्लीनं शरीरेण प्रयोजयितुं योनौ रेतःसेकपूर्वकं गर्भं आधत्ते; ततः स पुत्रः शरीरेण युज्यते, तदर्थं च मध्ये कलिलावस्था भवति । तथा प्रलये परमेश्वरः स्वस्मिन् लीनानविद्याकामकर्मानुशयवतः क्षेत्रज्ञान् सृष्टि-समये क्षेत्रैः कार्यकारणसंघातरूपैर्योजयितुं चित्प्रतिबिम्बाख्यरेतःसेकपूर्वकं मायावृत्तिरूपं गर्भमादधाति, तदर्थं मध्ये आकाशवायुतेजोजलभूम्याद्युत्पत्त्यवस्था भवन्ति । तथा च तादृशेश्वरकृतगर्भाधानादेव हिरण्यगर्भादीनि सर्वाणि भूतानि समुत्पद्यन्ते । तदेतत्स्मृतं गीतासु स्वस्य गर्भधत्वं भगवता—'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत ! ॥ सर्वयोनिषु कौन्तेय ! मूर्तयः सम्भवन्ति याः ॥ तासां ब्रह्म मह-द्योनिरहं बीजप्रदः पिता ॥' (गी. १४ । ३ । ४) इति । मन्त्रे शिष्टं समानम् । प्रकृतेः देशतः कालतो वाऽनवच्छेदान्महत्त्वं, सर्वकार्यवृद्धिहेतुत्वरूपा-द्बृंहणत्वात्, ब्रह्मत्वं, गर्भाधानस्थानत्वात् योनित्वञ्च विज्ञेयमिति ॥

> अस्ति वै तत्परो भूमेरस्ति वै तत्परो दिवः ।
> लोका वै तस्मिन् संप्रोतास्तस्मिन् होताः प्रजाः इमाः ॥
> (अथर्व, पिप–१७ । १९)

## ( ५३ )

( स्वयंज्योतिषः परमसुखसमुद्रस्य ज्येष्ठस्य ब्रह्मणो वर्णनम् )

'किꣳ स्वित् सूर्यसमं ज्योतिः किꣳ समुद्रसमꣳ सरः । किꣳ स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते ॥' ( शु॰ य॰ २३ । ४७ ) इति चतुर्णां सोपमानां प्रश्नानां क्रमशः समाधानैः स्वयंज्योतिः परमसुखसमुद्रं ज्येष्ठमनन्तं ब्रह्म तत्त्वं वर्णयति—

**ॐ ब्रह्म सूर्यसमं ज्योतिः, द्यौः समुद्रसमं सरः ।**
**इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यते ॥**

( शु॰ य॰ २३ । ४८ )

सूर्यसमं ज्योतिः ब्रह्म, तच्च स्वयंप्रकाश आत्मैव । तदुक्तमभियुक्तैः— 'बृहत्त्वाद् बृंहणत्वाच्च ब्रह्म आत्मेति गीयते ।' इति । तस्य स्वयंज्योतिष्ट्वं—अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्वलक्षणं प्रत्येतव्यम् । तदेतदभिहितं संक्षेपशारीरकाचार्यैः सर्वज्ञात्ममुनिभिः—'बहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वयशासने । सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक् ॥' ( १ । २२१ ) इति । सूर्यसमस्य तस्य ब्रह्मचैतन्यस्य स्वप्रकाशत्वानभ्युपगमे जगदान्ध्यप्रसङ्गात्, अप्रकाशेन ब्रह्मचैतन्येन दृश्यप्रकाशनासम्भवात्, प्रकाशान्तराणां कल्पने चानवस्थानात्, समस्तदृश्यजगद्व्यवहारप्रयोजकं सूर्यवत् स्वतःप्रकाशं ब्रह्माभ्युपगन्तव्यम् । 'आदित्यवर्णं तमसः परस्तात् ।' ( शु॰ य॰ ३१ । १८ ) इति श्रुत्यन्तरेणापि तस्य ब्रह्मणः सूर्यसमज्योतिष्ट्वमाम्नायते—सूर्यसाम्यन्तु न तस्य सर्वात्मनाऽवगन्त-

व्यम्, 'न तत्समश्चाभ्यधिकश्च दृश्यते।' (श्वे. ६ । ८) इति श्रुत्या तस्य प्रतिषिद्धत्वात्, किन्तु 'आकाशवत्सर्वगतश्च नित्यः' (सर्वोपनिषत्) इतिवत् आंशिकं साम्यमभ्युपेयमन्यथा दृष्टान्तमात्रोच्छेदापातात्, तत्र सूर्येण सार्द्धं प्रकाशकत्वमात्रेण, आकाशेन च सह व्यापकत्वमात्रेण बोध्यम्। अत एव तस्य ज्योतिषामपि ज्योतिष्ट्वमुपपद्यते। तत्र श्रुत्यन्तरेणाप्याम्नातं–'तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः।' (मुं. २ । २ । ९) इति। तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्।' (बृ. ४ । ४ । १६) इति। स्मृतं गीतास्वपि–'ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।' (गी. १३ । १७) इति। द्वितीयं समाधत्ते–समुद्रसमं सरः, द्यौः=सुखरूपः स्वर्गः, 'द्यु अभिगमने' स्मरणात्, द्यूयते–अभिगम्यते–अभ्यर्थ्यते सुखार्थिभिरिति तद्व्युत्पत्तेः। तत्र समुद्रसमंसरो दुःखासंभिन्नं निर्विशेषमपरतन्त्रं निरतिशयमखण्डं परिपूर्णं ब्रह्मानन्दलक्षणं वेदितव्यम्। यतस्तन्मात्रामादाय सर्वे प्राणिनः उपजीवन्ति तदपि स्वप्रकाशमानमनन्तञ्चाभ्युपगन्तव्यम्। यतः सान्तस्याप्रकाशमानस्य च तस्यापुरुषार्थत्वात्। अनन्तस्य स्वतःप्रकाशमानस्यैव तस्य पुरुषार्थत्वाभ्युपगमात्। अपि च वर्णव्यत्ययेन सरः रसः सम्पद्यते, स चानन्द एव, अत एव द्यौपदं तमेव निगूढं व्युत्पादयति। सापेक्षनिरपेक्षानन्दयोस्तयोरुपमानोपमेययोः समुद्रसरसोराशिकं साम्यमनन्तत्वमात्रेण बोद्धव्यम्। तृतीयमुत्तरमुपक्षिपति–इन्द्रः=अनन्तैश्वर्यसम्पन्नः परमात्मा 'इदि परमैश्वर्ये' स्मरणात्। परमैश्वर्यं परमेश्वरस्यैव नान्यस्य सम्भवति। परमत्वञ्च तस्य निरतिशयत्वेन, आनन्द इव। तथा चाम्नायते–'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती ३ तस्मादिदन्द्रो नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः।' (ऐ. ३ । १३) इति। पृथिव्यै=

पृथिवी—उपलक्षणं सर्वेभ्यः पृथिव्यादिभ्यो भूतेभ्यः, वर्षीयान्=वरिष्ठः—वृद्धतरः—महत्तर इति यावत्। तस्य सर्वकारणत्वात् सर्वाधिष्ठानत्वाच्च निरतिशयं महत्त्वं तल्लिङ्गेन मन्तव्यम्। '**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।**' (क. ३।११) इति श्रुतेः। चतुर्थमुपहरति—गोः=सुखरूपस्य स्वर्गस्य—मोक्षपदाभिधेयस्य, मात्रा=परिमाणं—इयत्ता न विद्यते, अनन्तत्वात्, '**न च पुनरावर्तते**' (छा. ८।१५।१) '**तेषां न पुनरावृत्तिः**' (बृ. ६।२।१५) इति च श्रुतेः। '**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।**' (गी. १५।६) इति स्मृतेश्च। यद्वा गोः=स्वरूपभूतायाः ज्ञानदृष्टेः, मात्रा=अल्पत्वं—परिमितत्वं न विद्यते, यतस्तस्या अविनाशित्वेन व्यापकत्वेन च युगपत्सर्वस्य सदा प्रकाशकत्वात्। तथा चाम्नायते—'**न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्।**' (बृ० ४।३।२३) इति। यद्वा गोः—वाण्याः—सर्वात्मनो ब्रह्मस्वरूपस्य बोधिकाया उपनिषल्लक्षणायाः, मात्रा=मूल्यं न विद्यते, अमूल्यं तत्परमं धनं या ब्रह्मवाणी, महता भागधेयेनाधिकारिणैव लभ्यत्वात्; अत एव '**पृथिवीमिमां यद्यपि रत्नपूर्णां दद्यात् न देयन्त्विदमप्रताय।**' (म. भा. ३१०।३८) '**न देयमैन्द्रादपि राज्यतोऽधिकम्**' (उपदेशसाहस्री १६।७४) इत्यादौ तस्या अमूल्यत्वं स्मर्यते। इति। गोशब्दस्य स्वर्गाद्यनेकार्थेषु पठितत्वात्तथैवात्रापि व्याख्यानं नायुक्तमिति।

अथाधिदैवतम्—सूर्यसमं ज्योतिः ब्रह्म=वेदत्रयीलक्षणम्। यथा सूर्येण सर्वं प्रकाश्यते, तथा स्वतः प्रमाणेन सर्वज्ञकल्पेन वेदेन सर्वं वस्तुजातं यथावद्वर्ण्यते। समुद्रसमं सरः द्यौः—अन्तरिक्षं, यतो वृष्टिर्भवति। पृथिव्यै=पृथिव्याः सकाशात्तद्वास्तव्येभ्यो वा इन्द्रः=त्रिभुवनाधिपो देवराजः, वर्षीयान् अतिश-

येन वृद्ध । तत्पालकत्वात्–पितृत्वेन तत्त्व तत्र सम्भाव्यते । तु=पुन , गो = धेनो ,मात्रा=मूल्यं न विद्यते, सर्वस्य यज्ञस्य लोकस्य च धारकत्वात् , सर्वदेवनिवासस्थानत्वाचामूल्य धन सा महता प्रयासेनापि रक्षणीयमिति भाव ॥

× × ×

## ( ५४ )

### ( पञ्चभूतप्रविष्टस्य सर्वाधिष्ठानस्य ब्रह्मणः सत्यत्वेनैकत्वेन च निरूपणम् )

एक एव पूर्ण पुरुष परमात्मा, स च सर्वस्य द्रष्टा साक्षी च, स न कदापि दृश्य साक्ष्यो वा भवितुमर्हति, यत तस्य स्वत सिद्धःवादनन्याश्रयत्वाच्च । अत एव पृथिव्यावाकाशान्तेषु पञ्चसु भूतेषु ब्रह्मादिस्थावरा तषु भौतिकेषु शरीरेषु च स्वकीयां सत्ता स्फूर्ति प्रियता च समर्पयितु प्रविशति, यत स्तेषामनृतजडपरिच्छिन्नपराधीनाना परागर्थानां स्वत सत्तादिरहितत्वात् , अत एव तानि भूतानि भौतिकानि च सर्वाणि शरीराणि तत्रैव स ये चेतनेऽपरिच्छिन्ने स्वत प्रकाशे प्रत्यगर्थे पुरुषे समर्पितान्यस्तानि–कल्पितानिसन्ति । न हि सर्वभूताधिष्ठान पुरुषाऽसौ केनचित्कल्पयितु शक्यते, तद्भिन्नस्य कस्यचिदधिष्ठानस्याभावात् , निरधिष्ठानकल्पनस्यायोगाच । शून्यमेव तदधिष्ठान स्यादिति चेन्नैवम् ; शून्य साधयता साक्षिणोऽवश्यमभ्युपेयतया तस्यैवासिद्धे । तस्यैतादृशस्य पुरुषस्य निरवयवत्वादप्रविष्टदेशाभावाच ग्रामादाविव मुख्यस्य प्रवेशस्यासम्भवेन प्रवेशश्रुति –' **एकस्यैवात्मन इमानि पाञ्चभौतिकानि शरीराणि न प्रतिशरीरमात्मभेदः । अत एवाविद्यातत्कार्यापोहेन सर्वभूतकल्पनाऽऽस्पदो निर्विकल्पः स एव सर्वैरप्यधिगन्तव्यः** ।' इति तात्पर्यं बोधयन्ती

मुमुक्षुभ्यः सर्वसिद्धिमूलं सार्वात्म्यदृष्टिं समर्पयति। आत्मनः सर्वत्र सार्वात्म्यस्य दृढतमानुभवेन सम्प्रज्ञातसमाधिं भजमानो योगी सोपाधिब्रह्मवित् भवति। एवं यदाऽधिष्ठानज्ञानदार्ढ्ये सति सर्वाणि भूतानि भौतिकानि चाध्यस्तानि 'रज्ज्वामिवाध्यस्तसर्पदण्डधारादीनि' तत्रैव पूर्णात्मन्येकतां गतानि भवन्ति, तदा तद्दर्शनाभावेनानायासतोऽसंप्रज्ञातसमाधिं भजमानो योगी निरुपाधिको ब्रह्मवित् भवति। तदुक्तं वार्तिके—'**सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते। सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः॥**' इति (बृहदारण्यकभाष्यवार्तिके) यद्यपि वस्तुतः तत्त्वविद्दृष्ट्या नामरूपात्मकं भूतभौतिकादिलक्षणं दृश्यमेव नास्ति, अतस्तत्प्रवेशसमर्पणादिकमपि नास्त्येव, तथापि बाह्यार्थोपहृता हि लोकानां बुद्धिः। अत एव तेऽविवेकिनः, तेषां बुद्धिमात्मन्यवतारयितुमध्यारोपापवादन्यायेन श्रुत्या प्रवेशसमर्पणादिकल्पना क्रियते। इत्यादिकं रहस्यं तात्पर्यतो बुबोधयिषुः मन्त्रदृक्-ऋषिः '**केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषेऽर्पितानि**' (शु. य. २३। ५१) इति प्रश्नस्य प्रतिवचनमाह—

**ॐ पञ्चस्वन्तः पुरुष आविवेश,**
**तान्यन्तः पुरुषे अर्पितानि।**
**एतत्त्वाऽत्र प्रतिमन्वानो अस्मि,**
**न मायया भवस्युत्तरो मत्॥**
(शु. य. २३। ५२)

पञ्चसु=आकाशादिषु शरीराकारेण परिणतेषु पञ्चात्मकेषु स्थावरजङ्गमेषु सर्वेषु भूतेषु च अन्तः=मध्ये, एक एव नित्यो विभुः प्रत्यक् चेतनः साक्षी

परमार्थसत्य आनन्दघनः पुरुषः=सर्वासु पूर्षु=शरीरेषु शेतेऽनुस्यूतो भवति । पूर्णो वाऽनेन सर्वमिति व्युत्पत्त्या सर्वानुगतः पूर्णत्वेन पुरुषो भोक्तृतया जीवरूपेण, आविवेश=प्रविष्टः । तथैव श्रुत्यन्तराण्यपि–'**तत्सृष्ट्वा तदेवानुप्राविशत्**' (तै. २ । ६) '**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**' (छां. ६ । ३ । २) इत्यादीनि । पुराणवचांस्यपि च–'**ईश्वरो जीवकलया प्रविष्टो भगवानिति ।**' (भा. ३ । २९ । ३४) इत्यादीनि । तस्मिन् पुरुषे अन्तः=मध्ये, तानि=सर्वाणि भूतभौतिकानि 'भित्तौ चित्राणीव'–अर्पितानि=आध्यासिकेन कल्पिततादात्म्यसम्बन्धेन भोग्यतया 'सूर्यमरीचिष्वध्यस्तजलानीव' कल्पितानि, साक्षिसाक्ष्ययोः सम्बन्धान्तरानुपपत्तेः । हे शिष्य ! अत्र=अस्मिन् त्वत्कृते प्रश्ने समुपस्थिते सति, एतत्=सर्वाधिष्ठानत्वसर्वात्मत्वपूर्णत्वादिलक्षणं पुरुषस्वरूपं, त्वा=त्वां मेधाविनं साधनसम्पन्नं श्रद्धालुं शिष्यं, प्रतिमन्वान अस्मि=प्रतिजानानोऽस्मि, तत्प्रश्नसमाधानं प्रतिज्ञापूर्वकं यथार्थं वच्मीत्यर्थः । एवं सत्यमुत्तरं ददामीति यावत् । '**वर्तमानसामीप्ये वर्तमानवद्वा**' इति न्यायात् । आगतवानस्मीत्यर्थे, अयमागच्छामीतिवत्, प्रतिज्ञातवानस्मीत्यर्थे, प्रतिजानानोऽस्मीति ज्ञेयम् । ननु–तर्हि तत्पुरुषस्वस्वरूपमहं कथं नानुभवामीत्याशङ्क्याह–मायया=अविद्यया हेतुना तत्स्वस्वरूपं त्वं न भवसि=नानुभवसीत्यर्थः, तमसा छन्नपटादिकमिव, कर्णस्य कौन्तेयस्वरूपमिव च । भ्वादिधातूनां सत्तार्थनिर्देशस्योपलक्षणत्वाश्रयणात् '**यागात्स्वर्गो भवती**' त्यादौ प्राद्युपसर्गं विनापि प्रभवार्थप्रतीतिवत्, अत्रापि न भवसीत्यस्यानूपसर्गं विनाऽप्यनुभवार्थप्रतीतिरविरुद्धैवेति बोध्यम् । कदा न्वहं तत्साक्षादधिगन्तुं शक्ष्यामीत्यत आह–यदा च त्वं मत्=मत्तः–तत्त्वबोधोपदेष्टुः सद्गुरोः श्रुतेर्वा श्रवणादीनि सम्पाद्य लब्धविज्ञानः सन् विपरीतप्रत्ययजलजन्मायामहोदधेः,

उत्तरः=उत्तरतीति ' उद्—पूर्वात् तॄधातोः प्लवनसंतरणार्थकात् पचाद्यच् ' उत्तरः =पारगामीत्यर्थः, मुक्त इति यावत् । भविष्यसीति शेषः । मैत्राधिगमे निर्मल-चक्षुषा सवितुः प्रकाशमिव करामलकवत् तत्साक्षादनुभवितुं शक्ष्यसि । ननु—मायापदस्य प्रज्ञानामसु निघण्टौ ( ३ । ९ ) पठितत्वात् । अविद्या कथं माया-पदस्यार्थः ? इति चेन्नैवम्, अविद्या प्रकृति माया तमोऽज्ञानमजाऽनृतम् ।' इति वचनप्रामाण्यात्, अविद्याया मायापदार्थत्वसम्भवात् । तर्हि निघण्टुवचनस्य का गतिः ? इति चेत्, भ्रान्तिरूपाया लौकिक्याः प्रज्ञाया अपि वस्तुतत्त्वतिरो-धानपूर्वकान्यथाप्रतिभासलक्षणस्याविद्याकार्यस्य विद्यमानतया तत्राप्यविद्यावगतिरेव गतिरिति गृहाण । सा च माया—' माया ह्येषा मया सृष्टा ' इति वचन-प्रामाण्यात् । ऐन्द्रजालिकेषु मिथ्याभूतेष्वेव लोके मायाशब्दव्यवहाराच्च विपरीत-प्रत्ययकारणं, ' भूयश्चान्ते विश्वमायानिवृत्तिः ' ( श्वे. १ । १० ) इति श्रुत्या ज्ञाननिवर्त्यत्वेन मिथ्या च निश्चीयते इति सर्वं सुस्थम् ॥

× × ×

## ( ५५ )

### ( विश्वोत्पादकपालकसंहारकस्य विश्वव्यापकस्य विश्वरूपस्य विश्व-नाथस्य भगवत उपासनया सर्वाभीष्टसिद्धिप्रतिपादनम् )

लीलयाऽखिलविश्व-जन्मस्थितिलयकर्तारं विविधविग्रहधारणशीलं निनत-भक्तत्राणरक्षणैकदीक्षितं विश्वव्यापकं विश्वरूपं विश्वेश्वरमभिवर्णयन्तः, स्वाभी-प्सितार्थसिद्धये तमेव भगवन्तं सादरं प्रार्थयन्ते—

**ॐ प्रजापते! न त्वदेतान्यन्यो**

**विश्वा रूपाणि परि ता बभूव ।**

यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥

( शु. य. १० । २० + २३ । ६५ । ऋ. १० । १२१ । १० । अथर्व० ७ । ७९ । ४ + ७ । ८० । ३ । तै सं. १ । ८ । १४ । २ + ३ । २ । ५ । ६ ) ( तै. ब्रा २ । ८ । १ । २ + ३ । ५ । ७ । १ ) ( तै. आ. १० । ५४ । निरु. १० । ४३ )

हे प्रजापते !=विश्वनाथ ! महादेव ! पार्वतीप्राणवल्लभ ! त्वत्=त्वत्तः, अन्यः=भिन्नः कश्चिद् देवताविशेषोऽपि, ता=तानि—प्रसिद्धानि, एतानि=वर्तमानभूतभविष्यत्कालविषयाणि, विश्वा=विश्वानि—सर्वाणि, रूपाणि=नानाजातीयानि सुरनरतिर्यगादिलक्षणानि चराचरात्मकभूतानि, न परिबभूव=परिभवितुं—स्ववशे स्थापयितुं स्वस्मिन्नुपसंहर्तुं वा समर्थो नाभूत्—न भवतीति यावत् । परिभवः सृष्टेः पालनस्य चोपलक्षणं, त्वत्तोऽन्यो न सञ्जीवयति न सृजति चापि तु सृष्टिकाले त्वमेव एतानि सर्वाणि रूपाणि सृजसि, जीवनकाले त्वमेव जीवयसि, प्रलये त्वमेव त्वय्येवोपसंहरसि, नान्य कश्चित् तानि स्रष्टुं रक्षितुं संहर्तुं च शक्त इत्यभिप्राय । यद्वा तानि—एतानि सर्वाणि रूपाणि त्वत्तोऽन्यः कश्चित् न परिबभूव=न परिगृह्णाति—न व्याप्नोति—न व्याप्तुं शक्नोति, किन्तु त्वमेव व्याप्तुं शक्तोऽसीति भावः । परिपूर्वो भवतिरत्र परिग्रहार्थः । यद्वा त्वत्तोऽन्यो भिन्नः कश्चित तानि=प्रसिद्धानि, एतानि—निगमागमशास्त्रेषु जगदीश्वरत्वेन वर्णितानि प्रेमातिशयेन तत्तद्भक्तहृदयेषु परिभावितानि मुमुक्षुभिरपि उपास्यानि—विश्वानि=सर्वाणि, रूपाणि चतुर्भुजचतुर्मुखपञ्चमुखादीनि पुमाकाराणि श्रीभारतीभवान्यादीनि स्त्र्याकाराणि रामकृष्णनृसिंहमत्स्यकूर्मवामन-तावतारलक्षणानि भक्तभावनानुरु-

च्य तदनुग्रहार्थं लीलयैवाविर्भूतानि विभूतिविग्रहाणि न परिबभूव=न परिगृह्णाति, किन्तु त्वमेवैकः तानि कृपया परिगृह्णासि । यद्वा परि=परितः—सर्वतः, एको भवान् भगवानेव तानि रूपाणि बभूव—भवति वा नान्यः । तदुक्तं—'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥' इति । अत एव 'तदभिन्नाभिन्नस्य तदभिन्नत्वन्न्यायात्' ब्रह्माभिन्नेषु तेषु तेषु रूपेष्वपि तत्तद्रूपभावना कर्तव्या, न तेषु पारस्परिकोऽपि भेदभावो विधातव्यः । एतदभिप्रायेणैवाभिहितम्—'हरिरूपी महादेवो लिङ्गरूपी जनार्दनः । ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥' इति बृहन्नारदीयपुराणे । 'यो ब्रह्मा स हरिः प्रोक्तो यो हरिः स महेश्वरः । या काली सैव कृष्णः स्याद्—यः कृष्णः सैव कालिका ॥' इति शारदातिलके च । अत एव तत्तद्रूपेष्वपि तत्तद्रूपकार्यदर्शनात्—न तद्रूपस्यैव निर्णयः । तथाहि—चतुर्भुजशरीरिणो विष्णुनाम्नः पालनमेव कार्यमिति वक्तुमशक्यम्; दैत्यसंहारादिकार्यस्यापि दर्शनात्, तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्यत्वात् । एवं पञ्चमुखशरीरावच्छिन्ने शिवनामवति त्रिपुरसंहारादितमःकार्यस्य जगत्पालनफलकत्वेन, 'ब्रह्मा च तस्मात्प्रसृता पुराणी' (श्वे. ४ । १८) 'विद्याकामस्तु गिरिशम्' (भा. २ । ३ । ७) 'ज्ञानं महेश्वरादिच्छेत्' इत्यादिश्रुतिस्मृतिप्रामाण्यात्, विज्ञानविमुक्तिदानादेश्च विष्णुकार्यत्वदर्शनात् न रुद्रकार्यनिर्णयसम्भवः । एवं भवान्यादेर्दैत्यादिसंहर्त्रीत्वेऽपि—'शरणागतदीनार्तपरित्राणपरायणे ! । सर्वस्यार्तिहरे ! देवि ! नारायणि ! नमोऽस्तु ते ॥' इत्यादिमार्कण्डेयपुराणवचनप्रामाण्यात्, पालनरूपविष्णुकार्यत्वदर्शनात् । हरिवंशादौ विष्ण्वादिरूपत्वस्य स्पष्टमुक्तत्वाच्च न तदेकरूपत्वनिर्णयः । एवं सरस्वत्यादेरपि पालनादिकार्ये वेद-

पुराणादौ तत्र तत्रोक्तम् । तस्मात्—एकस्यैव परमेश्वरस्य तत्तद्विविधरूपपरिग्रहणादेव तत्तद्रूपकार्यत्वदर्शनाच्च शिवादेरपि चतुर्भुजादिरूपं, विष्ण्वादेरपि पञ्चमुखादिरूपं, गणान्यादेरपि श्रीभारत्यादितत्तद्रूपं परिभावनीयम् । अत एव हरिनारायणमहादेवशङ्करादीनि तत्तन्नामान्यपि सर्वरूपार्थाभिधायकानि, एकाभिन्नतत्त्वगमकानि मन्तव्यानि न तेष्वपि भेदभावोऽवलम्बनीयः । तथा चोक्तं—महादेवेन विष्णुं प्रति—'नामानि तव गोविन्द ! यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥ त्वदुपासा जगन्नाथ ! सैवास्तु मम गोपते ! । यश्च त्वां द्विषते देव ! स मां द्वेष्टि न संशयः ॥ अहं त्वं सर्वगो देवः त्वमेवाहं जनार्दन ! । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्त्रये ॥' इति । ननु—स्वेष्टोपास्य एकस्मिन् तस्मिन्—रूपे तदितररूपभावनया तदितरनामग्रहणेन चानन्यभक्तिव्यभिचारः स्यादिति चेत्, बाढम्, परन्तु तदितररूपेष्वपि तद्रूपदर्शनेन तदितरनामस्वपि तन्नामप्रत्ययेन च तद्व्यभिचाराभावात् । तन्नामरूपभिन्नबुद्ध्या तदितरनामरूपदर्शनग्रहणे सत्येव तत्सम्भवः तु; तत्तन्नामरूपभेदस्यात्र तिरस्कृतत्वात् । सर्वनामैक्यप्रत्ययस्य चाभितागदनन्यभक्तेर्दार्ढ्यमेवावधेयम् । यतोऽन्यस्मिन्नपि तदनन्यत्वस्य—अनेकस्मिन्नपि तदेकत्वस्य भावनयैवाऽनन्यभक्तिः सिद्ध्यतीति भावः । अथवा—त्वत्तोऽन्यः कश्चित् विश्वा रूपाणि जातानि यस्मिन्नुपलभ्यमानानि परि=समन्ततो न बभूव । किन्तु भवानेवैकः सर्वाणीमानि रूपाणि बभूव । अत एव—'सर्वं खल्विदं ब्रह्म' (छा. ३ । १४ । १) 'वासुदेवः सर्वमिति' (गी. ७ । १९) 'हरिरेव जगज्जगदेव हरिः' इत्यादिश्रुतिस्मृत्यादिभिस्त्वमेव विश्वरूपत्वेन परिगीयसे । यस्मादेव तस्मात्ते=तुभ्य निखिलजगदुत्पत्तिस्थितिलयकर्त्रे विविधविभूतिविग्रहलीलाधर्त्रे भक्तेषु निरवधिकानुकम्पाभर्त्रे विश्वरूपिणे भगवते जुहुमः

=त्वत्प्रीतये श्रौतस्मार्तपुण्यकर्मानुष्ठानोपयोगिहविस्त्यागं कुर्मः । यद्वा जुहुमः—त्वां प्रीणयामः प्रसादयामः इत्यर्थः, सत्कर्मादिभिरिति शेषः । यद्वा तादृशे ते=संविदेकरसात्मे त्वयि जुहुम=मनोद्रव्यं प्रक्षिपामः—समर्पयामः नान्यगामिनाऽभ्यासयोगयुक्तेन मनसा त्वामेव सततं परिचिन्तयाम इति यावत् । यद्वा जुहुमः=स्वहृदये त्वामेवानन्दनिधिं परमप्रेमास्पदं सर्वात्मानमात्मना ध्यानयोगेन आददे—परिगृह्णीमहे इत्यर्थः । 'हु दानादानयोः' स्मरणात् । दानञ्चेह प्रक्षेप.—समर्पणम् । पातञ्जलमहाभाष्ये प्रीणनेऽप्ययं स्मर्यत इति । अत एव यत्कामाः=यस्मिन् कामोऽभिलाषो येषामस्माकं ते वयं यत्फलं कामयमानाः त्वदुपासकाः जुहुमः, तत्=वाञ्छितं वस्तु, नः=अस्मभ्यं, अस्तु=श्रौतस्मार्तसत्कर्मस्मरण-ध्यानादिफलत्वेन सिद्धयतु इत्यर्थः । किञ्च तव परमसुधामयापाङ्गालोके पतिता वयं रयीणां=विद्याविनयधर्मयशोरूपपराक्रमसम्पदा—इहामुत्रोपभोग्यभोगैश्वर्यसम्पदां मोक्षसाधनाध्यात्मिकस्वात्मलक्ष्मीसम्पदाञ्च पतयः=अधिपतयः—स्वामिनः स्याम=भवेम इति वयं प्रार्थयामहे । इति ।

अयं मन्त्रो ब्राह्मणपरिव्राजकभोजनभिक्षादौ पार्वतीपतिप्रीतिकृदुदकदान-सङ्कल्पे विनियुज्यते, तस्मिन् पक्षे ब्राह्मणादिमुखाग्नौ मिष्टान्नरूपहव्यत्यागरूपं होमं कुर्म इति, व्याख्यायान्यत्सर्वमेतदनुकूलत्वेन व्याख्यायतामितिदिक् । ता च, विधा च, इत्यत्र 'शेश्छन्दसि बहुलम्' इति जसश्शेर्लोपः ।

× × × ×

## (५६)

( गिरिनदीसमुद्रादिकं कार्यं जगत् कारणस्य परमेश्वरस्य महान्तं महिमानं सूचयति )

सर्वस्य विश्वस्य कारणं परमेश्वर एव; न हि कार्यं कारणरहितं भवितुमर्हति । अतिप्रसङ्गात् । स्वभावस्यैव कारणताऽस्तु कृतमीश्वरेण चेतनेनेति चेत् ? सोऽपि निरूप्यः ? किमसौ जडो वा चेतनो वा ? ताभ्यां विलक्षणोऽनिर्वचनीयो वा ?, प्रथमे तत्क्रियायाश्चेतनाधिष्ठानकार्यत्वावधारणात् चेतनकारणत्वसिद्धिः, द्वितीये नाममात्रे विवादः, तृतीये तत्साधकप्रमाणाभावात् । अपि चाचेतनाः सर्वे गिरिनद्यादिपदार्थाश्चेतनयोजिताः सन्तः प्रवर्तन्ते । तदन्तरेणापि ते स्वतः प्रवर्तेरन् इति चेत् ? तर्हि वात्यादयोऽपि लोके स्वतःप्रवर्तमाना दृष्टिपथपथिका भवेयुः । अतोऽवगम्यतेऽस्ति कश्चिदायोजकः । किञ्चेदं क्षित्यादिब्रह्माण्डपर्यन्तं सर्वं जगत्प्रभूतगुरुत्ववदपि न पतति, ततोऽधिगम्यतेऽस्ति कस्यचिद्विधारकस्य सर्वातिशायिशक्तिमतः प्रयत्नविशेषः, नियति विहङ्गमशरीरधारणप्रयत्नवत्, तेन साक्षाद्वा परम्परया वाऽधिष्ठितमिदं यथामर्यादमवतिष्ठते, नाधो गच्छति, तथा च क्रियामात्रे प्रयत्नस्य हेतुत्वात्, तस्य ज्ञानपूर्वकत्वाच्च, तौ च चेतनधर्मत्वेन प्रसिद्धौ, तद्वन्तं चेतनं कमपि विश्वविधारकं लक्षयतः । धर्माधर्मलक्षणाददृष्टादेव तदुपपत्तेः सोऽन्यथासिद्धः स्यात् इति चेत्; तस्यापि प्रयत्नान्वयव्यतिरेकानुविधायित्वेन तत्कार्यत्वात् तेन तदपलापस्याशक्यत्वात् । क्षेत्रज्ञप्रयत्नः तद्विधारणादिकारणं स्यात् इति चेत् ? तस्य तादृक्सामर्थ्याभावात् । भूयसां क्षेत्रज्ञानां सम्मिलितः प्रयत्नः समर्थः स्यात् इति चेत् ? नानेश्वरवादापातात्, विरोधे सति कार्यभङ्गप्रसङ्गात् तेषां तथाशक्तत्वेन तादृगनुभवाभावाच्च । न ह्यस्मदादिभिरल्पशक्तिभिरर्वाग्दर्शिभिः संमिलितैरपि पृथिव्यादयो निर्मातुं वा विधर्तुं वा शक्याः सन्त्यतो नास्त्यनुभवोऽपि तादृशः । तस्मादखिलजगन्निर्माणधारणसमर्थ एक एव कश्चिदीश्वरोऽवश्याभ्युपेय इति सिद्धम् । अत एव भूमण्डलवास्तव्याः समस्ता जनाः तं यथा कथञ्चिदखिलविश्वकारणतयाऽभ्युपगच्छन्तः तस्मायं क-

मप्यभीप्सितमर्थं याचमाना विभिन्ननामरूपादिभिस्तमाराधयन्त्येव । तेषु तावदौपनिषदा ब्रह्मवादिनो महापुरुषाः समेतं 'नित्यशुद्धबुद्धमुक्तानन्तानन्दज्ञानघनस्वभावः सर्वात्मा पूर्णाद्वैत इति, मत्वा समुपासते । विष्णुरिति वैष्णवाः, शिव इति शैवाः, शक्तिरिति शाक्ताः, यज्ञपुरुष इति याज्ञिकाः, गणपतिरिति गाणपत्याः, सूर्य इति सौराः, सर्वज्ञो बुद्ध इति बौद्धाः, अर्हन्निति जैनाः, विश्वकर्मेति शिल्पिनः, प्रजापतिरिति कुलालाः, लोकव्यवहारसिद्धः कश्चिदिति लौकायतिकाः, अहुरमज़्दा इति पारस्याः, अल्लाह इति यवनाः, गॉड इति ईसामतानुगाः, मुम्बुरिति आफ्रिकानिवासिनः, इत्येवमादिनाऽखिलविश्वव्यापप्रसिद्धानुभावे तस्मिन् परमेश्वरे नास्तित्वशङ्काया अवसर एव कुतो लभ्येत ? । ननु–भो ! ईश्वरोऽसौ सशरीरो वाऽशरीरो वा जगत् निर्मिमीते बिभर्ति च ? नान्त्यः–अशरीरस्य निर्माणधारणादिकार्यकर्तृत्वादर्शनात् । नाद्यः–विकल्पग्रस्तत्वात्, तथाहि–तच्छरीरं नित्यमनित्यं वा, आद्ये सावयवेश्वरनित्यशरीरवत् जगतोऽपि नित्यत्वाविरोधेनेश्वरासिद्धेः । अन्त्ये–तद्व्यतिरिक्तस्तच्छरीरहेतुर्वाच्यस्तदानीं तस्याभावात्; स्वयमेव स्वशरीरहेतुरिति चेन्न, अशरीरस्य तथात्वासिद्धेरिति । अत्रोच्यते–अशरीरस्यापीश्वरस्य किञ्चित्सामर्थ्यवशादेव निर्माणादिकर्तृत्वमुपपद्यते, नहि सर्वत्र दृष्टानुसरणं युक्तम् । श्रुतिविरोधे तस्याकिञ्चित्करत्वात्, दृष्टमेव मन्तव्यमिति दुराग्रहावलम्बने स्वपितृनिर्णयस्याप्यसम्भवापातात्, स्वजननीवचनात्तन्निर्णयश्चेत्, तर्हीत्रापि तद्वत् श्रुतिमातुश्चरणशरणमवलम्ब्यताम् । श्रुतिश्च–'न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे. उ. ६ । ८) 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महा-

न्वम् ॥' ( श्वे. ३ । १९ ) इत्याद्या—परमेश्वरस्य शरीराद्यनपेक्षता निशिष्टा-प्रतिहतापरिमितसामर्थ्यवत्ता च दर्शयति । अपि च शरीराद्यव्यतिरेकानुविधायिनि कार्ये समुपस्थिते परमेश्वरोऽवतारान्तरा बहूनि मायिकानि शरीराण्यपि गृह्णात्येव, प्रकटयति च तद्द्वारा स्वामसाधारणां विभूतिमिति । तथापि न तानि लोकोत्तराण्यपि नित्यानि प्रमाणाभावात् । ब्रह्मभिन्नस्य सर्वस्य सान्तत्वसिद्धान्तात् । एवमन्यासर्वे पूर्वोक्त शङ्काजातमनभ्युपगमपरास्त प्रत्येतव्यमिति । तस्मादशरीरो वा सशरीरो वा विश्वेश्वरो लीलया सर्वं कार्यं कर्तुं समर्थ एव । अथाऽऽप्तकामो-ईश्वरः कुर्वाणः किमर्थं नित्य करोति ? लोके हि ये कर्तारो भवन्ति ते किञ्चिदुद्दिश्य प्रवर्तन्ते, इदमादास्यामि, इदं हास्यामि चेति; न पुनरीश्वरस्य हेयमस्ति किञ्चित् दुःखाभावात्, नोपादेयं, समवाप्तकामत्वात् 'आप्तकामस्य का स्पृहा' इत्युक्तत्वात् । क्रीडार्थमिति चेत् 'क्रीडा हि नाम स्वार्थं भवति, न च स्वार्थी भगवान् दुःखाभावादेव, दुःखिनो हि दुःखापगमसुखोपगमार्थं च क्रीडन्ति, न चानन्दनिधेस्तस्य सुखोपगमेऽपि तस्य स्वतःसिद्धत्वात् । वैश्वरूप्यविभूतिख्यापनार्थमीश्वरः सृजतीति चेत्, एतदपि तादृगेव, न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते, न चास्याख्यापनेन किञ्चिद्धीयते इति । किमर्थं तर्हि करोति ? तत्स्वाभाव्यात्प्रवर्तते इत्यनुक्तमुत्तरम् । स्वभावो हि माया अविद्या, 'मायां तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम् ।' ( श्वे. ४ । १० ) इति श्रुतेः । प्रकृतिः=अनिर्वचनीयोऽघटघटनापटीयान् स्वभावविशेष इत्यर्थः । अतो नैसर्गिकमायाविनिर्मितेयं सृष्टिः । न हि परमानन्दस्वभावस्याप्तकामस्यानिष्क्रियस्य परस्य तस्य मायां[1] विना सृष्टिनिर्माणादौ-ऽभावस्त्व

---

[1] यदाहु—'काचिद्विद्यामोहमूर्तिः परपुरुषरता राक्षसो प्रादुरासीत् । सा गर्भिण्यर्भकौघं विषममजनयत्प्रभूताभिधानम् । यात्येकं

विभूतिख्यापनक्रीडाभोगादिकञ्च संपद्यते। मायया स्वभावेन तु तत्सर्वमुपपद्यते। तथा च वृद्धा अप्येवमूचिरे–'**देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा।**' ( मां. का. १ । ९ ) इति। यथाऽधिष्ठानभूतरज्ज्वादीनां स्वभावशक्तितस्वाज्ञानादेव सर्पाद्याभासत्वं, तथा परमात्मनः स्वमायाशक्तिवशादाकाशाद्याभासत्वम्। '**इन्द्रो मायाभिः पुरुरूप ईयते**' ( ऋ. ६ । ४६ । १८ ) इति श्रुतेः। अत एव तत्त्वबुभुत्सवो मुमुक्षवो मायामयीं निष्प्रयोजनामिमां सृष्टिं नाद्रियन्तेऽपि तु समादरेण प्रयोजनवतीं परमार्थतत्त्वचिन्तामेव सदा वितन्वते। न हि सृष्टिरुपास्यत्वेन ज्ञेयत्वेन वा स्वतन्त्रपुरुषार्थाय कल्पते, '**सृष्टिमुपासीत, सृष्टिविच्छ्रेयः प्राप्नोति**' त्येवं वचनाभावात्। यथा सूत्रमाकाशे निक्षिप्य तेन सायुधमारुह्य चक्षुर्गोचरतामतीत्य युद्धं कृत्वा खण्डशश्छिन्नं पतितं पुनरुत्थितञ्च मायाविनमैन्द्रजालिकं पश्यन्तो बुद्धिमन्तः तत्कृतमायादिसतत्त्वचिन्तामादरेण नातिष्ठन्ते, किन्तूपेक्षन्ते तद्वत्। अत एव सृष्टिवाक्यानां न सृष्टौ तात्पर्यमपि तु–'अध्यारोपापवादन्याये न' परमकारणे निर्विशेषेऽद्वैते ब्रह्मण्येव, **यत्परः शब्दः स शब्दार्थः**'[१] इति न्यायात्। अत एव–'**वाचारम्भणं**

---

**नामधेयैरतिजडमपरं धावतीतस्ततोऽन्यत्। वाह्यान्तःशून्यमन्यद्भवति तदपरं किं पुनस्तत्समाजे॥**' इति।

१ यत्तात्पर्यपरः शब्दः स शब्दार्थः। यथा पित्रा मित्रपुत्रं प्रति 'विष भुंक्ष्व' इत्युक्तम्। अस्य वाक्यस्याऽऽज्ञाक्रमत्वात् बाधिते प्रतीयमानेऽर्थे विषभक्षणे तात्पर्याभावेन शत्रुगृहभोजननिषेधपरत्वमभ्युपगम्यते, तथा सृष्टिवाक्यानामपि श्रुतिबाधिते प्रतीयमानार्थे तात्पर्यायोगेनाद्वितीयब्रह्मपरत्वेन तस्यैव प्रतिपादकत्वमभ्युपेयं, यतः प्रपञ्चस्य लोकसिद्धत्वेन श्रुतिविधितत्वेन च तत्र तात्पर्यायोगात्, अज्ञाताबाधितार्थस्यैव शास्त्रतात्पर्यविषयत्वात्, प्रपञ्चपरत्वे 'नेह नानाऽस्ति किञ्चन' ( बृ. उ. ४ । ४ । १९ ) इतिप्रतिषेधानुपपत्तेश्च॥

विकारो नामधेयं मृत्तिकेत्येव सत्यमिति'' (छां. ६ । १ । ४) श्रुत्याऽऽकाशादिसृष्टिलक्षणस्य विकारजातस्यानृतत्वं तत्कारणस्यैव च केवलं सत्यत्वं स्पष्टं निर्धार्यते। तस्मात्समस्तानि सृष्टिवाक्यानि 'फलवत्सन्निधावफलं तदङ्गम्'[४] इति न्यायेन वस्तुतः तत्कारणब्रह्मैकबोधावतारपराण्येव मन्तव्यानि नान्यपराणीति। यदाहुः—शास्त्ररहस्यविदो गौडपादाचार्या भगवत्पादाचार्याश्च—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा। उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥' (मां. का. ३ । १५) इति। 'न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः, न हि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा। न च कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यतया गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—'अन्नेन सोम्य! शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' (छां. ६ । ८ । ४) इति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यते इति गम्यते' (ब्र. सू. १ । ४ । १४) इत्यादिकं तात्पर्यमनुसन्धाय लोके

---

१ विकारो घटशरावादिरूपः कार्यसमुदायो वाचाऽऽरम्भणं—आरभ्यते इत्यारम्भणं वाचा व्यवहारमात्रं नामधेयं—नाममात्रं शब्दव्यतिरेकेण वस्तुतो विकारः कोऽपि नास्ति, मिथ्येति यावत्। किं तर्हि सत्यम्? मृत्तिकेव उपादानभूत ब्रह्मैवाऽवधारणेन गम्यमानः कार्यसत्त्वव्यवच्छेदस्तन्मिथ्यात्वं गमयति ॥

४ यथा स्वर्गादिफलवतो दर्शपूर्णमासादेः सन्निधाने श्रुत प्रयाजादिकं स्वतोविफलं तदङ्गमित्यभिधीयते, तथा मोक्षफलवद्ब्रह्मदर्शनसमाम्नानसन्निधावफलं जगद्योनित्वं सृष्ट्यादिदर्शनञ्च समाम्नायमानं ब्रह्मज्ञानशेषतया तत्फलेनैव फलवत्त्वात् तदङ्गमवधेयम्।

विश्वसृष्टिकारणत्वेन प्रसिद्धाय—अवाङ्मनसगोचरत्वेन विशेषतोऽनिर्ज्ञातस्वरूपाय परमानन्दनिधयेऽद्वितीयाय तस्मै भगवते देवाय श्रद्धाभक्त्यादिसत्पत्रपुष्पसमलङ्कृतहविरादिसमर्पणेन तमेव परिचरन्तो मन्त्रद्रष्टारो महर्षयः सुष्ठ्वभिधानादिमुखेन तमेव निरूपयन्ति—

ॐ हिरण्यगर्भः समवर्तताग्रे,
भूतस्य जातः पतिरेकआसीत् ।
स दाधार पृथिवीं द्यामुतेमां,
कस्मै देवाय हविषा विधेम ॥

ॐ यः प्राणतो निमेषतो महित्वैक
इद्राजा जगतो बभूव ।
य ईशेऽअस्य द्विपदश्चतुष्पदः,
कस्मै देवाय हविषा विधेम ॥

ॐ यस्येमे हिमवन्तो महित्वा,
यस्य समुद्रꣳ रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू,
कस्मै देवाय हविषा विधेम ॥

ॐ यऽआत्मदा बलदा यस्य विश्व,
ऽउपासते प्रशिषं यस्य देवाः ।

**यस्य च्छायाऽमृतं यस्य मृत्युः,**
**कस्मै देवाय हविषा विधेम ॥**

( शु. य. २५ । १०–११–१२–१३ । ऋ. १० । १२१ । १–२–३–४ )
( अथर्व. ४ । २ । ७+२–५–१ ) ( तै. सं. ४ । १ । ८ । ३–४–६–५ )

हिरण्यगर्भः=हिरण्मयस्य ब्राह्मण्डस्य मध्ये गर्भभूतः—सारभूतः तत्र समनुस्यूतः प्रजापतिः परमेश्वरो हिरण्यगर्भः '**प्रजापतिर्वै हिरण्यगर्भः**' इति तैत्तिरीयश्रुतेः । यद्वा हिरण्यानि—सूर्यादितेजांसि गर्भे यस्य सः—हिरण्यगर्भः परमात्मा इत्यर्थः । अग्रे=भूतादिसृष्ट्युत्पत्तेः प्राक्, एक एवाद्वयः समवर्तत नान्यत्किञ्चिदिति भावः । जातः=जातस्य षष्ठ्यर्थे प्रथमा, मायया स्वस्मादिति शेषः । भूतस्य=आकाशादिनिखिलस्थावरजंगमात्मकविश्वस्य पतिः=स्वामी एक एवासीत् । अथवा हिरण्मयः अण्डो गर्भवद्यस्य उदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे=प्रपञ्चोत्पत्तेः पूर्वं सृष्ट्यादौ समवर्तत=मायाध्यक्षात् सिसृक्षोः परमात्मनः सकाशात् समजायत इत्यर्थः । यद्यपि परमात्मैव हिरण्यगर्भः, तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेः तदुपहितोऽप्युत्पन्न इत्युच्यते । [illegible] च जातः=जातमात्र एव, एकः=अद्वितीयः सन्; भूतस्य=उत्पत्स्यमानस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः, पतिः=पालक ईश्वर आसीत् । न केवलं पतिरासीदेव अपि तर्हि स हिरण्यगर्भः पृथिवीं=विस्तीर्णां, द्यां=दिवं—स्वर्गलोकं, उत=अपि च, इमां=अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिमित्यर्थः । यद्वा पृथिवीत्यन्तरिक्षनामसु पठितत्वात्—अन्तरिक्षं—द्यावापृथिव्योरन्तरालवृत्तिर्भुवर्लोकमित्यर्थः । अन्तरिक्षं भूमिं दिवञ्च त्रिभुवनं दाधार=दधार—धृतवान् धारयति वेति यावत् । ईदृशो यः प्रजापति तस्मै

कस्मै=किंशब्दवाच्याय तदिद तादृक् ईदृगित्यनिरुक्तस्वरूपाय विशेषतोऽनिर्ज्ञात-स्वरूपायावाङ्मनसगोचरायेति यावत् प्रजापतये परमेश्वराय। तदुक्तं—' **कीदृक्त-दिति चेत्पृच्छेदीदृक्ता नास्ति तत्र हि। यदनीदृगताहक् च तत्स्वरूपं विनिश्चिनु ॥ अक्षाणां विषयस्त्वीदृक् परोक्षस्तादृगुच्यते । विषयी नाक्षविषयः स्यात्स्वत्वान्नास्य परोक्षता ॥** ' इति॥ ( पञ्चदशी पञ्चकोश-विवेकप्रकरणे) एवमन्यत्रापि—**तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर ! यादृशोऽसि महादेव ! तादृशाय नमो नमः** ॥' इति। यद्वा कस्मै=सृष्ट्यर्थं भक्तपरिरक्षणार्थं च कामयते यः सोऽसौ कः—तस्मै—काय—कामिने इत्यर्थः। कमेर्डः प्रत्ययः। यद्वा कं=सुखं तस्मै—परमानन्दनिधये इत्यर्थः। यद्वा एकार-लोपेन कस्मै=एकस्मै—अद्वितीयाय—परमकारणाय ब्रह्मणे इत्यर्थः। यद्वा इन्द्रेण पृष्टः प्रजापतिः ' **मदीय महत्त्वं तुभ्यं प्रदाय अहं कः=कीदृशः स्यामि-त्युक्तवान्, स इन्द्रः प्रत्यूचे यदीदं ब्रवीषि अहं कः स्यामिति तदेव त्व भवेत्यतः कारणात् क इति नाम्ना प्रजापतिराख्यायते** । ' **इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्** ' ( ऐ. ब्रा. ३ । २१ ) इत्यादिकं ब्राह्मणमन्त्रानुसन्धेयम् । यदाऽसौ किंशब्दः तदा सर्वनामत्वात्स्मै-भावः सिद्ध एव, यदा तु यौगिकः तदा व्यत्ययेनेति द्रष्टव्यम् । कथंभूताय तस्मै देवाय=ज्ञानादिगुणयुक्ताय—स्वयप्रकाशमानाय वा । हविषा=मन्त्रसंस्कृत-हवि प्रदानेन यद्वा उपहरणेन वा भक्तिपूर्वकपत्रपुष्पादिसमर्पणेन वा विधेम=परि-चरेम=तं परिषेवेमहि इत्यर्थः। यद्वा तं परमात्मानं विनाऽन्यस्मै कस्मै हविषा= हविष्मता यज्ञेन, विधेम=विध्यनुष्ठानं कुर्मो न कस्मैचित्किन्तु तस्यैव प्रीत्यर्थं सर्वं श्रौतं स्मार्तं कर्म कुर्मः। कर्मणि सम्प्रदानम् । अथवा लक्षणया व्रीह्यादि-हविष्यान्नसमुद्भवं मनोबुद्ध्यादि हवि, विभक्तिव्यत्ययः, तादृशं हविः, विधेम=

द्वयः—समर्पयाम इत्यर्थः। अत एव भगवता श्रीमुखेन गीतासु स्पष्टमादिष्टम्— **'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥'** (गी. १२। ८) इति। भगवत्यात्मनि मनोबुद्धिलक्षणहविःसमर्पणेन भगवद्वस्थानलक्षणमोक्षसिद्धिसम्भवादिदमेव मुख्यं मुमुक्षुकर्तृकं हविःप्रदानं द्रष्टव्यम्। विधतिः परिचरणदानकर्मा।

' यो हिरण्यगर्भः प्रजापतिः परमेश्वरः, प्राणतः=प्रश्वसतः—श्वासोच्छ्वासव्यापारं कुर्वतः। 'श्वस प्राणने' अन च इति धातोः लटः शत्रादेशे अदादित्वात् शपो लुक्। निमिषतः=निमेषणं, अक्षिपक्ष्मपरिस्पन्दलक्षणं व्यापारं कुर्वतः, मिष स्पर्धायामत्रापि पूर्ववत्। जगतः=जंगमस्य—प्राणिजातस्य, स्थावरस्याप्युपलक्षणं महित्वा=महित्वेन, 'सुपां सुलुगिति' तृतीयाया आकार, माहात्म्येनेत्यर्थः। एक इत्=अद्वितीय एव सन् राजा बभूव=अधिपतिः ईश्वरो भवति। 'छन्दसि लुङ्लिङ्लिटः', इति सार्वकालिको लिट्। यद्वा जगतः सर्वस्य मध्ये राजा=राजमानो—विराजमानोऽन्तर्याम्यात्मना बभूवेत्यर्थः। तदेव स्पष्टयति—अस्य=परिदृश्यमानस्य, द्विपदः=द्विपादयुक्तस्य मनुष्यपक्ष्यादेः, द्वौ पादावस्येति विगृह्य समासे 'संख्यासुपूर्वस्य' इति पादशब्दान्त्यलोपः 'पादः पत्' इति पद्भावश्च। चतुष्पदः=पादचतुष्टयोपेतस्य गोमहिषादेः प्राणिनः, रूपसिद्धिः पूर्ववत्। यः=प्रजापतिः, ईशे=ईष्टे—नियमनाय समर्थो भवतीत्यर्थः। 'ईश ऐश्वर्ये' आदादिकोऽयम्। यद्वा ईष्टे=ऐश्वर्यं करोति। 'अधीगर्थदयेशां कर्मणि' इतिषष्ठी। तथा च मनुष्यपश्वादिकं सर्वमपि परिदृश्यमानं प्राणिजातमस्ति, तत्सर्वं निरवधिकमहिमशालिनो भगवत ऐश्वर्यैकदेशभूतमेवास्तीति वेदितव्यम्। यद्वा यः परमात्मा, अस्य=ब्रह्माण्डस्य मध्ये विद्यमानान् द्विपदो मनुष्यादीन्, चतुष्पदो गवादीन् ईशे=शिक्षयति—सर्वप्राणिहृदयपुण्डरीके स्थित्वाऽन्त-

र्यामितया जगत्सर्वं नानाकर्मसु प्रेरयति–तत्फलप्रदानेन निगृह्णात्यनुगृह्णाति चे-त्यर्थः । ईदृशो यः प्रजापतिः तस्मै कस्मै इत्यादिकं पूर्ववत् ।

भूमण्डले विद्यमाना इमे=रमणीयतया परिदृश्यमानाः हिमवन्तः=हिमाः सन्त्यस्मिन्निति हिमवान्, तेन बहुवचनान्तेन हिमाचलस्य सर्वपर्वतराजत्वा-त्तनाम्ना च सर्वे पर्वता महामेरुविन्ध्यसह्यत्रिकूटाचलादयो लक्ष्यन्ते 'छत्रिणो यान्तीति' न्यायात् । इमान् सर्वान् हिमालयप्रभृत्यद्रीन्, यस्य=परमेश्वरस्य वि-श्वान्तर्यामिणः, महित्वा=महित्वं–महान्तं महिमानं, आहुः=कथयन्ति बुधाः । तथा रसया=नद्या, रसो जलं सोऽस्यामस्तीति तद्वती रसा नदीत्यर्थः । रसति=शब्दायते इति वा रसा 'पचाद्यच्' 'रसा नदी भवति रसतेः शब्दकर्मणः' इति निरुक्ते ( ११ । २५ ) यास्कः । जातावेकवचनं व्यक्त्यभिप्रायतो बहुत्वेन परिणेयं, रसाभिः–नदीभिः सर्वाभिः पृथिवीतलगताभिः गंगायमुनानर्मदाप्रभृतिभिः सह, सङ्कोचे कारणाभावात्समुद्रं=सर्वान् लवणादिसमुद्रान् यस्य महित्वमाहुः । एवं यस्य च इमाः प्रदिशः=पूर्वाद्या मुख्यदिशः आग्नेय्याद्याः कोणदिशः सर्वाः बाहू=बाहवः–भुजाः–तद्वत्प्राधान्ययुक्ताः, वचनव्यत्ययः, यस्य महित्वमाहुः, गि-रिनद्यादिकं जगति वर्तमानानामन्येषां पदार्थानामप्युपलक्षकम् । तेन गृह्यत्वात्, तद्रूपेण तस्यैवावस्थानात्, विश्वस्थितपदार्थजातमिदं तस्य महिम्नो विभूतेर्वि-स्तार एवावगन्तव्यम् । यथा हि 'धूमोऽस्ती'ति वाक्यस्य तत्कारणवह्निविषय-कानुमितिपर्यन्तव्यापारताऽभ्युपगम्यते, तथेदं विचित्रं विश्वमस्तीति वाक्यस्यापि तत्कारणपरमेश्वरविषयानुमितिपर्यन्तव्यापारताऽभ्युपेयैव । तथा चात्रापि लोक-बुद्धिमपेक्ष्य गिरिनद्यादिवर्णनेन विलक्षणापरिमितज्ञानशक्तिमतः परमेश्वरस्य सद्भा-वसूचकमनुमानमपि प्रमाणमभ्यन्यस्यते–करुणाकामिन्या सकलात्मसमीक्षितेन भगवता वेदेन । तथाहि–यदिदं जगत् द्युवियत्पृथिव्यादित्यवाय्वग्निचन्द्रग्रहनक्ष-

त्रगिरिनदीवृक्षलतादिविचित्र देवगन्धर्वयक्षरक्षःपितृपिशाचमनुष्यपशुपक्षिकीटपतङ्गादिविविधप्राण्युपभोगस्थान, मनसाऽप्यचिन्त्यरचनारूपं तदत्यन्तकुशलशिल्पिभिरपि दुर्निर्माण प्रतिनियतदेशकालनिमित्तकर्मफलाश्रयं, तद्विषयकविशिष्टज्ञानशक्तिप्रयत्नवच्चेतनकारणपूर्वकं भवितुमर्हति, तादृशलक्षणविशिष्टकार्यत्वात्, प्रासादरथयन्त्रादिवत्। न चेदमप्रयोजक, जन्यत्वेन जनकत्वेन च कार्यकारणभावलक्षणस्यानुकूलतर्कस्य सद्भावात्। न चास्य ज यत्वमेव कथ प्रत्यक्षतो दृष्टत्वादनतिशङ्कनीयमेतत्। अन्यथा ध्वंसानुपपत्ते। इत्यत्र विस्तर। यद्वा यस्य बाहु इति पृथक् पद, यस्य भुजौ जगद्रक्षणकर्तारौ स्त इति शेष। सर्वस्य प्राणिजातस्य य परमपितृभूतोऽस्ति। अत तेनैव त परिरक्षणीय भवेदित्यत्र किमु वाच्यम्। अत एव यथा लौकिक पिता हितोपदेशतदाचरणादिना पुत्रान् परिरक्षति, इद कर्तव्यमिदमकर्तव्यमिति हितविधानाद्धितव्यासेधो च ज्ञापयति, तथैवाय प्रजारक्षको विश्वपिता परमेश्वरोऽपीति भाव। कस्मै देवाय हविषा विधेम इति।

य=परमात्मा आत्मान ददातीति आत्मदा, स्वोपासकाना स्वस्वरूपलक्षणमोक्षप्रद इत्यर्थ। यद्वा आत्मदा=आत्मना—जीवात्मना दाता—उत्पादक इत्यर्थ। आत्मानो हि सर्वे तस्मात्परमात्मन उत्पद्यन्ते, यथाऽग्ने सकाशात् विस्फुलिङ्गा जायन्ते तद्वत्। यद्वा आत्मदा=जीवरूपेणात्मानमेवाविद्यया शरीरादिषु ददाति—प्रक्षिपतीत्यर्थ। **'तदात्मान स्वयमकुरुत'** (तै. आ. २।७) इति श्रुते। यद्वा आत्मना शोधयिता इत्यर्थ। 'दैप् शोधने' स्मरणात्। 'आतो मनिन्' इति विच्। तेषा शोधनमनेकविधं, शोधनञ्च दोषनिरासपूर्वक गुणाधानम्। दुष्टानाम युष्मद्दण्डनिपातेन कुबुद्धिनिवृत्तिपूर्वकस्य मार्गस्थापनलक्षण,

सकामानां भक्तानां तत्तत्कामितार्थप्रदानेन खेदप्रदकामनिवृत्तिपूर्वकस्वेष्टसिद्धि-प्रसूतप्रमोदाख्यानन्दं, जिज्ञासूनां निष्कामभक्तानां तत्त्वविज्ञानसमर्पणेन निखि-लानर्थमूलाज्ञाननिवृत्तिपूर्वकपरमानन्दावाप्तिरूपमभिप्रेतं यथायथं बोध्यम् । यद्वा ऽऽत्मविद्यामलङ्कृताधिकारिषु आत्मानमेव ददाति—समर्पयति—प्रकाशयतीति सोऽसौ तथा । आत्मग्रहणमत्र स्वतोऽनन्यत्वप्रदर्शनार्थम् । आत्मशब्दस्य प्रत्य-गात्मविषय एव मुख्यत्वात् । '**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ।**' (क. १ । २ । २२) इति श्रुतेः । तथा बलदा= बलं—ऐश्वर्यप्राप्तियोग्यसामर्थ्यं, सत्त्वशुद्धिभक्तिविवेकादिश्रवणादिसाधनसम्पत्ति-समुद्भवं तत्त्वसाक्षात्कारप्रयोजकं सामर्थ्यविशेषं वा ददाति साधकेभ्य इति बलदा । यस्य च प्रशिषं=उत्कृष्टं शासनं—विधिनिषेधरूपामाज्ञामित्यर्थः । विश्वे=सर्वे प्राणिनो मनुजादयः, उपासते=सेवन्ते—पालयन्ति, सर्वोत्कृष्टा देवा अपि यस्य प्रशासनमुपासते, यदीयामाज्ञां सादरं शिरसि विधाय यदाश्रिताः सन्तस्तत्तत्कार्य-मनुतिष्ठन्तीति यावत् । तदुक्तं—'**यस्य ज्ञेयावधि ज्ञानं, शिक्षावधि च शासनम् । कार्यावधि च कर्तृत्वं, स स्वयम्भूः पुनातु वः ॥**' इति । किञ्च यस्य भगवतः अमृतं=मोक्षलक्षणममरणं छाया=छायावत्स्वाधीनं, मृत्युः= प्राणिनां मरणमपि यस्य च्छायेव स्ववशे वर्तते । यद्वा यस्य छाया=आश्रयः शरणागतिः, भक्तिज्ञानपूर्वकं तदुपासनं वा अमृतं=अमृतत्वलक्षणमुक्तिहेतुः । यस्य च शरणाग्रहणमनुपासनमज्ञानञ्चेति शेषः । मृत्युः=संसारहेतुः—जन्माद्यनर्थ-दुःखप्रापक इत्यर्थः । तथा चाम्नायते—'**य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ।**' (बृ. ४ । ४ । १४) इति । स्मरन्ति च शिष्टाः—
'**यस्याङ्घ्रिमाश्रितवतां भवपाशहानिः, यस्याङ्घ्रिपद्मविमुखा जनि-मृत्युभाजः । यन्नामशोधकमनन्तमघोन्मुखानां पापीयसामपि स मे**

शरणं मुकुन्दः ॥' इति । विदुः=उपासते जानन्ति चेत्यर्थः । इतरे=ये नोपासते न जानन्ति च ते इत्यर्थः । कस्मै देवाय हविषा विधेम इति व्याख्यातम् ।

× × ×

## ( ५७ )

( कल्याणप्रदानां यज्ञानां शिवसङ्कल्पानां शोभनप्रज्ञानाञ्च निर्विघ्नसिद्धये देवप्रार्थना कर्तव्या )

भद्रक्रतुसिद्धये देवान् प्रार्थनयाऽनुकूलयन्ति—

ॐ आ नो भद्राः क्रतवो यन्तु
विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे,
असन्नप्रायुवो रक्षितारो दिवे दिवे ॥

( शु. य. २५ । १४ । ऋ. १ । ८९ । १ । नि. ४ । १९ )

क्रतवः=यज्ञाः शिवसंकल्पाः शोभनप्रज्ञाः चेत्यर्थः । नः=अस्मान् प्रति आयन्तु=आगच्छन्तु—प्राप्नुवन्तु—शिवसङ्कल्पशोभनप्रज्ञासंयुक्ताः सन्तो वय सदा यज्ञानुष्ठातारो भवेमेति यावत् । कीदृशाः क्रतवः ? भद्राः=समीचीनफलसाधनतया भजनीयाः भन्दनीयाः वा स्तुत्याः 'भद्रि कल्याणे सुखे च' कल्याणकारिणः सुखप्रदा इत्यर्थः । तथा विश्वतः=सर्वतः सर्वेभ्यो विघ्नेभ्यः, अदब्धासः=अनुपहिंसिताः—अनभिभूता इत्यर्थः, निर्विघ्ना इति यावत् । पुनः कथं भूतास्ते ? इत्यत आह—अपरीतासः=न परीताः—अपरीताः—अव्याप्ताः—

अप्रतिरुद्धाः—अहङ्कृतेनाभिमानेन तुच्छफलाभिलषेण वा ये यज्ञाः संयुक्ताः—प्रतिरुद्धाः न भवन्ति, किन्तु सत्त्वशुद्धीशप्रसादसम्पादनैकायोजना भवन्तीति यावत्। उद्भिदः=अनर्थानामुद्भेत्तारः, यद्वा उद्भिन्दन्ति=प्रकटयन्ति—सत्त्वशुद्ध्यादीनि फलानि, ब्रह्मात्मतत्त्वसाक्षात्काराकमकं महाफलं वेति उद्भिदः=उद्भेत्तारः—अभीष्टफलसाधका इतियावत्। किञ्च यथा=येन प्रकारेण, देवाः=शिवविष्णुगणेशशक्तिसूर्यप्रभृतयः, श्रोत्रियत्वब्रह्मनिष्ठत्वादिविशेषणविशिष्टाः गुरवः सिद्धपुरुषा महात्मानो वा—'विद्वांसो वै देवाः' (श. ब्रा. ३ । ७ । ३ । १०) इति श्रुतेः। नः=अस्माकं—साधकानां कल्याणकामुकानां सदमित्=सदैव, सदमिदित्यव्ययं सदार्थे। वृधे=वृद्धयै—अभ्युन्नतये, असन्=अनुकूलाः—हिताचरणहितोपदेशादिनाऽस्मदनुग्रहकर्तारो भवन्तु। तथा क्रतवः—आयन्तिवत्प्रन्ययः। कीदृशाः देवाः? अप्रायुवः=प्रकर्षेणायुवन्ति—प्रमाद्यन्ति ते प्रायुवः, यौतेः क्विप् तुगभाव आर्षः, न प्रायुवः—अप्रायुवः—प्रमादरहिताः अनलसाः सदा प्रपन्नरक्षणाय जागरूका इति यावत्। तथा दिवे दिवे=अहन्यहनि=प्रत्यहं रक्षितारः पालकाः हितकर्तारः इत्यर्थः। अस्माकं सर्वविधाभिवृद्धयै भवन्त्वित्यन्वयः। अदब्धासः='दम्भु दम्भे' दम्भो हिंसा निष्ठाप्रत्ययः, नञ् समासः, असुक्। अपरीतासः=इण्गतौ कर्मणि निष्ठा 'आज्जसेरसुक्'। वृधे—'वृध वृद्धौ' सम्पदादिलक्षणो भावे क्विप्। असन्—'अस भुवि' लेटि अडागमः 'बहुलं छन्दसि' इति शपो लुगभावः तस्य अङित्त्वात् 'श्नसोरल्लोपः' इति अकारलोपाभावः। अप्रायुवः—'इण्गतौ' उपसर्गः, उण् प्रत्ययः, नञ् समासः जसि उवङ् इति वा॥

× × ×

भविष्याम इति भावः। रातिः—रा दाने क्तिन् प्रत्ययः। सेदिमा—'षद्लृ विशरणगत्यवसादनेषु' इति प्रार्थनायां लिट् उत्तमबहुत्वे रूपं एत्वाभ्यासलोपे संहितायां दीर्घत्वम्। प्रतिरन्तु—प्रपूर्वस्तिरतिर्वर्धनार्थः इति।

अथवा देवानां=यज्ञन्यानां—इन्द्रवरुणादीनां भद्रा सुमतिरस्तु। तथा चोक्तं—देवानां द्वैविध्यं शतपथब्राह्मणे—'द्वयाः वै देवाः, देवा अह एव देवाः। अथ ये ब्राह्मणाः शुश्रुवांसो अनूचानाः, ते मनुष्यदेवाः। (शत. ब्रा. ४।३।४।४)-'तेषां द्वेधा विभक्त एव यज्ञः, आहुतय एव देवानां दक्षिणाः मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषां अनूचानानाम्। आहुतिभि एव देवान् प्रीणाति, दक्षिणाभिः मनुष्यदेवान्। ते एनं उभये देवाः प्रीताः स्वर्गलोकमभिवहन्ति।' (शत. ब्रा. ४।३।४।४) इति। माधवभट्टेनाप्युक्तम्—'एवञ्च देवा यष्टारो यष्टव्याश्च तथाऽभवन्। अंशावतारैर्यष्टारो यष्टव्यास्तु दिवि स्थिताः॥' (ऋग्वेदानुक्रमणिकायाम्) यष्टव्यानां दिवि स्थितानां देवानामंशावतारैर्भूमौ स्थिता दैवीसम्पद्भाजो यष्टारो मनुष्यरूपा देवा भवन्तीति तात्पर्यम्।

× × ×

## (५९)

### (भयेभ्यो रक्षणाय कल्याणप्राप्तये च चराचरविश्वस्वामिनो भगवतः सादरमाह्वानं कर्तव्यम्)

यतो भगवत्प्रसादस्य सर्वसिद्धिमूलत्वादतो निखिलानि भयानि बन्धनानि च भेत्तुं, निरङ्कुशां तृप्तिं लोकोत्तरप्रमोदसाम्राज्यं कल्याणमासादयितुञ्च विपदां

हर्तारं सम्पदां दातारं भयेभ्यो रक्षितारं चराचरविश्वस्वामिनं विश्वेश्वरं भूयो भूय आह्वानादिना भक्ता प्रसादयन्ति—

ॐ तमीशानं जगतस्तस्थुषस्पतिं,
धियं जिन्वमवसे हूमहे वयं ।
पूषा नो यथा वेदसामसद्वृधे,
रक्षिता पायुरदब्धः स्वस्तये ॥

( शु. य. २५ । १८ । ऋ. १ । ८९ । ५ )

वयं=अभ्युदयनिःश्रेयसकामाः तं=लोकशास्त्रप्रसिद्धं—ईशानं=परमैश्वर्यशालिनं—सर्वेश्वरं श्रीशङ्करं महादेवं, हूमहे=आह्वयामः—अभिमुखः—आह्वानस्तुत्यादिना प्रसादयाम इति यावत् । कीदृशं तं ? जगतः=जंगमस्य तस्थुषः=स्थावरस्य च, चराचरस्य विश्वस्य पतिं=पालकं—रक्षितारम् । पुनः कथंभूतं ? धियं जिन्वं=धियं—बुद्धिं जिन्वति=प्रीणातीति धियंजिन्वस्तम्—स्वशरणागतभक्तबुद्धिसन्तोषकारकमिति यावत् । यद्वा धियं जिन्वं=धीभिः शोभनप्रज्ञाभिः सत्कर्मभिर्वा प्रीणयितव्यं—प्रसादयितव्यमित्यर्थः । जिविः प्रीणनार्थः, खच् प्रत्ययः । अवनाय—रक्षणाय अविद्यादिक्लेशेभ्यः तज्जभयेभ्य इति शेषः । यद्वा—अवनाय=तर्पणाय—नवानन्दानुभवोद्भूतनिरङ्कुशतृप्तये हूमहे । पुनः कीदृशोऽसौ परमेश्वरः ? इत्यत आह—पूषा=पोषणकर्ता, लौकिकपारलौकिकपारमार्थिकपुष्टिविधातेति यावत् । वेदसां=धनानां, श्रद्धाभक्तिज्ञानविज्ञानादिदिव्यसम्पदां या रक्षिता=रक्षकः । पायुः=पालकः—अधर्मध्वंसेन सनातनार्यधर्मस्य दुष्टध्वंसेन सज्जनभक्तस्य चेतिशेषः । अदब्धः=केनापि विरोधिना न

अनभिभूतः–सर्वातिशायितेजस्वी–अविनाशीति यावत् । यथा=येन प्रकारेण तादृशो भगवान् नः=अस्माकं वृधे=वृद्ध्यै–ऐहलौकिकपारलौकिकसुखसम्पत्तेर-भ्युदयाय, तथा स्वस्तये=कल्याणाय–पारमार्थिकनिःश्रेयसलक्षणाय, असत्=अनु-कूलः प्रसन्नो भवतु, तथा वयमजस्रं सात्त्विकश्रद्धया परमया प्रीत्या च हूमहे इति पूर्वेणान्वयः । रक्षितुः=तिष्ठतेर्डिटः कसुः, संप्रसारणं, पत्वं, षष्ठ्येकवचनमिदम् । असत्–'अस भुवि' लेटि अडागमः छान्दसः शपो लुगभावः । पायुः–'पा रक्षणे' उण् प्रत्ययः । स्वस्तये–सु–पूर्वात्–अस्तेः भावे क्तिन् 'छन्दस्यु-भयथा' इति तस्य सार्वधातुकत्वात् 'अस्तेः भूः' इति भूभावाभाव इति ॥

× × ×

( ६० )

( चैतन्यानन्दमय्या अखण्डनीयाया अदितिशक्तेः सर्वात्मतया वर्णनम् )

स्वस्वरूपां चितिशक्तिमदितिसमाख्यां सर्वात्मत्वेन मन्त्रदृक् वर्णयति—

ॐ अदितिर्द्यौरदितिरन्तरिक्षमदिति-
माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना
अदितिर्जातमदितिर्जनित्वम् ॥

( शु. य. २५ । २३ । ऋ. १ । ८९ । १० । अथर्व. ७ । ६ । १ । तै. आ. १ । १३ । २ । नि. ४ । २३ )

अदितिः=अखण्डनीया नित्या प्रत्यक्चितिशक्तिः परमार्थसत्यस्वप्रकाश-

रमानन्दरूपा इत्यर्थः । सैव द्यौः=द्योतनशीलो नाकः-स्वर्गलोक, सैव अन्तरिक्षं=द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम, भुवर्लोको वा, सैव माता=पृथिवीलोकः यद्वा माता=निर्मात्री जगतो जननी, सैव पिता=सूर्यः । यद्वा पिता=विश्वस्योत्पादकः परमेश्वरः । यद्वा प्रसिद्धा माता सैव, स -पिता-सः-पुत्र-=मातापित्रो र्जातः पुत्रोऽपि सैव । स पिता स पुत्र इत्यत्र **' निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददते। '** इत्युद्देश्यलिङ्गतया पुलिङ्गत्वम्। विधेयलिङ्गतया च स्त्रीलिङ्गत्वेन परिणेयं-सा पिता सा पुत्र इति । द्युप्रभृतिसर्वमपि सा अदितिरेवेति । तस्याः सर्वाधिष्ठानत्वात् । अध्यस्तस्याधिष्ठानानतिरिक्तत्वाचादितेरेव ' रज्ज्वा सर्पादिकमिव ' द्युप्रभृतिसर्वोऽयं प्रपञ्चो विवर्तः। एवं विश्वे=सर्वे देवा -अदितिरेव, पञ्चजनाः =गन्धर्वा, पितरो, देवा, असुरा, रक्षांसि च निषादपञ्चमा वा ब्राह्मणादिवर्णा. पञ्चजना अप्यदितिरेव । तदुक्तं यास्केन-' **गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः** ( नि. ३ । ८ ) इति । किं बहुनोक्तेन ' जातं=उत्पन्नं चराचरप्राणिजातं सर्वं, जनित्वं=जनिष्यमाणत्वञ्च सर्वमदितिरेव, यद्वा जातं=जननं प्रजानामुत्पत्तिः, जनित्वं=जननिकरणमपि सैव । न तस्याः पृथग्भूतं किञ्चिदणुमात्रमपि स्वतन्त्रसत्तास्फूर्तिकम् । अत एव सर्वेषु कार्यभूतेषु पदार्थेषु कारणरूपायाः तदधिष्ठानसत्तायाः चितिशक्तेर्विद्यमानत्वात्, कार्यकारणयोरनन्यत्वं प्रदर्शयितुमेव ' अदितिर्द्यौ. ' इत्यादि. सामानाधिकरण्यनिर्देशः । तदेतद् बहुवारमाम्नातं ऋक्संहितायामपि-' **आ सर्वतातिमदितिं वृणीमहे** ' ( ऋ. १० । १०० । १ ) इति । सर्वतातिः=स्वार्थिकस्तातिल् प्रत्ययः-सर्वा सर्वात्मिकामित्यर्थः । यद्वा सर्वे तायन्ते अस्यामिति सर्वतातिः=सर्वकारणीभूता ता छान्दसो दीर्घः । तादृशीं

अदितिः=अखण्डनीयां विश्वमातरं चितिशक्तिम्—आ वृणीमहे=कामयामहे इत्यर्थः। एवं ब्राह्मणग्रन्थेऽप्याम्नायते—'इयं वै देव्यदितिर्विश्वरूपी' ( तै. ब्रा. १। ७। ६। ७ ) 'इयं वै जगती अस्यां हीदꣳ सर्वं जगत्' ( श. ब्रा. ६। २। १। २६ ) इति। तथैव 'इदं सर्वं यदयमात्मा' ( बृ. २। ४। ६ ) 'सर्वं खल्विदं ब्रह्म' ( छां. ३। १४। १ ) इत्येवमाद्याभिरपि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्रूयते। न च तयोरनन्यत्वे सति कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इति वाच्यम्; यतः कारणस्य कार्यात्मनाऽवस्थानं न वास्तविकमपि तु मायामात्रं रज्ज्वा इव सर्पादिभावेन। तथा च कार्यस्य तद्धर्माणां च स्थौल्यादीनामविद्याऽऽरोपितत्वेनावस्तुत्वात् तैः कारणमैन्द्रजालिकमिव स्वप्रदर्शितेन्द्रजालरूपपदार्थैः न कदापि संसृज्यत इति भावः। अत एव 'सर्वं वा अत्तीति तददितेरदितित्वं, सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति, य एवमेतददितेरदितित्वं वेद।' ( श. ब्रा. १०। ६। ५। ५ ) इति शतपथश्रुत्या प्रलयकाले चराचरविश्वस्य स्वस्मिन्नुपसंहारलक्षणसंहारकर्तृत्वेनाविद्यादशायाञ्च निखिलशब्दादिविषयभोक्तृत्वेन सर्वस्यान्नस्यात्तृत्वेन च प्रत्यगभिन्नः परमात्मैवादितिशब्दस्य मुख्योऽर्थोऽप्यात्मतत्त्वपर्यालोचनावसरे निश्चीयते। तस्य सर्वात्मत्वाभावे स्वस्मिन् सर्वोपसंहारकर्तृत्वस्यासम्भवात्, सर्वरूपेणावस्थानाभावे सर्वविषयभोगस्य सर्वान्नभक्षणस्य चासम्भवात्, न हि कश्चित्सर्वस्यैको भोक्ता वाऽत्ता वा दृश्यते तस्मादयं सर्वात्मा भवतीत्यर्थः। तस्यैवादितिशब्दाभिधेयस्य परमात्मनः सर्वात्मत्वबोधकानि—'इयं वै पृथिव्यदितिः।' ( श. ब्रा. २। २। १। १९ ) 'अदितिर्हि गौः' ( श. ब्रा. १४। २। १। ७ ) 'वाग्वा अदितिः' ( श. ब्रा. ६। ५। २। २० ) इत्यादीनि शतपथब्राह्मणवचांस्यपि द्रष्टव्यानि।

एव कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽप्याम्नातम्—' **अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषां॰ सर्वभूतानां माता मेदिनी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः।**' ( १० । २१ ) इति । मेदिनी=मधुकैटभमेदसा जाता मेदस्विनी कठिनेयं भूमिरपि अदितिरेव । कथंभूता सा ' इति तत्स्वरूपनिरूपणपरत्वेनेतराणि विशेषणानि—महती=अनन्तपरिमाणा विभ्वी व्यापका इतियावत् । मही=विश्वकारणत्वेन परमेश्वराभिन्नत्वेन च सा पूज्या । सावित्री=सवितुः प्रेरकस्यान्तर्यामिणः स्वभूता शक्तिः, शक्तिशक्तिमतोरभेदाख्यात् । गायत्री=गायकान् स्तोत्रपाठकाँस्त्रायते रक्षतीत्यर्थः । जगती=अखिलजगदाश्रयभूता । ऊर्वी=ऊरूरूपाभ्या, पृथ्वी=अनन्तविभूतिविस्तारयुक्ता । बहुला=चैतन्यानन्दनिबिडा । विश्वा=सर्वात्मिका । भूता=विश्वोत्पत्त्यादावपि विद्यमाना, कतमा=अतिशयेन सुखरूपा, काया=चराचरविश्वप्राणिदेहरूपेणापि परिणता, सा=प्रसिद्धा, सत्या=त्रिष्वपि कालेषु बाधरहिता, अमृता=मोक्षरूपा अखण्डैकरसतया सदाऽवस्थिता इत्येव वसिष्ठो महामुनिरप्याहेत्यर्थः ।

अथाधिदैविकार्थमिति कपदे तावत्—अदितिः=अदीना अखण्डनीया वा प्रसिद्धा पृथिवी, देवमाता वा द्यौरन्तरिक्षमित्यादि—सकलजगदात्मना सा स्तूयते । यद्वा द्यौरित्यादीनि सर्वाणि जनित्वान्तानि पदार्थसार्थानि, अदितिः=अदितीनि—अदीनानि महाभाग्ययुक्तानि—सम्पत्सुखशान्तिकराणि अस्माकं भवन्त्वित्यर्थः । यत्तु कश्चित्प्रलल्लाप—अदितिशब्दस्य द्यौरित्यादिविवक्षितप्रदर्शनपरोऽयं मन्त्र इति तन्न सम्यक् यतोऽस्य कोशभूतत्वाभावादेवं लोकवेदयोः प्रसिद्ध्यभावात् । सकलजगदात्मनाऽनेनाऽदितेः स्तूयमानत्वात्—' इत्यदितेर्विभूतिमाचष्टे ' ( नि. ४ । २३ ) इति यास्कर्षिवचनविरोधाच्च ।

तद्विजिज्ञासस्व तद्ब्रह्मेति ।' (तै. उ. भृ. व. ४ । १ ) इति श्रुतेः । वरेण्यं=सर्वैर्मुमुक्षुभिर्वरणीयं=प्रार्थनीयं–सम्भजनीयं निरतिशयाखण्डानन्दरूप-मित्यर्थः । निरतिशयाखण्डानन्दरूपत्वमन्तरेण तस्य सर्ववरणीयत्वानुपपत्तेः तद्रूपत्वमवधेयम् । भर्गः=अविद्यादिसकलदोषभर्जनात्मकश्रौतज्ञानैकगम्यं यन्निरुपद्रवं नित्यशुद्धबुद्धमुक्तस्वभावं परमार्थविज्ञानस्वरूपं परिपूर्णस्वयंज्योतिरूपं चैतन्यं तेज इत्यर्थः । 'एतद्ब्रह्मैतदमृतमेतद्भर्गः' (मैत्र्युप. ६ । ३५ ) इति श्रुतेः । 'तज्ज्योतिः परमं ब्रह्म भर्गस्तेजो यतः स्मृतम् ।' इति स्मृतेश्च । देवस्य=सर्वद्योतनात्मकाखण्डचिदेकरसस्येत्यर्थः । सवितुर्देवस्येत्यत्र षष्ठ्यर्थो–'राहोः शिरोवत्' 'पुरुषस्य चैतन्यवद्वा' औपचारिकः, अभेदार्थलक्षकोऽवसेयः । ननु–तद्ब्रह्म न प्रत्यगात्मलक्षणं प्रत्युत तद्विलक्षणमेव कर्तृत्वभोक्तृत्वाद्यनाश्रयत्वादित्याशङ्क्य तस्य प्रत्यग्विलक्षणत्वमेवासिद्ध-मित्याह–यः=यत् सत्यज्ञानादिलक्षणं ब्रह्म, लिङ्गव्यत्ययः पुंस्त्वनि-र्देशश्छान्दसः । नः=अस्माकं–अस्मदीया वा धियः=बुद्धीः–अन्तःकरणस्य सर्वाः वृत्तीरित्यर्थः । प्रचोदयात्=प्रेरयेत्–प्रेरयति–प्रकाशयति इत्यर्थः । लकारव्य-त्ययः । बिम्बस्थानीयं ब्रह्मैव सकलान्तःकरणवृत्तिसाक्षिलक्षणं सर्वबुद्धिप्रेरकं प्रत्यगात्मभूतमिति यावत् । तथा च प्रचोदयाच्छब्दनिर्दिष्टस्य प्रत्यगात्मनः स्वस्वरूपभूतस्य परब्रह्मणः तत्सवितुरित्यादिपदैः पूर्वं निर्दिष्टत्वेन प्रत्यग्लक्ष-णमेव ब्रह्मावगतं भवति, न ततो विलक्षणमिति भावः । तदेव तत्त्वं वयं सदा धीमहि=ध्यायेम–चिन्तयामः–बुद्ध्यादिसर्वदृश्यसत्तास्फूर्तिप्रदं तत्साक्षिलक्षणं यदस्माकं स्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाश-चिदात्मकं परं ब्रह्मास्ति, तदेव वयं श्रद्धाभक्तिभ्यां 'तद्योऽहं सोऽसौ यो-ऽसौ सोऽहमि' त्येवमनवरतं विभावयाम इति यावत् । तथा चायं गायत्री-

मन्त्रः 'रज्जुसर्पन्यायेन' ब्रह्मविवर्ताकाशादिजडप्रपञ्चस्य तदधिष्ठानेन ब्रह्मणा साकं बाधसामानाधिकरण्यलक्षणमेकत्वं, 'सोऽयमिति'न्यायेन च बुद्धिवृत्तिदृष्टुः प्रत्यगात्मनो ब्रह्मणा सह तादात्म्यलक्षणमेकत्वञ्च स्फुटं प्रतिभावयन् चराचरविश्वाभिन्नमखण्डैकरसं परिपूर्णं सर्वात्मकं ब्रह्मतत्त्वं बोधयति। यत्रैतदाम्नातं भवति—'एकत्वमनुपश्यतः' (ई. उ. ७) 'एकधैवानुद्रष्टव्यम्' (बृ. ४। ४। २०) इति। एवं सतीयं सर्ववेदसारभूता प्रत्यक्ब्रह्मैक्यबोधिका परमात्मनः सर्वावभासकत्व—अप्राकृततेजोमयत्व—परमानन्दघनत्व—सर्वदेवमयत्व—सर्वा मन्त्रादिद्योतिका प्रणवव्याहृतिशिरःसमेता शुद्धा गायत्री तदर्थानुसन्धानपुरःसरा चतुर्थाश्रमिभिर्ब्रह्मनिष्ठैर्यतिभिरपि प्राणायामजपादिभिरुपास्या। तथा च स्मर्यते—'गृहस्थो ब्रह्मचारी च शतमष्टोत्तरं जपेत्। वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत्॥' इति। 'सर्ववेदान्तसिद्धान्तमवलम्ब्य प्रकाशितः। गायत्रीनिगमार्थोऽयं मयाऽऽचार्यप्रसादतः॥' इति।

अथ प्रणवार्थनिरूपणम्—प्रणवो हि 'ॐकारः' सर्वमाप्नोति व्याप्नोतीति। अवति—रक्षति स्वजपनिष्ठान् संसारसागरादिति 'आप्लृ व्याप्तौ' 'अव रक्षणे' चेति द्वाभ्यां धातुभ्यां निष्पन्नमिदं 'ॐ' रूपम्। 'प्र—णु—स्तुतौ' प्रकर्षेण नूयते स्तूयते, अस्मा स्वेष्टदेवता वाऽनेनेति प्रणवः। 'ओमिति ब्रह्म' (तै० उ० १, ८) (गो० ब्रा० पूर्वभागे० १। १६) 'परश्चापरश्च ब्रह्म यदोङ्कारः' (प्रश्न. ५। २) 'ओङ्कार एवेदꣳ सर्वम्' (छां० २. २३। ३) 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥' (गीता. ८। १३) 'ओङ्कारस्तु परं ब्रह्म गायत्री स्यात्तदक्षरम्। एवं मन्त्रो महायोगः

साक्षात्सार उदाहृतः ॥' ( औशनसस्मृति ३ । ५२ ) 'सारभूताश्च वेदानां गुह्योपनिषदः स्मृताः । ताभ्यस्सारन्तु गायत्री गायत्र्या व्याहृतित्रयम् ॥ व्याहृतिभ्यस्तथोङ्कारस्त्रिवृद्ब्रह्म स उच्यते । त्रिवृद्ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥' ( बृ. यो. याज्ञ. स्मृ. ४ । ७८ । ७९ ) 'ओङ्कारः परमं ब्रह्म सर्वमन्त्रेषु नायकः । प्रजापतेर्मुखोत्पन्नः तपःसिद्धस्य वै पुरा ॥ ( यो० या० स्मृ० २ । ३ ) 'प्रणवाद्याः स्मृताः मन्त्राश्चतुर्वर्गफलप्रदाः । तस्माच्च निःसृताः सर्वे प्रलीयन्ते च तत्र वै ॥ यथा पर्णं पलाशस्य शङ्कुनैकेन धार्यते । तथा जगदिदं सर्वमोङ्कारेणैव धार्यते ॥ प्रणवस्य ऋषिर्ब्रह्मा गायत्री छन्द एव हि ॥ देवोऽग्निर्व्याहृतिषु च विनियोगः प्रकीर्तितः ॥' इत्यादिः ॥ 'ओङ्कारं प्रणवञ्चैव सर्वव्यापिनमेव च । अनन्तं च तथा तारं शुक्लं वैद्युतमेव च ॥ हंसं तुर्यं परब्रह्म इति नामानि जानत ॥' ( बृ० यो० या० अ० २ । ११६+११७ ) 'वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः । वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति ॥' ( बृ० यो० या० २ । ४४ ) प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रादिशब्दानां प्रणवस्तु परस्स्मृतः ॥ शम्भोः प्रणववाच्यस्य भावेन तज्जपादपि । या सिद्धिः सा परा प्राप्या भवत्येव न संशयः ॥ ( वायु. पु. उत्तर; अ. ७ । ) इत्यादि-श्रुतिस्मृत्यादिभ्यः प्रणवस्य माहात्म्यं विपुलमवगम्यते । ॐ कारस्याऽकारादि-मात्रात्रित्वादिपादाभेदगमकतत्त्वार्थमभेऽत्रोचाम । यस्योच्चारणं विना सर्वं श्रौत-स्मार्तादिकर्मैकल्पं निष्फलं सम्पद्यते । तस्य महत्त्वमवर्णनीयमप्यवधेयम् । तदुक्तं-'यदोङ्कारमकृत्वा किञ्चिदारभ्यते, तद्वज्रीभवति, तस्माद्-

जभयाद्धीतमोङ्कारं पूर्वमारभेदिति।' (छांदोग्यपरिशिष्टे) 'ब्रह्मणः प्रणवं कुर्यात् आदावन्ते च सर्वदा। स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति॥' (मनु. २।७४) इति।

अथ व्याहृत्यर्थे—''भूर्भुवस्स्वः' इति तिस्रो व्याहृतयः। भवति—अस्तीति सदिति व्युत्पत्त्या भूरिति सन्मात्रं त्रिकालाबाध्यं तत्त्वमुच्यते, भू सत्तायामित्यनुशासनात्। भुवरिति सर्वं दृश्यजातं भावयति—प्रकाशयति स्वभूतया अविपरिलुप्तया स्वयंप्रमातया चैतन्यदृशा इति व्युत्पत्त्या चिद्रूपमुच्यते। स्वर्त्रियते—सर्वैरभ्यर्थ्यते इति व्युत्पत्त्या स्वरिति सुष्ठु सर्वैः त्रियमाणं सुखस्वरूपमुच्यते इति। अत एव सच्चिदानन्दलक्षणयुक्तस्य प्रत्यगभिन्नस्य ब्रह्मणः स्वरूपं तैत्तिरीयारण्यके 'भूर्भुवस्स्वर्ब्रह्म' (तै. आ. ८।९) इत्येवमाम्नातम्। तत्र सद्रूपभूर्व्याहृतिजपार्थभावनया मृत्युभयं, चिद्रूपभुवर्व्याहृतिजपार्थभावनया बुद्धेरज्ञानभिन्नाज्ञानादिलक्षणं जाड्यं, आनन्दरूपस्वर्व्याहृतिजपार्थभावनया त्रिविधं दुःखञ्च विनिवर्तते। व्याहृतिशब्दार्थस्तु—'भूर्भुवस्स्वस्तथा पूर्वं स्वयमेव स्वयम्भुवा। व्याहृता ज्ञानदेहेन तेन व्याहृतयः स्मृताः॥' (यो० याज्ञ० अ० १। श्लो. ९) इत्यत्राभिहितः। यद्वा तैत्तिरीयश्रुत्या भूरिति अयं मर्त्यलोकः, भुव इत्यन्तरिक्षलोकः, स्वरिति स्वर्गलोकः, अग्निवाय्वादित्याः, ऋग्सामयजूंषि, प्राणापानव्याना वाऽपि क्रमशः ताभ्यः तिसृभ्यो विज्ञाय ते—'प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः। सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः॥" (कूर्म. पु. उव, १४।५४) इति वचनेन प्रधानादयोऽपि। तेषां सर्वेषां ब्रह्मसत्ताव्यतिरेकेण पृथक्सत्ताया अभावादेवादौ प्रयुक्तोऽपो प्रणवो ब्रह्मस्वरूपतामभिपद्यते। तैत्तिरीयकास्तु—'ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यमित्येवं

प्रणवादिसप्तव्याहृत्युपेतां गायत्रीं शिरःसमेतां प्राणायामे जपनीयत्वेन वदन्ति। अत एवाऽन्येऽप्याहुः —' सप्तव्याहृतिषु प्रोक्तः प्रणवोऽयं पुनः पुनः। सप्तानामपि लोकानां वक्ति ब्रह्मस्वरूपताम् ॥ उपलक्षणतः सप्तपाताऽलानां तथैव च। सर्वलोकस्थजीवानां वक्ति ब्रह्मस्वरूपताम् ॥ इति। यद्वा साधकेष्टं विविध, आ=समन्तात् हरन्ति=प्रयच्छन्ति, तदनिष्टं वा विविधमा—समन्तात् हरन्ति=विनाशयन्तीति व्याहृतयः। ' ॐ आपो ज्योतिः रसोऽमृतम् ' इत्ययं गायत्रीशिरोमन्त्रः। आपः=आप्नोतीति व्युत्पत्त्या अखण्डसत्तादिस्वरूपेण सर्वव्यापकः। स एव स्वयंप्रकाशमानत्वाज्ज्योतिः। स एव रसः=सर्वातिशायी परमानन्दस्वभावः। स एव अमृतं=मरणादिसकलसंसारनिर्मुक्तम्, तदेवोङ्कारलक्ष्यं ब्रह्माहमस्मीति सततं भावयेत्। यद्वा आपः=प्रसिद्धाः नदीसमुद्रादिगताः, ज्योतिः=प्रसिद्धमादित्यादिकं, रसः=प्रसिद्धो मधुराम्लादिः षड्विधः, अमृतं=देवैः पातव्यं यत्किमपि, तत्सर्वमोम्=प्रणवप्रतिपाद्यं ब्रह्मैव तत्र सर्वत्र ब्रह्म विभावयेदिति सूचयितुमाद्यावोङ्कारः। पक्षेऽस्मिन् मन्त्रस्येयं पदयोजना—सवितुः देवस्य यद्वरेण्यं भर्गः, नः धियः प्रचोदयात् तत् धीमहि, कीदृशं तत्? ' भूः भुवः स्वः। ' पुनः कीदृशं? ओमिति।

यदाहुः शिष्टाः—स्वात्माभेदेन गायत्र्यर्थं पूर्णं ब्रह्म चिन्तयितुम्—' आदित्यान्तर्गतं यच्च, ज्योतिषां ज्योतिरुत्तमम्। हृदये सर्वजन्तूनां जीवभूतः स तिष्ठति ॥ हृद्याकाशे च यो जीवः साधकैरुपवर्ण्यते। स एवादित्यरूपेण बहिर्नभसि राजते ॥ पाषाणमणिधातूनां तेजोरूपेण संस्थितः। वृक्षौषधितृणानाञ्च रसरूपेण तिष्ठति ॥ ( याज्ञवल्क्यः ) ' अहं ब्रह्म परं ज्योतिः ध्यायेमहि विमुक्तये। तज्ज्योतिर्भगवान् विष्णुर्जगज्जन्मादिकारणम् ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा

सह । ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् । जपान्ते संस्मरेद्भूयः एकमेवाद्वयं विभुम् । तेनैव सर्वकर्माणि सम्पन्नान्यकृतान्यपि ॥ यथा कथञ्चिज्जप्तैषा देवी परमपावनी । सर्वकामप्रदा प्रोक्ता विधिना किं पुनर्नृप ! ॥ ' ( विष्णुधर्मोत्तरपुराणे ) तस्मात्सर्वप्रयत्नेन ज्ञातव्या ब्राह्मणेन सा । व्याहृत्योङ्कारसहिता सशिरस्का यथार्थतः ॥ सशिराश्चैव गायत्री यैर्विप्रैरवधारिता । ते जन्मबन्धनिर्मुक्ताः परं ब्रह्म व्रजन्ति च ॥ ' इति । गायत्रीशिरोमन्त्रस्य ऋष्यादिः—' ओमापो ज्योतिः रसोऽमृतम् ' ' ॐ गायत्रीशिरसः प्रजापति—ऋषिः, गायत्री छन्दो, ब्रह्मवाय्वग्निसूर्याश्चतस्रो देवताः, प्राणायामे विनियोगः ॥ ' गायत्रीशापोद्धार-मन्त्रः ....। ॐ अर्कज्योतिरहं ब्रह्म, ब्रह्मज्योतिरहं शिवः । शिव-ज्योतिरहं विष्णुः विष्णुज्योतिरहं शिवः ॥ इति ।

अथ विशिष्टगायत्रीमन्त्रार्थः—ॐ अवति—रक्षति चतुर्दशभुवनानीत्योम् । अव धातुः रक्षाप्रकाशपालनहिंसाद्यर्थादिषु । उक्तञ्च—' अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् । ब्रह्मा विष्णुश्च रुद्रश्च त्रिदैवत्य उदाहृतः ॥ ' ( वृ. यो. याज्ञ. २ । १९ ) इति । तत्=तस्य षष्ठ्यर्थे द्वितीया, सर्वलोक-शास्त्रप्रसिद्धस्य, सवितुः=सर्वभावानां प्रसवितुः—उत्पादकस्य—ब्रह्मसंज्ञकस्य ' षुञ् प्राणिप्रसवे ' सुनोति—उत्पादयति चराचरं जगत् स सविता, षु—प्रस-वैश्वर्ययोर्वा सर्ववस्तूनां प्रसवः उत्पत्तिस्थानं सर्वैश्वर्यस्य च इति व्युत्पत्तेः । उपलक्षणमिदं सर्वभावानां रक्षितुः विष्णुसंज्ञकस्य, अन्ते चोपसंहर्तुः रुद्रसंज्ञ-कस्य, ब्राह्मीवैष्णवीरौद्रीशक्तित्रितयविशिष्टस्य उपासनार्थं मायया परिगृहीत-दिव्यसाकारविग्रहयुक्तस्य सकलोत्पत्तिस्थितिसंहारकारिण एकस्यैव परमेश्वरस्य । ' सृजन् रक्षन् हरन् विश्वं दधे संज्ञां क्रियोचिताम् । ' 'एका मूर्ति-

त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥, इति च भागवते स्मरणात् । अत एवाभी-ष्टवीति कैश्चन-'नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे। त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥' इति। देवस्य=भक्तहृदये द्योतमानस्य। वरेण्यं=वरणीयं सेवनीयं, पुरुषार्थकामिभिः-प्रार्थनीयं वा विविधदुःखदोषादीनां विनाशाय ध्यानेनोपासनीयं वेत्यर्थः। भर्गः=तेजोमयदिव्यरूपं स्मरणमात्रेण पापसंतापभञ्जनहेतुभूतमित्यर्थः। तदेव धीमहि=तस्यैव वयं स्मः, स एवास्माकमिति दृढेष्टसम्बन्धभावनया चिन्तयामः। यद्वा स एवाहमिति तेनैवाभेदसिद्धयेऽनन्यप्रेम्णा तदेव ध्यायामः। इत्येवमिष्टदेवस्य तस्य परमेश्वरस्य ध्यानं विधाय, तमेव सर्वशक्तिमन्तं भगवन्तं वयमर्थयामहे इष्टानिष्टप्राप्तिपरिहारायेत्याह—यः=सविता देवो निर्गुणोऽपि गुणवानमूर्तोऽपि त्रिमूर्तिलक्षणो भगवान् भवान्, नः=अस्माकं, धियः=बुद्धीः—धारणावतीः प्रज्ञावृत्तीः द्वितीयाबहुवचनम्। प्रचोदयात्=प्रेरयतु, याः किल दुष्कर्मदुश्चिन्तनविमुखाः सत्कर्मसच्चिन्तनप्रवणाः सत्यः सकलधर्मादिपुरुषार्थान् यथा शक्तितया साधयेयुः तथा ताः कृपाकूपारो भक्तवत्सलः श्रेयस्करेषु कर्मसु चिन्तनेषु च योजयतु। यद्वा याः—अशाश्वतदुःखालयसंसारचिन्तनं विहाय शाश्वतसुखनिधेर्भक्तोऽनन्यचिन्तनपरा भवेयुः। तथा ताः—प्रचोदयात्=प्रेरयतु—इत्येवं प्रार्थना विधीयते। अनन्तसामर्थ्यस्य विश्वप्रेरयितुस्तवैतत्र दुष्करमिति भावः। ननु—अतिदूरे वर्तमानोऽसौ किं ते प्रार्थनं श्रोष्यति? किं वा तवेष्टं साधयिष्यति? इत्याशङ्क्याह—भूः भुवः स्वः=भूरादिसर्वलोकानभिव्याप्य तान् प्रकाशयन् सदा नेदिष्टेऽप्यसौ अवतिष्ठते, तथा च तस्य दूरत्वप्रयुक्तप्रार्थनश्रवणत्वेष्टसाधकत्वाभावाशङ्का दूरोत्सारिता। सत्येवमस्मिन् पक्षे मन्त्रस्यायमन्वयः—तस्य सवितुः देवस्य यद्वरेण्यं भर्गः तत् धीमहि, कीदृशं तत्?—'भूः

भुवः स्वः ।' पुनः कीदृशं ? ओ३म् । तत् नः धियः प्रचोदयात् । इति । इत्येवमुत्तमाधिकारिभ्यः शुद्धमद्वैतं परं ब्रह्मोपदिशन्ती शुद्धा, मध्यमाधिकारिभ्यश्च विशिष्टं सगुणमपरं ब्रह्मोपदिशन्ती विशिष्टा च गायत्री विद्वद्भिरभ्युपायते ।

अथार्थविशेषम्—तदिति षष्ठ्यर्थे, तस्य=सर्वैर्दृश्यमानतया प्रसिद्धस्य देवस्य=दीप्तिक्रीडादियुक्तस्य । उक्तञ्च—'दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि । तस्माद् देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥' (य.शत.९ । ५४) इति । सवितुः='षू प्रेरणे' सुवति सर्वान्प्राणिनः प्रेरयति यः स सविता तस्य । यद्वा सूते सकलजगदनुग्रहार्थं वृष्टिमूलां वृष्टिं जनयतीति सविता—'यामिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति ।' इति श्रुतेः । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ।' इति स्मृतेश्च । यद्वा सूते सकलश्रेयांसि ध्यातॄणामसौ सविता । 'उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते ।' इति श्रुतेः । यद्वा सवितुः=भगवता प्रसवितुः सूर्यमण्डलावच्छिन्नस्य विश्वप्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य पुरुषस्येत्यर्थः । 'सविता वै प्रसवानामीशे ।' इति (कृष्णयजुःश्रुतेः) 'सविता सर्वभूतानां सर्वभावांश्च सूयते । सवनात्प्रेरणाच्चैव सविता तेन चोच्यते ॥' इति स्मृतेश्च । अत एवाहुः—आदित्यमण्डलान्तर्गतपुरुषसद्भावं श्रुतिस्मृतिवादाः—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ।' (छां. १ । ६ । ६) 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति (छां ४ । ११ । १) 'आदित्यमण्डले ध्यायेत्परमात्मानमव्ययम् ।' (शौनकस्मृतौ) 'देवोऽयं भगवान् भानुरन्तर्यामी सनातनः ।' ( सूर्यपुराणे १ । ११ ) 'एष भूतात्मको देवः सूक्ष्मोऽव्यक्तः सनातनः । ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ॥' इति ( भविष्यपुराणे ) तस्य सवितुः वरेण्यं=

अतिश्रेष्ठ—पुरुषार्थकामिभिः संभजनीयं। उक्तञ्च—'वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वै परम पदम् । स्वर्गापवर्गकामैर्वा वरणीयं सदैव हि ॥' (अग्निपु. २१६ । ५) इति । भर्गः=दिव्यं तेजः—भजतां पापसन्तापभञ्जनहेतुभूतमित्यर्थः । 'भ्राजृ दीप्तौ' 'भ्रस्जो आमर्दने' 'भृजी भर्जने' 'भ्रस्ज पाके' 'भृञ् भरणे' इत्येतेषां धातूनां रूपमिदम् । अत एव प्रकाशप्रदानेन जगतो बाह्याभ्यन्तरतमोभञ्जकत्वाद्वा, कालात्मकतया सकलप्राणिकर्मफलपाकत्वक्षणभर्जनाद्वा वृष्टिप्रदानेन भूतानां भरणहेतुत्वाद्वा भर्गत्वमनवधेयम् । यद्वा भर्गः=भ—र—ग, भासयतीमाँल्लोकानिति भ, रञ्जयतीमानि भूतानीति रः, गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः सकलाः प्रजा इति ग । उक्तञ्च—'भेति भासयते लोकान् रेति रञ्जयते प्रजाः । ग इत्यागच्छतेऽजस्रं भरगाद्भर्ग उच्यते ॥' (बृ० यो० या० ९ । ४५) इति । तदेव वयं धीमहि=ध्येयतया उपास्महे इत्यर्थः । यः=यत्—अभिध्यातं तत्तेजो नः=अस्माकं धियः=बुद्धीः, अभ्युदयनिःश्रेयससाधकशोभनकर्मसु प्रचोदयात्, प्रेरयेत् इति प्रार्थनेयं वितन्यते । यद्यप्यत्र सवितुर्भर्ग इति सवितृभर्गयोर्भिन्नता प्रतीयते; तथापि तयो परमार्थतो भेदो न विद्यते, य एव सविता तदेव भर्गः इत्येवमद्वैतमेव, प्रतिमायाः शरीरमितिवन्मन्तव्यम् । कीदृशं पुनस्तत्तेजः? अत आह—'भूः भुवः स्वः' लोकत्रयेऽभिव्याप्तमित्यर्थः । यद्वा—'भूरिति वै प्राणः' (तै. उ. १ । ३) इति श्रुत्या प्राणयति जीवयति सर्वान् प्राणिन इति व्युत्पत्त्या च सर्वप्राणिजीवनहेतुभूतमित्यर्थः । भुवः=भावयति स्थापयति सर्वं विश्वमिति व्युत्पत्त्या सर्वविश्वस्थापक तदाधारभूतमित्यर्थः । स्वः=सर्वस्य सुखकारकमित्यर्थः । कीदृशं पुनस्तत्? ॐ इति ॥

मन्त्रेऽस्मिन् 'धीमहि' पदं ब्रह्मसाक्षात्कारस्य प्रकृष्ट साधनं जपसहचरितं

तदर्थभावनलक्षणं ध्यानमेव कर्तव्यतया बोधयति । यदाहु —ध्यानस्य विशिष्टं महत्त्वं पौराणिका अपि—'कर्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते । तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते ॥ जपयज्ञसहस्रेभ्यो ध्यानयज्ञो विशिष्यते । ध्यानयज्ञात्परो नास्ति, ध्यानं ज्ञानस्य साधनम् ॥' (लिङ्गपुराणे पूर्वार्द्धे, ७८ । १३ + १४ ) इति । अत एव गीतासु भगवता वेदपुरुषेण—'ज्ञानाद्ध्यानं विशिष्यते' ( गी. १२ । १२ ) इत्युक्तम् । ध्यानस्य साक्षात्कारं प्रत्यव्यवहितहेतुत्वादपि च सर्वसाधनश्रेष्ठत्वम् । भर्गशब्दाभिधेयस्य पूर्णानन्दमयस्य दिव्यशान्ततेजसो ध्यानं सर्वश्रेष्ठमाह—'ध्यायेत्तेजोमयं ब्रह्म तेजोध्यानं परात्परम् । भ्रुवोर्मध्ये मनोऽर्द्धे च यत्तेजः प्रणवात्मकम् ॥' इति । 'ललाटमध्ये हृदयाम्बुजे वा यो ध्यायति ज्ञानमयीं प्रभां तु । शक्तिं यदा दीपवदुज्ज्वलन्तीं पश्यन्ति ते ब्रह्म तदेकनिष्ठाः ॥' (याज्ञ. संहिता. उत्तरार्द्ध. १२ । २५ । ४) इति । 'सप्रभं सत्यमानन्दं हृदये मण्डलेऽपि च । ध्यायन् जपेचदित्येतन्निष्कामो मुच्यतेऽचिरात् ॥' इति विश्वामित्रः । गायत्र्या सच्चिदानन्दलक्षणं यत्तत्त्व प्रकाश्यते, तदेवाहमस्मीत्यभेदभावना समाधायैव तां स्वात्मना ध्यायेत् । उक्तञ्च—'अथो वदामि गायत्रीं तत्त्वरूपां त्रयीमयीम् । यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम् ॥' ( गायत्रीतत्त्वे १ ) इति । 'न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥' इति व्यासस्मृतेः ।

सदैव प्रणवव्याहृतिसंयुक्ता एव गायत्री जपनीया न तद्रहिता इत्याह—शास्त्रवचनकदम्बम्—' ओङ्कारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च ॥ गायत्री

प्रणवश्चान्ते जपो ह्येवमुदाहृतः ॥' (बृ. यो. याज्ञ ४ । ५) जपेत्प्रणवपूर्वाभिर्व्याहृतिभिः सदैव तु । तिसृभिर्भूःप्रभृतिभिर्गायत्रीं ब्रह्मरूपिणीम् ॥' (लघ्वाश्वलायन १ । ४५) 'ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम् । ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः ॥' (कु. पु. उ. भा. १४ । २५) 'ओङ्कारं व्याहृतीस्तिस्रः प्रथमं संप्रयोजयेत् । ओङ्काराद्यास्त्रिरावृत्य वेदस्यारम्भणे तथा ॥ प्रणवाद्या तु विज्ञेया जपे व्याहृतिभिः सह । प्रणवव्याहृतिभिः सार्धं स्वाहान्तं होमकर्मणि ॥' (बृ. यो. या. ४ । ३८+३९) इत्यादिकम् । गायत्रीप्रणवयोगविधाने हेतुमाह—'गायत्री प्रकृतिर्ज्ञेया ओङ्कारः पुरुषः स्मृतः । ताभ्यामुभयसंयोगाज्जगत्सर्वं प्रवर्तते ॥' (बृ. यो. या. ४ । १७) इति । गायत्रीजपस्य सर्वमन्त्रजपेभ्य उपमया परममुत्कृष्टत्वं दर्शयति—'नास्ति गङ्गासमं तीर्थं, न देवः केशवात्परः । गायत्र्यास्तु परं जाप्यं न भूतं न भविष्यति ॥' (बृ. यो. या. १० । १०) 'गायत्र्या न परं जप्यं गायत्र्या न परं तपः । गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम् ॥' इति (महावाक्यम्) । 'यज्ञानां जपयज्ञोऽस्मि' (१० । ३५) इति गीतासु ब्रुवन् भगवान् पुरुषोत्तम —हिंसादिदोषशून्य येन यन्त्रशोधकत्व जपयज्ञस्य विधियज्ञेभ्योऽप्यधिकमेव महत्त्वमभिव्यनक्ति । तदाह मनुरपि—'पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥' (२ । ८६) इति । 'विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥' (२।८५)इति । 'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' (२ । ८७) इति

मनुः । जपस्य सामान्यं विशेषञ्च स्वरूपमुक्तं शास्त्रान्तरे—'जपः स्यादक्षराहत्तिर्मानसोपांशुवाचकैः । धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥ उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः । जिह्वौष्ठौ चालयेत्किञ्चिद् देवतागतमानसः । किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥ मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ॥' (इति नृसिंहपुराण—श्रीविष्णुधर्मोत्तरपुराणतन्त्रसारादौ) गायत्रीजपः सकलपापप्रणाशकारक इतीमानि दर्शयन्ति शास्त्रानेकवचांसि—'तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधति, सर्वमेव तत्संदहति, एवꣳहैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ।' (बृ० आ० ८ । १४ । ८) इति । तस्याः=गायत्र्याः । तद्विज्ञानफलमाह—यदीति, यथा लोका यदि ह वा अपि बह्विव=बहुतरमपि, इन्धनमग्नावभ्यादधति=निक्षिपन्ति, तत्सर्वमग्निर्दहत्येव, यथाऽयं दृष्टान्तः, एवमेव ह गायत्र्या अग्निर्मुखमित्येवंवित्=इत्येवं ज्ञात्वा तदुपासकः स्वयमग्निमुखगायत्र्यात्मा सन् यद्यपि बह्विव=बह्वेव पापं प्रतिग्रहादिदोषं कुरुते तत्सर्वं पापजातं संप्साय=सम्यग्भक्षयित्वाऽग्निवच्छुद्धः पापसंस्पर्शरहितः पूतश्च प्रतिग्रहादिदोषजनितपापफलसम्बन्धरहितश्च सम्भवति । गायत्रीविज्ञानस्य क्रममुक्तिफलत्वं दर्शयति—अजर इति । एवं गायत्र्यात्माऽजरोऽमरश्च सम्भवतीत्यर्थः । 'सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः । महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥' (मनु. २ । ७९) इति । एतत्=प्रकृतं त्रिकं=प्रणवव्याहृतित्रयगायत्रीलक्षणं, बहिः=ग्रामाद्बहिर्नदीतीरारण्यादौ सहस्रावृत्ति जप्त्वा महतोऽपि पापात् सर्प इव कञ्चुकान्मुच्यते इत्यर्थः । 'गायत्रीजपकृद्भक्त्या सर्वपापैः प्रमुच्यते ।' इति पराशरस्मृतेः । 'सर्वपापानि नश्यन्ति

स्तुता=अभिष्टुता स्वम्यस्ता वरदा=इष्टकामप्रदात्री, पावमानी=पवमानः पापात्स्कारणाच्च परिशोधकः परमेश्वरः तत्प्रतिपादिका पावमानी। वेदस्य=ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री। द्विजानां=द्विजन्मनां ब्राह्मणादीनां आयुरादिफलानि प्रचोदयन्तां=पूजायां बहुवचनम्—प्रेरयतु—प्रयच्छतु। ब्रह्मवर्चसं=ब्राह्मं तेज इत्यर्थः। अथ मह्यं=स्तोत्रे—जापकाय सर्वेषां फलप्रार्थकाय दत्त्वा=आयुरादिकं फलं वितीर्य, ब्रह्मलोकं=सत्यलोकं, यद्वा ब्रह्मैव लोकः लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत इति प्रत्यक्षवादोऽत्रापि पूर्ववत् पूजायां बहुवचनम्। शब्दावगम्यविशिष्टब्रह्माकारं परित्यज्य वाङ्मनसातीतशुद्धब्रह्मार्थरूपा भवेति। 'ऐहिकामुष्मिकं सर्वं गायत्रीजपतो भवेत्' (इत्यग्निपुराणे), 'जपनिष्ठो द्विजः श्रेष्ठोऽखिलयज्ञफलं लभेत्। सर्वेषामेव यज्ञानां जायतेऽसौ महाफलः॥' (तन्त्रसारे—३९) इति। 'योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम्। विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम्॥' (औशनसस्मृ २। ५२) इति। 'गायत्रीं संस्मरेद्योगात् स याति ब्रह्मणः पदम्। गायत्रीजपनिरतो मोक्षोपायञ्च विन्दति॥' (वृ. पाराशर स्मृ. ५। ७८) (संवर्तस्मृ. १२। ३०) इति। 'सावित्र्याश्चैव मन्त्रार्थं ज्ञात्वा चैव यथार्थतः। तस्यां यदुक्तं चोपास्य ब्रह्मभूयाय कल्पते॥' इति (योगी—याज्ञवल्क्यः) 'सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह। ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥' (शङ्ख. स्मृ. ११। २) 'य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम्। तत्त्वेन भरतश्रेष्ठ! स लोके न प्रणश्यति॥' (म० भा० भीष्म० १४। १६) 'एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्। संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥' (मनु० २।

७८ ) इति । ॐकारलक्षणमेनदक्षरं, एत =त्रिपदां सावित्रीमित्यर्थः । वेदत्रयस्वाध्यायजन्यपुण्येन युक्तो भवतीत्यर्थः । 'ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥' ( मनु. २ । ८१ ) इति । ब्रह्मण =वेदस्य, मुखं=आद्यं, तत्पूर्वकत्वेद्ध्ययनारम्भात् । अथवा ब्रह्मण = परमात्मन , मुख=प्राप्तेर्द्वारं, तत्तदनुष्ठानजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्ते । योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः । स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥' ( मनु. २ । ८२ ) इति । अतन्द्रित =अनलस·, अहन्यहनि=प्रत्यहमित्यर्थः । वायुभूतः=वायुरिव, कामचारी भवति । खमूर्तिमान्=ख–ब्रह्म तदेवास्य मूर्तिरिति ब्रह्मैव सम्पद्यते । जपसाफल्यप्रकारमाहुः–' मनःसहर्षेण शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥ ' इति ब्राह्मे । जपप्रकारमाह–' मनः संहृत्य विषयात् मन्त्रार्थगतमानसः । न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत् ॥ ' जपसंख्या तु कर्तव्या नासंख्यातं जपेत्सुधीः । ' इति । स्नान कृत्वा पवित्रे विविक्ते देशे आसनं बद्ध्वा मन्त्रन्यासादिकं कृत्वा एकाग्रमनसा रुद्राक्षमालया सहस्रकृत्वो वा शतकृत्वो वा द्विजेनावश्यं प्रत्यहं सावित्रीजपः कर्तव्यः इत्याह – ' सहस्रकृत्वः सावित्रीं जपेदव्यग्रमानसः । शतकृत्वोऽपि वा सम्यक् प्राणायामपरो यदि ॥ ' इति ( याज्ञवल्क्य ) ' गायत्र्याः स्वरूपं तन्महत्त्वञ्चाहुः–'तेजो वै गायत्री, तमः पाप्मा रात्रिस्तेन तेजसा तमः पाप्मानं तरन्तीति.। ' ( गो० ब्रा० ५ । ५ । ४ ) ' ब्रह्म गायत्रीति' ( शत० ब्रा० ६ । ६ । ६ । २ । ७ । ) 'गायत्री वद्ब्रह्म तदस्य सर्वस्योत्तमं करोति तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः ॥' ( श० ब्रा० १४ । ६ । ३७ । २ ) 'गा-

यत्री त्रिपदा देवी त्र्यक्षरी भुवनेश्वरी । चतुर्विंशाक्षरा विद्या सा चैवा-मीष्टदेवता ॥ ' (रुद्रयामळपूर्वतन्त्रे–गायत्रीरहस्ये ) त्र्यक्षरी=ओङ्कारस्वरूपा इत्यर्थः। 'गायत्री सा महेशानी परब्रह्मात्मिका मता । ' इति (रुद्रगा-यत्र्याम् ) 'गायत्री परदेवतेति गदिता ब्रह्मैव चिद्रूपिणी । ' इति गा-यत्रीपुरश्चरणे । ' गायत्री वा इद् सर्वं भूतं यदिदं किंच ' ( छां. ३ । १२ । १ ) इत्यादि । इदं सर्वं भूतं=प्राणिजातं, यत्किञ्च=स्थावरजङ्गमं वा तत्सर्वं गायत्र्येवेत्यर्थः । तस्याः महत्त्वं व्याख्यातं भगवत्पादैः शङ्करस्वामिभिस्त-त्रैव–' गायत्रीद्वारेण चोच्यते ब्रह्म, ब्रह्मणः सर्वविशेषरहितस्य नेतिनेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात् । सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात् । सोमा-हरणात् इतरछन्दोऽक्षराहरणेनेतरछन्दोव्याप्त्या च सर्वसवनव्यापक-त्वाच्च यज्ञे प्राधान्यं गायत्र्याः । गायत्रीसारत्वाच्च ब्राह्मणस्य मातर-मिव हित्वा गुरुतरां गायत्रीं ततोऽन्यद्गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति । तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात् । अतो गायत्रीमुखे-नैव ब्रह्मोच्यते । ' ( छां. ३ । १२ । १ ) इति । बृहदारण्यके भाष्येऽपि–'गायत्र्युपाधिविशिष्टस्य (ब्रह्मणः) उपासनं वक्तव्यं....सर्वछन्दसां हि गायत्रीछन्दः प्रधानभूतम्....द्विजोत्तमस्य द्वितीयं जन्म गायत्री-निमित्तं तस्मात्प्रधाना गायत्री....गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियतेऽतस्तन्मूलः पुरुषार्थस-म्बन्धः ।' (बृ. ५ । १४ । १) सैषा गायत्री प्राणः, अतो गायत्र्यां जगत्प्रतिष्ठितम् । यस्मिन् प्राणे सर्वे देवा एकं भवन्ति। सर्वे वेदाः कर्माणि तत्फलं च, सैव गायत्री प्राणरूपा सती जगत आत्मा, सा

ईषा गयाँस्तत्रे=त्रातवती,के पुनर्गयाः? प्राणाः=वागादयो वै गयाः.
....गयत्राणाद्गायत्रीति प्रथिता।' (बृ. उ. ५ । १४ । ४) इति।
'प्रतिग्रहादन्नदोषाच्च पातकादुपपातकात्। गायत्री प्रोच्यते तस्माद्
गायन्तं त्रायते यतः॥' (या. स्मृ. ५ । ४२) 'यथा मधु च पुष्पे-
भ्यो घृतं दुग्धाद्रसात्पयः। एवं हि सर्ववेदानां गायत्री सारमुच्यते॥'
(बृ. यो. या. ४ । १६) 'अकारं चाप्युकारञ्च मकारञ्च प्रजापतिः।
वेदत्रयान्निरदूहद् भूर्भुवःस्वरितीति च॥' (मनु. २ । ७६) इति।
निरदुहत्=उद्धृतवानित्यर्थः। त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥' तदितिप्रतीकेना-
नूदितायाः सावित्र्याः ऋचः, पादं पादं=त्रीन् पादानित्यर्थः, ब्रह्मा, अदूदुहत्=
निश्चकर्ष। इति। 'भूर्भुवःस्वरिति चैव चतुर्विंशाक्षरास्तथा। गायत्री
चतुरो वेदाः ओङ्कारः सर्वमेव तु॥' (बृ.यो.या. २ । ७९।) 'तदि-
त्यचः समो नास्ति मन्त्रो वेदचतुष्टये। सर्वे वेदाश्च यज्ञाश्च दानानि
च तपांसि च। समानि कलया प्राहुर्मुनयो न तदित्यृचः॥' इति
विश्वामित्रः। 'अष्टादशसु विद्यासु मीमांसातिगरीयसी। ततोऽपि तर्क-
शास्त्राणि पुराणं तेभ्य एव च॥ ततोऽपि धर्मशास्त्राणि तेभ्यो गुर्वी
श्रुतिर्द्विज!। ततोऽप्युपनिषच्छ्रेष्ठा गायत्री च ततोऽधिका। दुर्लभा
सर्वमन्त्रेषु गायत्री प्रणवान्विता॥' इति बृहत्सन्ध्याभाष्ये। 'सर्ववेद-
सारभूता गायत्र्यास्तु समर्चना। ब्रह्मादयोऽपि सन्ध्यायां तां
ध्यायन्ति जपन्ति च॥' (देवीभागवते ११ । १६ । १५) 'एका-
क्षरं परं ब्रह्म प्राणायामाः परन्तपः। सावित्र्यास्तु परन्नास्ति मौना-
त्सत्यं विशिष्यते॥' (मनु. २ । ८३) इति। एकाक्षरं=ॐकारः, परं

ब्रह्म=परब्रह्मावाप्तिहेतुत्वात् । ओङ्कारस्य जपेन तदर्थस्य च परब्रह्मणो भावनया तदवाप्तेः । प्राणायामाः=सप्रणव–सव्याहृति–सशिरस्कगायत्रीभिस्त्रिरावृत्तिभिः कृताश्चान्द्रायणादिभ्योऽपि परं तपः । 'प्राणायामाः' इति बहुवचननिर्देशात् त्रयोऽवश्यं कर्तव्या इत्युक्तम् । सावित्र्याः प्रकृष्टमन्यन्मन्त्रजातं नास्ति । मौनादपि सत्यं वाग्विशिष्यते । इति । 'सर्वेषां जपसूक्तानामृचाञ्च यजुषां तथा । साम्नां चैकाक्षरादीनां गायत्री परमो जपः ॥' (बृ. परा. स्मृ. ४ । ४) 'गायत्री चैव वेदाश्च ब्रह्मणा तोलिता पुरा । वेदेभ्यश्च सहस्रेभ्यो गायत्र्यतिगरीयसी ॥' (बृ. परा. स्मृ. ५ । १६) इत्यादीनि वचनानि । सकलशास्त्रविदपि यो गायत्रीमुपास्य तदर्थं स्वस्वरूपं ब्रह्मतत्त्वं न साक्षात्करोति चेत्तदा तस्य सर्वशास्त्राध्ययनज्ञानादिकं वृथा परिश्रममात्रं भाररूपमेवेत्याह–योगी याज्ञवल्क्यः–'साङ्गांश्च चतुरो वेदानधीत्यापि सवाङ्मयान् । सावित्रीं यो न जानाति वृथा तस्य परिश्रमः ॥' इति । विशेषतस्त्वं पश्यतीति निरुक्तिमूलं मुख्यं तत्त्वदृष्टिलक्षणं विप्रत्वं सावित्र्युपासनाहीनो विप्रः सकलशास्त्रपाठकोऽपि नासादयितुं शक्नोतीत्याह पराशरः–'किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः । साङ्गैः सावित्रीहीनो यो न विप्रत्वमवाप्नुयात् ॥' (बृ. प्रा. स्मृ. ५ । १४) इति । तस्माच्छास्त्राध्ययनादेः साफल्याय गायत्र्युपासनाऽवश्यमेव कर्तव्या इति । गायत्र्युपासनां विना ब्राह्मणस्य तु विशेषतोऽधःपातो भवतीत्याह–'गायत्र्युपासना नित्या सर्ववेदैः समीरिता । यया विना त्वधः पातो ब्राह्मणस्यास्ति सर्वथा ॥' (देवी भागवते. १२ । ८ । ९) इति । तस्मादधःपातभयादपि ब्राह्मणेन गायत्री विधिवदुपासनीया इति । सकलशास्त्रमनधीयानोऽपि द्विजः केवलगायत्र्युपासनया मोक्षमाप्तुं शक्नोतीत्याह–'गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नु-

यात् ॥' (देवीभा. १२ । ८ । ९०) इति । अतो मोक्षावाप्तिलोभादपि द्विजेन गायत्री समाराध्या इति । सावित्रीमनुपास्य द्विजो विनिन्दितो भवति । निन्दितोऽसौ कथङ्कारं स्वाभ्युदयं लभेतेत्याह- मनुरपि-' **एतयर्चा विसंयुक्तः काले च क्रियया स्वया । ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥'** (२ । ८०) इति । संध्यायामन्यत्र समये च ऋचा एतया सावित्र्या विसं- युक्तः=त्यक्तसावित्रीजपः, स्वकीयया क्रियया सायं प्रातर्होमादिरूपया स्वकाले त्यक्तो ब्राह्मणः क्षत्रियो वैश्योऽपि सज्जनेषु निन्दां गच्छति । तस्मात्स्वकाले सावित्रीजपं स्वक्रियां च न त्यजेदिति । गायत्रीजपतदर्थध्यानाभ्यासनिय- मादेव हि विश्ववंद्यं ब्राह्मण्यं लब्धुं शक्येत । नान्यथा वेदशास्त्रपठनादिनेत्याह- '**न ब्राह्मणो वेदपाठान्न शास्त्रपठनादपि । देव्यास्त्रिकालमभ्यासा- द्ब्राह्मणः स्याद् द्विजोऽन्यथा ॥**' इति बृहत्सन्ध्याभाष्ये । '**त्रिव्याहृति- युतां देवीमोंकारयुगसम्पुटाम् । उपास्य चतुरो वर्गान् साधयेद्यो न सोऽन्धधीः ॥**' इत्ययं पुरुषार्थचतुष्टयसाधकगायत्र्युपासनाद्विहीनं द्विजजनमन्ध- त्वकथनेन निन्दति । गायत्रीमुपेक्ष्य द्विजोऽन्यमन्त्रोपासनया कदापि क्वापि न स्वाभीप्सित फलमवाप्तुं शक्नुयादित्याह-'**गायत्रीं यः परित्यज्य चान्यम- न्त्रमुपासते । न साफल्यमवाप्नोति कल्पकोटिशतैरपि ॥**' इति बृह- त्संध्याभाष्ये । तस्माद् द्विजेन गायत्रीमन्त्रो न कदाऽप्युपेक्षणीय इति । **एष एव मन्त्रो द्विजत्वसम्पादकोपनयनसंस्कारे-आचार्येणोपदिश्यमानो ब्राह्मणक्षत्रियवैश्यानां परमो गुरुमन्त्र इत्युच्यते ।** अत एव सूर्यवंशो- याश्चन्द्रवंशीयाश्च सर्वे क्षत्रिया अपि इममेव गायत्रीमन्त्रं शुचयो भूत्वा नित्यं जपन्ति स्मेत्याह भारतेऽनुशासने युधिष्ठिरं प्रति भीष्मः-'**सोमादित्यान्वयाः सर्वे राघवाः कुरवस्तथा । पठन्ति शुचयो नित्यं सावित्रीं परमां**

गतिम् ॥' ( म. भा. अनु. प. १५० । ७८ ) इति । अत एव मर्यादापुरुषोत्तमपूर्णपुरुषोत्तमौ क्षत्रियावतारलीलां भजमानौ भगवन्तौ श्रीरामकृष्णचन्द्रावपि लोकं सङ्ग्रहीतुं नियमतः सन्ध्योपासनगायत्रीमन्त्रजपध्यानादिकं कुर्वन्तौ वाल्मीकीयरामायणभारतादौ महर्षिभिरपि वर्ण्येते इति । तच्चरितपरिशीलनपराणां नाविरोहितम् ।

अत एवाप्पयदीक्षितैः पण्डितप्रवरैरपि शिवतत्त्वविवेके द्विजाना ब्राह्मणक्षत्रियवैश्यानां गायत्र्येव परमा गतिः, तया च सदाशिवः परात्परो ज्योतिर्मयः परब्रह्मैव सदा ध्येय इत्यभिधीयते—' द्विजानां गायत्री खलु परमुपास्या नियमिता, प्रसिद्धं तस्याश्च त्वमसि परमं दैवतमिति । अकुर्वाणस्यातस्तव चरणसेवां द्विजपशोः, अगस्त्योऽलङ्कारस्सकलमपि सत्कर्मचरितम् ॥ नैगमिकानां सर्वेषां गायत्री परमा गतिः । कर्मान्तरेष्वशक्तोऽपि तयैव लभते गतिम् ॥ तां विनाऽन्यानि कर्माणि निष्फलानि कृतान्यपि । अस्मिन्नर्थे न कस्यापि वैदिकस्य विसंमतिः ॥ गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः । गायत्रीहीनवेदास्तु साङ्गा अपि च निष्फलाः ॥ इत्यादिस्मृतिवाक्यानामेकमत्यस्य दर्शनात् । अमुष्याः प्रतिपाद्या च देवता श्रीसदाशिवः ॥ असाधारणवन्नत्यभर्गशब्देन निश्चितः । यदेष रुद्रो भर्गाख्यो ब्रह्मवादिन इत्यदः ॥ एष देवो महादेवः केवलः परमशिवः । तदेवाक्षरमद्वैतं तदादित्यान्तरं परम् ॥ देवस्य सवितुर्मध्ये यो भर्गो नो धियः क्रमात् । प्रचोदयात्तद्वरेण्यं धीमहीत्यन्वयः क्रमः ॥ इत्यसौ याज्ञवल्क्येन सर्वशास्त्रार्थवेदिना । स्वनिर्मिते योगशास्त्रे दर्शितो मुनिनाऽ-

न्यः ॥ वेदनिष्ठैः सदा कार्यं गायत्र्या शिवचिन्तनम् । ध्यानप्रधान-मेवैतत्सन्ध्याकर्म यतः श्रुतम् ॥ यस्तु श्रीपार्वतीनाथपदाम्भोजपरा-ङ्मुखः । वैदिकं मार्गमास्थाय तत्कर्माण्यनुतिष्ठति ॥ न तस्य तानि कस्यैचित् कल्पन्ते फलसिद्धये । परिधानविहीनानि मण्डनानि नृणामिव ॥ यतस्तानि विकल्पन्ते विना गायत्र्युपासनम् । शिवो-पास्तिविहीनैस्तैरिति तात्पर्यसंग्रहः ॥' इति ।

नित्यानन्दे ! महामाये ! परेशानि ! नमोऽस्तु ते ॥ त्वं ब्रह्मा त्वं हरिः साक्षात् रुद्रस्त्वं चेन्द्रदेवता । मित्रस्त्वं वरुणस्त्वं च त्वमश्विनौ भगः ॥ पूषाऽर्यमा मरुत्वाँश्च ऋषयोऽपि मुनीश्वराः । पितरो नागयक्षाश्च गन्धर्वाप्सरसां गणाः ॥ रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि ! ॥ ऋग्यजुःसामवेदाश्च अथर्वाङ्गिरसानि च । त्वमेव पञ्चभूतानि तत्त्वानि जगदीश्वरि ! ॥ ब्राह्मी सरस्वती सन्ध्या तुरीया त्वं महेश्वरी । त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिताः ॥ पुराणानि च तन्त्राणि महागममतानि च । तत्सद्ब्रह्मस्वरूपा त्वं किञ्चित्सदसदात्मिका ॥ परात्परेशी गायत्री नमस्ते मातरम्बिके ! । चन्द्रे ! कलात्मिके ! नित्ये ! कालरात्रि ! स्वधे ! स्वरे ! ॥ स्वाहाकारे ! अग्निवक्त्रे ! त्वां नमामि जगदीश्वरि ! । नमो नमस्ते गायत्रि ! सावित्रि ! त्वां नमाम्यहम् । सरस्वति ! नमस्तुभ्यं तुरीये ! ब्रह्मरूपिणि ! ॥' इति॥ (वसिष्ठसंहितायाम्) । वाजसनेयकशतपथब्राह्मणोक्तगायत्र्युपस्थानमन्त्रोऽपि तत्स्वरूपमाह—'तस्या उपस्थानं, गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति ।' (बृ. ५।१४।७) इति । अस्यायमर्थः—तस्याः=गायत्र्याः उपस्थानं=उपेत्य स्थानं—नमस्करणमनेन मन्त्रेण कर्त्तव्यमिति यावत् । कोऽसौ मन्त्र इत्याह—हे गायत्रि ! त्वं त्रैलोक्यपादेन एकपदी असि=भवसि । त्रयीविद्यारूपेण द्वितीयेन पादेन द्विपदी च भवसि । प्राणादिना तृतीयेन पादेन त्रिपदी असि । सूर्यमण्डलान्तर्गतपुरुषलक्षणेन पादेन त्वं चतुष्पदी असि । एवमेतैश्चतुर्भिः पादैस्त्वमुपासकैः पद्यसे=ज्ञायसे । अतः परं परेण=निरुपाधिकेन स्वेनाऽऽत्मना हे गायत्रि ! त्वमपदसि,

पद्यते येन तत्पदं, न विद्यते पदं यस्याः सा। कुतो हि यस्मात् केनापि न पद्यते =न ज्ञायते ? नेति नेत्यादिलक्षणत्वात्। अतो व्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय परोरजसे नमस्कारोऽस्तु। मण्डलान्तर्गतः पुरुषो हि यस्मात् ददृशे इव न तु साक्षात् दृश्यते। ईश्वरस्यातीन्द्रियत्वात्तो दर्शतं पदमित्युच्यते। सर्वमेव रजो=रजोजातं कामात्मकं लोकात्मकं वा उपर्युपरि हि यस्मादेष सविता तपन्वर्ततेऽतो रजसः पर इति परोरजा उच्यते। तत्प्रयोजनमाह—असाविति। असौ शत्रुः पाप्मा स्वप्राप्तिविघ्नकरोऽदःपापरूपस्य शत्रोर्यत्स्वप्राप्तिविघ्न-कर्तृत्वं तच्च मम मा प्रापत्=मा प्राप्नोतु। इतिशब्दः पापक्षयफलोपस्थान-मन्त्रपरिसमाप्त्यर्थः।

एकैव गायत्री देवी कालभेदेन त्रिधा व्यवह्रियते। तद्यथा—'गायत्री नाम पूर्वाह्णे, सावित्री मध्यमे दिने। सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता॥' इति व्यासः। क्रियाभेदेनापि 'तत्प्रयोक्तृमाणत्राणात् गायत्रीति, सवितृद्योतनात् जगतः प्रसवितृत्वाच सैव सावित्रीति, वाक्स्वरूपत्वाच्च सरस्वतीति कथ्यते। अत एव साधकाः तत्साकार-स्वरूपस्य प्रातर्ध्यानं—'ॐ प्रातर्गायत्री रविमण्डलमध्यस्था, रक्तवर्णा, द्विभुजा, अक्षसूत्रकमण्डलुधरा, हंसासनसमारूढा, ब्रह्माणी ब्रह्म-दैवत्या कुमारी ऋग्वेदोदाहृता ध्येया।' इति। मध्याह्नध्यानं—'ॐ मध्याह्ने सावित्री रविमण्डलमध्यस्था, कृष्णवर्णा, चतुर्भुजा त्रिनेत्रा, शङ्खचक्रगदापद्महस्ता युवती, गरुडारूढा, वैष्णवी विष्णुदैवत्या यजुर्वेदोदाहृता ध्येया।' इति। सायाह्नध्यानं—'ॐ सायाह्ने सरस्वती रविमण्डलमध्यस्था, शुक्लवर्णा, चतुर्भुजा, त्रिशूलडमरुपाशपात्रकरा, वृषभासनसमारूढा, वृद्धा रुद्राणी रुद्रदैवत्या सामवेदोदाहृता ध्येया।'

इति । गायत्र्या आवाहनमन्त्रमाह—आयातु वरदा देवी, अक्षरं ब्रह्म संमितम् । गायत्री छन्दसां माता इदं ब्रह्म जुषस्व मे । ओजोऽसि, सहोऽसि, बलमसि, भ्राजोऽसि, देवानां धामनामाऽसि, विश्वमसि, विश्वायुः सर्वमसि, सर्वायुरभिभूः, ॐ गायत्रीमावाहयामि, ॐ सावित्रीमावाहयामि, ॐ सरस्वतीमावाहयामि, छन्दर्षीनावाहयामि, श्रियमावाहयामि । गायत्रिया गायत्रीछन्दो, विश्वामित्र ऋषिः, सविता देवताऽग्निर्मुखं, ब्रह्मा शिरो, विष्णुर्हृदयं, रुद्रः शिखा, पृथिवी योनिः, प्राणापानव्यानोदानसमाना सप्राणा, श्वेतवर्णा, सांख्यायनसगोत्रा गायत्री, चतुर्विंशत्यक्षरा, त्रिपदा षट्कुक्षिः, पञ्चशीर्षा, उपनयने विनियोग इति ।' (तै. आ. १० । ३५)

इति । अस्याऽयमर्थः—वरदा=अभीष्टवरप्रदा, देवी=गायत्रीछन्दोऽभिमानिनी देवता, अक्षरं=विनाशरहितं, सम्मितं=सम्यग्वेदान्तप्रमाणेन निश्चितं, ब्रह्म=जगत्कारणं परं तत्त्वमुद्दिश्य, आयातु=आगच्छतु—अस्माकं ब्रह्मतत्त्वं बोधयितुमागच्छत्वित्यर्थः । अयमेवार्थ उत्तरार्धेन स्पष्टीक्रियते । छन्दसां=गायत्रीत्रिष्टुबादीनां वेदानां वा माता=जननी देवता, गायत्री=गायत्रीशब्दाभिधेया, मे=मम इदं=ब्रह्म वेदान्तप्रतिपाद्यं तत्त्वं जुषस्व=ज्ञापयतु—उपदिशत्वित्यर्थः । हे गायत्रि ! त्वमोजोऽसि=बलहेतुभूताष्टमधातुरूपाऽसि । सहोऽसि=शत्रूनभिभवितुं शक्तिरसि । बलमसि=शरीरगतव्यवहारसामर्थ्यरूपाऽसि । भ्राजोऽसि=दीप्तिरूपाऽसि । देवानामग्नीन्द्रादीनां धाम=तेजो यदस्ति, तन्नामाऽसि, तदेव त्वन्नामेत्यर्थः । विश्वं=सर्वजगद्रूपं त्वमेवासि । विश्वायुः=सम्पूर्णायुःस्वरूपाऽसि । उक्तस्यैव व्याख्यानं सर्वमसि सर्वायुरिति । अभिभूः=सर्वस्य पापस्य तिरस्कारहेतुः । ॐ—प्रणवप्रतिपाद्यपरमात्माऽसि । तादृशीं गायत्रीं मदीये मनस्येवाऽऽ-

वाहयामि । सावित्रीं=सवितुः परमात्मन इमामावाहयामि । सरस्वतीं=नदजल-
धारणप्रद्योतनाभ्यां वेदाः=सरांसि तन्मयत्वात्तद्वतीं सरस्वतीं चतुर्विंशत्यक्षरमन्त्र-
रूपामावाहयामि । तदङ्गानि छन्दर्षीं, गायत्र्याः सर्वमन्त्रमयत्वेन सर्वाणि छन्दांसि
सर्वांश्चर्षीन् देवताश्च सर्वा आवाहयामि । श्रियं=गायत्री सर्ववेदमयी तस्मात्सर्व-
वेदानां श्रीरूपां तामावाहयामि । इत्येकगायत्र्यावाहनेनाऽऽत्मनि सर्वमावाहया-
मीति सङ्कल्पं कृत्वा तामावाह्य तच्छन्दादि स्मृत्वा ध्यानमाचरेत् । तत्र मन्त्रः—
गायत्रिया इति । ऋषिः=मन्त्रद्रष्टा । सविता=सर्वं प्रसुवानः परमात्मा देवता
तन्मन्त्रत्वात् । इति छन्दर्षिदेवतास्मरणम् । ध्यानम्—अग्निः=प्रसिद्धो मुखं=
मुखस्थानीयो गायत्र्या इति संबध्यते । ब्रह्मा=चतुर्मुखः शिरः=शिरस्स्थानीयः
प्रथमजत्वात् । विष्णुर्हृदयं सर्वत्र सूक्ष्मत्वेन स्वस्थितेः फर्ता । रुद्रः शिखा—
यथा शिखा सर्वावयवातीता तथा रुद्रः प्रलयकरणाद्वतः शिखास्थानीयः ।
पृथिवी योनिः=योनिस्थानीया सर्वप्रसवहेतुत्वात् । सप्राणा=सह प्राणैरिन्द्रियैः
वागादिभिः । श्वेतवर्णा=प्रथमं शुद्धसत्त्वगुणप्रधानत्वात् । सांख्यायनसगोत्रा=
'समित्येकीभावे' इति यास्कः एकीभावेन—आत्मानन्यत्वेन ख्यायते—प्रकाश्यते
वस्तुस्वरूपमनयेति संख्या—स्थूलसूक्ष्मकारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि
प्रविलापेनोदिताऽखण्डब्रह्माकारा चेतोवृत्तिः संख्या, तां ये वहन्ति ते सांख्याः
=ज्ञाननिष्ठाः परमहंसाः संन्यासिनः,तैः ईयते—गम्यते प्राप्यते यः सः प्रत्यगभिन्नः
परमात्मा—सांख्यायनः, तेन समानं=एकं गोत्रं कुलं—उद्भवोऽस्याः सांख्यायन-
सगोत्रा इति देवतारूपत्वेन ध्यानमुक्त्वा मन्त्ररूपत्वेन विवक्षुः पुनर्गायत्रीमुपा-
दत्ते—गायत्री मन्त्ररूपा चतुर्विंशतिरक्षराण्यस्याः सा तथोक्ता । त्रयः पादा
अस्याः सा त्रिपदा । षड् शिक्षादीनि वेदाङ्गानि कुक्षयोऽस्याः सा । पञ्चशीर्षा
=चतुर्णां वेदानां चत्वार उपनिषद्भागा—ज्ञानप्रतिपादिनः कर्मोपासनाकाण्डयोर

स्थिताश्चत्वारि शीर्षाणि=शिरांसि, तथेतिहासपुराणानि पञ्चमो वेदो ज्ञान-
पञ्चमं शीर्षमस्याः सा पञ्चशीर्षा इति । इति ध्यात्वाऽनेन
ण वटोरुपनयने=उपवीतकरणे विनियोग इत्येवं स्मृत्वा पठित्वा च गायत्री-
जपेदिति । शिवायकास्तु गायत्रीं शिवस्वरूपं मन्यन्ते—'यः शिवः सा
गायत्री गायत्री या शिवस्तु सः । मूढा एवं न जानन्ति ह्यज्ञान-
सा हताः ॥ सकलेनैव रूपेण गायत्री शिव उच्यते । निष्कलेनैव
वेन गायत्री कथ्यते शिवः ॥' अत एवोक्तमादित्यपुराणेऽपीति—'गायत्र्याः
मं तत्त्वं देवदेवो महेश्वरः । इति ध्यात्वा जपन् विद्वान् गायत्र्याः
लमश्नुते ॥' कौर्मेऽपि राजवंशानुकीर्तने वसुमनसो राज्ञो गायत्र्या सूर्य-
मण्डलस्थं शिवमुपासीनस्य सूर्यमण्डलान्निर्गतेन शिवेन प्रसादः कृत इत्युपवर्णितम्।
था हि—'राजा वसुमनास्तत्र रविमण्डलमध्यगम् । समुपासिष्ट गायत्र्या
रूपं रुक्मविग्रहम् ॥ अनुग्रहार्थं तस्याथ भगवान् परमः शिवः ।
ादिर्भूय रवेर्बिम्बाद्‌स्मै रूपमदर्शयत् ॥ शिवशक्तिमयं दिव्यं चन्द्रार्ध-
कृतशेखरम् । त्रिलोचनं नीलकण्ठं ब्रह्मेन्द्रोपेन्द्रवन्दितम् । अनुगृह्य
तं कालं देहान्तेऽदान्निजं पदम् । तुष्टश्चिरतरं तस्य गायत्र्याराध-
ादिभिः ॥' ( भङ्गीशतन्त्रे. ५ ) इति । इत्येवं गायत्र्याः परममहत्त्वादिकं
दनुष्ठानादौ मनुजानां दृढां रुचिं प्रसोतुं यत्किञ्चिद्वर्ण्यमानमपि विदुषां तदनन्त-
नेव प्रतिभाति । तथा चान्ते—' गायत्री चव जननी गायत्री पापनाशिनी ।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥' ( शङ्खसंहिता.
। १२ ) इत्यभिधाय विस्तरलेखनाद्विरराम इति ॥

× × ×

## ( ६३ )

### ( शुद्धब्रह्मज्ञापनाय, उपासनाय च विशिष्टब्रह्मणो वर्णनम् )

श्रुतिषु द्विरूपं हि ब्रह्माधिगम्यते शुद्धं विशिष्टञ्च। तत्र प्रपञ्चोप 'शिवं शान्तं निर्गुणं निर्विशेषं शुद्धं ब्रह्म ज्ञेयत्वेन, नामरूपविकारभेदोपाधिविशिं सगुणं सविशेषं ब्रह्म उपास्यत्वेन चोपदिश्यते। शाखाचन्द्रन्यायेन हि विशिं 'स्य शुद्धलक्षकत्वात्, तं विना शुद्धाधिगमायोगात्, विशिष्टब्रह्मोपासनं चि काग्र्यमनोनिरोधद्वारा शुद्धब्रह्मसाक्षात्कारं जनयति। तथा चाभिहितमभि कल्पतर्वाचार्यैः—' निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन् स्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्र धीकनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥' ( ब्र. सू. 'कल्पतरुः ) इति। अत एव शुद्धं ब्रह्म ज्ञापयितुमुपासनया चित्तमज्ञान्यपने श्रुतिर्विशिष्टं ब्रह्म निरूपयति—

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्**
**स भूमिꣳ सर्वतः स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम्**

( शु. य. ३१। १। ऋ. १०। ९०। १।.साम, ६। १७। अथर्व. १९। ६। १। तै. आ ३। १। २१ )

पुरुष.=सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यः चतुर्दशभुवना 'व्याप्तः पुरुषोऽस्ति। 'इमे वै लोकाः पूः अयमेव पुरुषो योऽयं प **सोऽस्यां पुरि शेते तस्मात्पुरुषः।**' ( श. ब्रा. १३। ६। २। इति श्रुते। स कीदृश इत्यत आह—' सहस्रशीर्षा=सहस्रशब्दोऽत्र बहुत्वर

ास्य बोधकः । अत एव सहस्राणि बहूनि—असंख्यानि—अनन्तानि शीर्षा-
=शिरांसि विद्यन्ते यस्य ब्रह्माण्डव्यापकस्य पुरुषस्य ॥ तथा । अनन्तमस्तक-
। 'शीर्षंश्छन्दसि' इति शिरःशब्दस्य शीर्षन्नादेशः । शिरोग्रहणं
नयवोपलक्षणम् । तेनाऽसौ पुरुषः सहस्रमुखः सहस्रोदर इत्यादिरूपोऽपि
। यानि सर्वप्राणिनां शिरांसि तानि तद्देहान्तःपातित्वात् तस्यैवेति
तशीर्षत्वम् । एवमग्रेऽपि । सहस्राक्षः=सहस्रमक्षीणि यस्य सोऽनन्ताक्षिमि-
: इत्यर्थः । अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षकं तेनासौ सहस्रश्रोत्रः सहस्र-
इत्यादिरूपोऽपि । सहस्रपात्=सहस्रं पादा यस्य सः, अनन्तचरणः—
ख्यायाः सुपूर्वस्य' इति पादस्यान्त्यलोपः । पादग्रहणं सर्वकर्मेन्द्रियोपलक्ष-
, तेनायं सहस्रबाहुः सहस्रमेढ्र इत्यादिरूपोऽपि । अत एवाथर्वसंहितायां
हस्रशीर्षा' इत्यस्य स्थाने सहस्रबाहुरिति पाठ उपलभ्यते । परमेश्वर एव
. सर्वकार्यकरणानि सृष्ट्वा तेष्वनुप्रविश्य जीवसंज्ञां लभते इति सर्वेषां
वानां कार्यकरणैः ईश्वरस्यैव कार्यकरणत्वमिति भावः । सः=एतादृशः पुरुषः,
मिं=ब्रह्माण्डगोलकरूपां—मेदिनीं सर्वतः=ऊर्ध्वमधोऽग्रादितोऽन्तर्बहिश्च स्पृत्वा=
प्य, स्पृणोतिर्व्याप्तिकर्मा । यद्वा भूमिशब्दो भूतोपलक्षकः, तेन पञ्च भूतानि
। दशाङ्गुलं=दशाङ्गुलपरिमितं हृदयप्रदेशं,अत्यतिष्ठत्=अभ्यतिष्ठत्-
ात्स्फूर्तिप्रदतया साक्षिचैतन्यरूपेणाधिष्ठायावस्थितः। यद्वा नाभेः सकाशात्—
शाङ्गुलप्रदेशं, अत्यतिष्ठत्—अतिक्रम्य हृदि स्थितः । सर्वत्रावस्थितस्य हृदय-
स्थितिप्रतिपादनं तत्रोपलभ्यत्वाभिप्रायतः। तथा च श्रुत्यन्तरेणापि ब्रह्माभिन्नस्य
त्रस्यात्मनो हृदयस्थानमाम्नायते—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्त-
र्योतिः ।' (बृ. ४ । ३ । ७) इति। दशाङ्गुलमित्युपलक्षणं तस्माद् बहि-
सर्वतो व्याप्यावस्थित इति। अथवा—भूमिं=भूतभौतिकं सर्वमन्तर्बहिर्व्याप्य

## ( ६३ )

### ( शुद्धब्रह्मज्ञापनाय, उपासनाय च विशिष्टब्रह्मणो वर्णनम् )

श्रुतिषु द्विरूपं हि ब्रह्माधिगम्यते शुद्धं विशिष्टञ्च । तत्र प्रपञ्चोप 'शिवं शान्तं निर्गुणं निर्विशेषं शुद्धं ब्रह्म ज्ञेयत्वेन, नामरूपविकारभेदोपाधिवि सगुणं सविशेषं ब्रह्म उपास्यत्वेन चोपदिश्यते । शाखाचन्द्रन्यायेन हि विशि स्य शुद्धलक्षकत्वात्, तं विना शुद्धाधिगमायोगात्, विशिष्टब्रह्मोपासनं चि 'काग्र्यमनोनिरोधद्वारा शुद्धब्रह्मसाक्षात्कारं जनयति'। तथा चाभिहितमभियु 'कल्पतर्वाचार्यैः—' निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्द स्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ वशीकृते मनस्येषां सगुणब्र शीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥' ( ब्र. सू. 'कल्पतरुः ) इति । अत एव शुद्धं ब्रह्म ज्ञापयितुमुपासनया चित्तमकाग्र्यपने श्रुतिर्विशिष्टं ब्रह्म निरूपयति—

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिꣳ सर्वतः स्पृत्वाऽत्यतिष्ठद् दशाङ्गुलम् ।**

[ शु. य. ३१ । १ । ऋ. १० । ९० । १ । साम, ६ । १७ । अथर्व. १९ । ६ । १ । तै. आ. ३ । १ । ३१ )

पुरुषः=सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यः चतुर्दशभुवनाभि व्यासः पुरुषोऽस्ति । 'इमे वै लोकाः पूः अयमेव पुरुषो योऽयं पव सोऽस्यां पुरि शेते तस्मात्पुरुषः ।' ( श. ब्रा. १३ । ६ । २ । १ इति श्रुतेः । स कीदृश इत्यत आह—' सहस्रशीर्षा=सहस्रशब्दोऽत्र बहुत्वार्थ

तथा चायमस्मात्तद्देव भिन्नः स्यादित्याशङ्क्य–सर्वविश्वामित्र वेन पुरुषं प्रतिपादयति—

**ॐ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥**

( शु. य ३१ । २ । ऋ. १० । ९० । २ । अथर्व. १९ । ६ । ४ । साम. ६१९ । तै. आ. ३ । १२ । १ )

यत्=इद–वर्तमानं विविधप्रत्ययगम्यं निखिलमपि जगत्, तत्सर्वं पुरुष एव, न ततो भिन्नम् । यत् भूतं=अतीतं जगत्, यच्च भाव्यं=भविष्यं जगत् तदपि पुरुष एव न ततोऽन्यम् । न चैवमनित्यदुःखभयादिरूपनिखिलप्रपञ्चेन सह पुरुषस्याभेदबोधने सति पुरुषस्याप्यनित्यदुःखाद्यात्मकतापत्तिरिति वाच्यम्,—प्रपञ्चस्य बाधे श्रुतेः तात्पर्यात्, अतोऽत्र जगत्पुरुषयोर्बाधसामानाधिकरण्यमेवाभिप्रेयते, न तु मुख्यसामानाधिकरण्यम् । तथा हि 'सर्पोऽयं रज्जुरेव' इत्युक्ते न हि रज्जुः कृष्णवर्णो विषधरो भवति, किन्तु रज्जुमात्रावशेषः, सर्पस्य तु बाध एवावगतो भवति; तथा सर्वाधिष्ठानभूतेन पुरुषेण ब्रह्मणा प्रपञ्चस्याभेदे प्रतिपादिते न हि पुरुषः प्रपञ्चरूपो भवत्यपि तु पुरुषमात्रावशेषः प्रपञ्चस्य तु बाध एवावगतो भवति । कुत एतादृशी व्यवस्था स्वीकृतेति चेत्; श्रुतित एव । 'तत्सत्यं स आत्मा' (छां. ६ । ९ । ४) 'सत्यस्य सत्यम्' (बृ. २ । १ । २०) 'अस्तीत्येवोपलब्धव्यः' (क. ३ । १०) 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥' (तै. २ । ६ । १) इत्यादिश्रुतिशतैः सच्चिदानन्दस्य ब्रह्मपुरुषस्यैवास्तित्वप्रतिपादनात् । प्रपञ्चस्य 'नेति नेति'

(बृ. २ । ३ । ६) 'नेह नानास्ति किञ्चन' (क. ४ । ११) 'अतोऽन्यदार्त्तम् ।'* (बृ. ३ । ४ । २) 'सलिल एको द्रष्टाऽद्वैतो भवति' (बृ. ४ । ३ । ३२) इत्यादिवाक्यशतैरभावबोधनात् । तथा च यदि श्रुतिप्रामाण्यं स्वीकरोषि, तर्ह्युक्तव्यवस्था त्वयाऽङ्गीकर्तव्या । अत एवापातप्रतिपन्न एव न तावच्छ्रुत्यर्थोऽङ्गीकर्तव्यः । 'कश्छन्दसां योगमावेद धीरः'× (ऋ. १० । ११५ । २) इति स्वयं श्रुत्या 'बिभेत्यल्पश्रुताद्वेदः' इति महाभारतस्मृत्या च वेदार्थस्यातिगहनत्वेन प्रतिपादनात्, श्रुतिसमन्वयमीमांसयैव तदर्थो निर्णीय ग्रहीतव्यः । तस्मादारम्भणाधिकरणन्यायेन पुरुषव्यतिरेकेण सर्वस्य जगतोऽभावात्, अपुरुषप्रत्ययः सर्वोऽविद्यामात्रः, रज्ज्वामिव सर्पप्रत्ययः, पुरुष एवैकः परमार्थसत्यः पूर्णाद्वैतो न तद्व्यतिरिक्तं किञ्चिदिति वेदानुशासनम् । तथा चाम्नायते—'यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥' (श्वे. ३ । ९) इति । उत=अपि चायं पुरुषः, अमृतत्वस्य=अमरणधर्मकस्य—स्वस्वरूपावस्थानलक्षणस्य मोक्षस्य ईशानः=ईश्वरोऽधिपतिः स्वामी । किञ्च यत्=जीवजातं, अन्नेन—अदनीयेन हेतुना कृत्वा, अतिरोहति=उत्पद्यते, अधिकां वृद्धिं गच्छति वा तस्य सर्वस्य ब्रह्मादिस्तम्बपर्यन्तस्य भूतग्रामस्य चेशानः=ईशनशीलो नियन्ता पुरुषोऽस्तीति शेषः । 'इतः प्रदानाद्धि देवा उपजीवन्ति ।' इति श्रुत्या ब्रह्मादिदेवस्याप्यन्नेनैव स्थित्य-

---

* आर्तशब्देन विनाशित्वोकार्यान्मिथ्यात्वलाभः । आर्तं=बाधेनपीडितमित्यर्थे मिथ्यात्व शाब्दमेव । 'अर्द हिंसायामि 'ति धातुनिष्पन्नत्वादार्तशब्दस्य बाधितार्थकत्वात् ।

× छन्दसां=वेदवाक्यानां योगं=तात्पर्यं धीरोऽपि को वेदेत्यर्थः । अल्पश्रुतात्=अल्पविद्यावात् पुरुषादित्यर्थः ।

••

वगमात्। यद्वा यत्=यस्मात्, अन्नेन=प्राणिनां भोग्येन फलेन निमित्तभूतेन, अतिरोहति=स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां कार्यभूतां जगदवस्थां प्राप्नोति, तस्मात् पुरुष एवेदं सर्वमित्युपपद्यते। ननु—एवं कार्यात्मना सम्भूतत्वात् पुरुषस्य परिणामित्वं स्यादित्याशङ्क्याह—अमृतत्वस्य=अमरणधर्मस्य-नित्यशुद्धबुद्धमुक्तानन्दानन्ताविकृतस्वभावस्य ईशानः=स्वामी, सदा तदमृतत्वं स्ववशेऽवतिष्ठते, न तस्मादविद्याविजृम्भितकार्यावस्थायामपि जातुचित् वियुज्यते। अत एव 'मृत्तिकेत्येव सत्यम्' (छां. ६।१।४) इत्यादि-श्रुतिभिः सर्वकारणस्यैवैकस्य सत्यत्वेनाविकृताखण्डैकरसत्वं, 'वाचारम्भणं विकारो नामधेयम्।' (छां. ६।१।४) इत्यादिश्रुतिभिः कार्यात्मकस्य विकारजातस्य वाचारम्भणत्वेनानृतत्वञ्च प्रतिपाद्यते। अतः तस्याः कार्यावस्थायाः कादाचित्कत्वेन काल्पनिकत्वेन चावस्तुत्वमवगम्यते। यद्यपि तत्त्वान्यत्वानिर्वचनीयेनाविद्याकल्पितेन नामरूपलक्षणेन द्वैतप्रपञ्चेन पुरुषः परिणामादि-सर्वव्यवहारास्पदत्वं प्रतिपद्यमान इव प्रतिभाति, तथाप्यय पारमार्थिकेन स्वेन रूपेण सदा सर्वव्यवहारातीतोऽपरिणत एवावतिष्ठते। नहि तिमिररोगोपहत-नयनेनानेक इव दृश्यमानश्चन्द्रमा अनेक एव भवति। अतः पुरुषस्य वस्तुतो न परिणामित्वशङ्कागन्धोऽपि प्रसज्यते इति भाव।

यद्वा अमृतत्वस्य=अपवर्गस्य मोक्षस्येशान=प्रभुः, तत्प्रदातृत्वात्। यः परमेश्वरो मोक्षस्यापि प्रभुस्तस्यान्यप्रभुत्वे किं वक्तव्यम्। ननु—अस्ति किञ्च स्वर्गादिलक्षणमप्यमृतत्वम्। तथा चात्र कस्यामृतत्वस्यायं प्रभुर्वर्ण्यते? किं स्वर्गाद्यमृतत्वस्याथवा तस्मादुत्कृष्टस्यापवर्गलक्षणस्यामृतत्वस्येत्येकतरनिश्चया-भावात्सत्यां विचिकित्सायामाह—यत्—अमृतत्व अन्नेन=अन्येन वर्णविकारादि

क्षणनिरुक्तत्वाभ्युपगमादत्र यकारस्य नकारप्रतिभासः । स्वर्गादिलक्षणं देवानाममृतत्वमधिकं, किं वेदमपवर्गलक्षणमित्यन्येन स्वर्गादिलक्षणेन सह विवक्षायां दति=अतिक्रम्येदममृतत्वं अपवर्गमोक्षलक्षणं रोहति—ऊर्ध्वं उत्कृष्टं भवति ।

अथवा—इदमिति दृश्यत्वात् भूतं भव्यमिति विभक्तत्वाच्च हेतोः भूतभाविवर्तमानात्मकस्यास्य निखिलस्यापि द्वैतप्रपञ्चस्य पुरुषाविद्याविलसिततया रज्जुसर्पवदविद्यात्मकत्वात् पुरुषविषया बाधे सति '**अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः**।' इति न्यायेन सर्वकल्पनाधिष्ठानपुरुषमात्रमेवेदमिति विज्ञेयम्। ... एव—उत=अपि, अमृतत्वस्य=प्रतिभासमात्रसंसारतत्कारणाविद्यानिवृत्तिलक्षणस्य मोक्षस्येशानः=अहं ब्रह्मास्मीति महावाक्यनिदिध्यासनजनिताखण्डब्रह्माकारवृत्त्यारूढः सत्यसुखसंविन्मात्रवपुरीश्वरोऽविद्यातत्कार्यसंसारभ्रमनिवर्तकत्वादमृतत्वस्येशान इत्युच्यते । यत्=दृश्यजातं अन्नं=अज्ञानं, अद्यते=बाध्यते सम्यग्ज्ञानेनेति व्युत्पत्त्याऽन्नमत्र दृश्यकारणमज्ञानमित्युच्यते । तेन=अज्ञानाख्येनान्नेन हेतुना कृत्वा, रोहति=जायते—उत्पद्यते, किंरूपेण रोहतीत्यत आह—अति=अतीत्य वस्तुस्वभावमतिलङ्घ्याच्छाद्य सच्चिदानन्दाद्वैतवस्तुविपरीतासज्जडदुःखद्वैतरूपेण । तस्यापि दृश्यप्रपञ्चस्य सत्तास्फुरणप्रदत्वेनाधिष्ठानत्वादीशानो नियन्ता परमेश्वर एव । यद्वा यत्=पुरुषतत्त्वं, तत् अज्ञानाख्येनाऽन्नेन, अति=स्वविपरीतवियदादिकार्यरूपेण रोहति=जायते स एवामृतत्वस्येशान इत्यन्वयः ॥

× × ×

(६५)

(सर्वं जगत्पुरुषस्य विस्तारः, पुरुषस्तु ततो महानन्तोऽपारः शुद्ध एव)

ॐ एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥

( शु य ३१ । ३ । ऋ. १० । ९० । ३ । अथर्व. १९ । ६ । ३ ।
तै. आ. ३ । १२ । १ )

अतीतानागतवर्तमानकालसम्बद्धं जगद्यावदस्ति, एतावान् सर्वोऽपि प्रपञ्च-अस्य पुरुषस्य=ब्रह्मण , महिमा=विभूतिविस्तारो विवर्तः—स्वकीयसामर्थ्यविशेषा द्विलसितः, न तु वास्तवं स्वरूपम् । वास्तवपुरुषस्तु अतः=अस्मात्, महिम्न जगज्जालात्, वाचारम्भणमात्रात्, ज्यायान्—अतिशयेनाधिको महत्तरः परमार्थ रूपोऽविकार , पूरुषः=पुरुषः, सर्वपूरणात्पुरिशयनाच्च । तदुभयं स्पष्टीक्रियते-तस्यास्य पुरुषस्य, पादः=चतुर्थांशः, सर्वाणि भूतानि कालत्रयवर्तीनि पृथिव्य दीनि स्थावरजङ्गमानि । अस्य परिशिष्टं स्वरूप त्रिपात्=त्रयः पादा अस्य तत् अमृतं=अविनाशि, दिवि=द्योतनवति—स्वप्रकाशे स्वात्मस्वरूपेऽवस्थितमित्यर्थः यद्यपि 'सत्य ज्ञानमनन्तं ब्रह्म' (तै. २ । १ । १ ) इत्यादिश्रुतिभिराम्नात स्यानन्तस्य परब्रह्मणो निरंशस्य इयत्ताया अशवत्तायाश्चाभावात् पादचतुष्ट निरूपयितुमशक्यं, तथापि 'तदिदं जगत् कृत्स्ने ब्रह्मणि तदेकदेशे वा वर्तते इति निष्प्रदेशेऽपि प्रदेशभागमारोप्य पृच्छत शिष्यस्याभिप्रायानुसारिण्य भाषया जगदिदं शुद्धब्रह्मरूपापेक्षयाऽत्यल्पं जगदपेक्षया तद्ब्रह्मात्यधिकं निरव धिकमिति विवक्षया, यथा कार्षापणश्चतुर्धा विभज्य एकस्मात्पादात् पादत्रयीकृतं महान् एव पुरुषार्थरूपः पुरुषः एकपादत्वेन कल्पितात् प्रपञ्चात् पादत्रयोपप दितो महानिति विवक्षया वा श्रुतेः पादत्वोपन्यास इति भाव ॥

× × ×

मत्येतव्यम् । 'न तु तद्द्वितीयमस्ति' (बृ. ४ । ३ । ३०-३३) 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।' (गौ. का. १ । १७) 'नेह नानास्ति किञ्चन' (बृ. ४ । ४ । १९) 'एकधैवानुद्रष्टव्यम् ।' (बृ. ४ । ४ । २०) इत्यादिश्रुतिभिः 'सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वगं शिवम् । तदेवेदमिदं विश्वं तस्मादन्यन्न विद्यते ॥ तत्स्वरूपातिरेकेण न किञ्चिदिह विद्यते ॥' 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ।' (गी. १० । ३९) इत्यादिस्मृतिभिश्च तदेव विनिर्णीतमिति ॥

× × ×

## ( ६७ )

( परमेश्वर एव मायया पिण्डब्रह्माण्डे सृष्ट्वा उच्चावचजीवभावेन खेलति )

'विष्वङ् व्यक्रामत्' इति यदुक्तं तदेव प्रपञ्च्यते—

ॐ ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥

( शु. य. ३१ । ५ । ऋ. १० । ९० । ५ । अथर्व. १९ । ६ । ९ )
तै. आ. ३ । १२ । ५ )

ततः=तस्मात् आदिपुरुषात्—परमेश्वरात् विराट्=ब्रह्माण्डदेहः, अजायत=जातः । विविधं राजन्ते वस्तून्यत्रेति विराट् । विराजः—अधि=विराड्देहस्योपरि, तमेव देहमधिकरणं कृत्वा, पुरुषः=तद्देहाभिमानी, एक एव पुमान् अजायत=योऽयं सर्ववेदान्तवेद्यः परमात्मा, स एव स्वमायया विराड्देहं ब्रह्माण्डरूपं

सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः । एतच्चाथर्वणनृसिंहोत्तरतापनीये स्पष्टमुक्तम् ।—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव ।' ( नृ. ता. २ । ९ ) इति । किञ्च स जातो विराट्पुरुषः, अत्यरिच्यत=अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो=भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः=शरीराणीत्यर्थः ।

केचन स पुरुषो जातमात्र एव भूमिं=भूम्यादीन् लोकान् पश्चात् पुरः=पुरस्ताच्च व्याप्य अत्यरिच्यत=अतिक्रान्तवान् इति व्याचक्षते । मानवे च धर्मशास्त्रे विराज उत्पत्तिरेवंप्रकारा प्रतिपाद्यते तद्यथा—'द्विधा कृत्वाऽऽत्मनो देहं अर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां च विराजमसृजत्प्रभुः ॥' ( मनु. १ । ३२ ) इति । तदेतत् परिगीयते—अवधूतशिवेन्द्रस्वामिना—'खेलति पिण्डाण्डे भगवान् खेलति पिण्डाण्डे । हंसः सोऽहं हंसः सोऽहं हंसः सोऽहं सोऽहमिति । परमात्माऽहं परिपूर्णोऽहं ब्रह्मैवाहमहं ब्रह्मेति । बुद्धिमनश्चित्ताहंकारे भूजलतेजोगगनसमीरे ।' इत्यादिकमिति ॥

× × ×

## ( ६८ )

( परमेश्वरादेव सृष्ट्यादौ अनादिनिधनस्यापौरुषेयस्य वेदचतुष्टयस्याविर्भावप्रतिपादनम् ).

। अपौरुषेयाणां नित्यानां ऋगादिवेदानां सृष्ट्यादौ परमेश्वरादेवाभिव्यक्तिमात्रं न तु नूतनसर्जनं प्रतिपादयति—

**ॐ तस्मात् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।**
**छन्दाᳺसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥**

(शु. य. ३१ । ७ । ऋ. १० । ९० । ९ । अथर्व. १९ । ६ । १३ ।
तै. आ. ३ । १२ । ९)

तस्मात्=लोकवेदप्रसिद्धात्—अशेषविश्वस्रष्टुः, यज्ञात्=विष्णोः व्यापकात् 'यज्ञो वै विष्णुः' (श. ब्रा. १ । १ । १ । १३) इति श्रुतेः । कथं भूतात्तस्मात्? इत्याह—सर्वहुतः=सर्वं विश्वं हूयते=लीनं क्रियते यस्मिन् सोऽसौ सर्वहुत् तस्मात्—विश्वविलयाधिष्ठानादित्यर्थः । यद्वा सर्वस्मिन् कार्यकरणसंघाते तदधिष्ठानत्वेन जुहोति=क्षिपत्यात्मानं सोऽसौ सर्वहुत्=सर्वात्मा भगवान् तस्मादित्यर्थः । ऋचः=पादबद्धा मन्त्राः, सामानि=गीत्यात्मकानि, जज्ञिरे=प्रादुर्बभूवुः, 'जनी प्रादुर्भावे' स्मरणात् । परमेश्वरात् ऋग्वेदः सामवेदश्च प्रादुर्भूत इत्यर्थः । तस्मात् यज्ञात् पुरुषात् छन्दांसि=गायत्र्यादीनि जज्ञिरे । यद्वा छन्दांसि=छन्दनया परिशिष्टमथर्ववेदं जज्ञे, यत ऋगादीनां मन्त्राणामशेषाणां गायत्र्यादिछन्दोभिरन्वितत्वात्, तद्ग्रहणेन तेषामपि ग्रहणात्पृथक् तत्कथनं चतुर्थं परिशिष्टमथर्ववेदं गमयतीति केचित् । गायत्र्यादिछन्दसां किमपि वैशिष्ट्यं ज्ञापयितुं तत्पृथक्कथनं, अथर्वणः ऋगादिसंयुक्तत्वात् तस्यार्थत्रयगमनपेक्षितं, अत एव वेदानां—**'त्रयी वै विद्या ऋचो यजूंषि सामानि'** (श. ब्रा. ४ । ६ । ७ । १) । **'स एतां त्रयीं विद्यामभ्यतपत्'** (छा. १ । १७ । १०) इत्यादिश्रुतिभ्यः इति त्रयीविद्यात्वप्रसिद्धिरित्यपरे । तस्मात्

यजुः=प्रश्लिष्टपाठात्मको मन्त्रः यजुर्वेदः, अजायत=प्रादुरभवत् । 'सर्वहुतः' इति ऋगादीनामपि विशेषणं भवितुमर्हति, यतः ऋगादयो वेदाः सर्वैरधिकारिभिरभ्युदयकल्याणकामैः होतुं—आदातुं ग्रहीतुं योग्याः सन्तीति सर्वहुत इत्यर्थः इति केचित् । तस्माद्दित्यस्य पौनःपुन्येनोपादानादवधार्यते—परमेश्वरादेव वेदानां प्रादुर्भावो नान्यस्मादिति ।

ऋगादीनां मन्त्राणां लक्षणानि जैमिनिना पूर्वमीमांसाशास्त्रे सूत्रितानि । तथा हि—'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (२।१।३५) पादेन चार्थेन चोपेता वृत्तबद्धाः पद्यमन्त्राः ऋच इत्यर्थः। 'गीतिषु सामाख्या'(२।१।३६) गीतिरूपा मन्त्राः सामानीत्यर्थः । 'शेषे यजुःशब्दः' (२।१।३७) वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता अनियताक्षरपादावसाना गद्यमन्त्रा यजूंषि इत्यर्थः । तेषां व्युत्पत्तयः 'ऋच्यते—स्तूयते—तद्गुणमहिम्ना प्रतिपाद्यते परमात्मदेवः, देवा वा अभ्युदयकल्याणसाधनानि वा ऋच्यन्तेऽनयेति ऋक् इति। स्यति=निरस्यति गानेन पापानीति साम इति । इज्यते=यजनं क्रियतेऽनेनेति यजुरिति ।

अनया श्रुत्या वेदानां 'जज्ञिरे' पदबोध्याप्रयत्नोत्पत्तिलक्षणप्रादुर्भावकथनेन प्रमाणान्तरतोऽर्थं बुद्ध्वा रचितैः कालिदासादिवाक्यैर्वैलक्षण्यादपौरुषेयत्वं सूच्यते । ननु—भो ! वेदानामाविर्भावमात्रेण कथमपौरुषेयत्वं प्रतिपाद्यते ? अन्यथाऽनुमातुं शक्यत्वात्, तथा हि—वेदो विशिष्टबुद्ध—आप्तपुरुषेण प्रणीतो भवितुमर्हति महर्थविषयकवाक्यप्रमाणत्वात्, यदेवं तत्तथा, यथा व्याकरणादिकम् । न च वेदोऽपौरुषेयोऽस्मर्यमाणकर्तृकत्वात् इति सत्प्रतिपक्षो हेतुरिति वाच्यम्' जीर्णकूपारामादिषु प्रकीर्णश्लोकेषु च हेतोरनैकान्तिकत्वात् । ननु—तत्र कार्य-

त्वात्कर्तृत्वमनुमीयते इति चेत्तर्हि तत्प्रकृतेऽपि न दण्डवारितम्। ननु—ते वेदस्य पौरुषेयत्वनिश्चये किं प्रमाणम्? यतस्तत्प्रतिपाद्यस्य धर्मादेरतीन्द्रियत्वात् न प्रत्यक्षं प्रक्रमते, तदभावात् न प्रमाणान्तरमपि, इतिचेन्नैवम्; यतः परमेश्वरोऽस्मदाद्यतीन्द्रियमप्यदृष्टादिकमखिलमिदं स्वकीयेन नित्यनिरतिशयाप्रतिहतविज्ञानेन करतलन्यस्तामलकवत्, अपरोक्षमीक्षमाणो वेदं—विरचयितुमीष्टे, तस्मात्पौरुषेय एव वेदः। ननु—एवं सति वेदादेव तथाविधविशिष्टपुरुषसिद्धौ सत्या वेदस्य तत्प्रणीतत्वसिद्धिः, वेदप्रणयनादिलिङ्गेन च तथाविधपुरुषसिद्धिरित्यन्योऽन्याश्रय इति चेन्नैवम्; अनुमानात् श्रुतिसमूहाच्च तथाविधविशिष्टपुरुषस्य समधिगतत्वेन परस्पराश्रयस्याभावात्।

अपि च लौकिके शब्दे आप्तप्रणीतत्वेनैव प्रामाण्यं निश्चीयते, वेदस्यापौरुषेयत्वेऽर्थादाप्तप्रणीतत्वेऽभ्युपगते तदप्रामाण्यमपरिहार्यं स्यादन्यथा '**भूमाङ्गुल्यग्रे करिशतं विहरती**' त्याद्विवाक्यानामपि प्रामाण्यापातात्। न च तेषामनाप्तप्रणीतत्वादप्रामाण्यं नाप्तप्रणीतत्वादिति वाच्यम्; यतः शब्दात् वक्तृज्ञानस्य प्रतीतत्वेन अर्थज्ञानस्य व्यवहितत्वात्, अन्यथा शब्दादर्थस्य निश्चये सति सर्वेषामाप्तानाप्तप्रणीतानां शब्दानां प्रामाण्यं दुर्निवारं स्यात्। न चैवमिष्यते दृश्यते वा। अतः शब्दसमुदायस्याप्तप्रणीतत्वेनैव प्रामाण्यमभ्युपेयम्। तथा च प्रमाणभूतवाक्यत्वात्, महाभारतादिवत्, वेदस्याप्तनिर्मितत्वलक्षणं पौरुषेयत्वमेव मन्तव्यम्।

अत्रोच्यते—यदुक्तं—वेदो विशिष्टवक्तृपुरुषप्रणीतः, बह्वर्थविषयकवाक्यप्रमाणत्वादिति, तत्र किमिदं पुरुषप्रणीतत्वमभिप्रेयते? किमस्मदादिभिरिव पूर्वसिद्धस्य वेदस्य शिष्टपुरुषेणाप्युच्चार्यमाणत्वम्? आहोस्वित् प्रमाणान्तरेणार्थ-

मुपलभ्य तत्र वाक्यविरचनम्? आद्ये—इष्टापत्त्या सिद्धसाधनम्। द्वितीये—केन प्रमाणेन वेदार्थ उपलभ्यते? इति वक्तव्यम्? किं प्रत्यक्षेण? उत अनुमानादिना? नाद्यः धर्माधर्मपरब्रह्मादिलक्षणस्य वेदार्थस्य इन्द्रियलक्षणप्रत्यक्षप्रमाणतोऽनुपलभ्यत्वात्, न द्वितीयः—अस्मदादीनामपि तथैव्यमाणत्वात्, महेशानस्य च धर्माधर्मादिसाक्षात्त्वाभावापातात्। अथेदं मतम्—अस्मदाद्यतीन्द्रियमप्यदृष्टादिकमखिलमिदं धर्मज्ञानवैराग्याद्यतिशयवतां सिद्धानां तत्तदिन्द्रियगोचरं भवतीति, तर्हि तु सिद्धमेवानादित्वेन वेदस्यापौरुषेयत्वम्। यतः पूर्वसिद्धस्य वेदस्य साङ्गाध्ययनतः तदर्थज्ञानानुष्ठानतश्च धर्माद्यतिशयसम्भवात्। स्यादेतत्—योगिनां सिद्धानां धर्माद्यतिशयः पूर्वसिद्धवेदाध्ययनाद्यपेक्षोऽस्तु नाम, परन्तु नित्यनिरतिशयाप्रतिहतविज्ञानवतः परमेश्वरस्य तु धर्माद्यतिशयः स्वाभाविक एवाभ्युपगन्तव्यः। इति चेत् भवतु नाम, तथापि विधूतनिखिलकार्यकरणपरिकरस्य परमेश्वरस्य वेदप्रणयनं कथं स्यात्? इच्छाविशेषात् स्यात्? देहादिसम्बन्धं विना तदपि कथं स्यात्? अथ मतं—नित्यसिद्धैव परमेश्वरस्येच्छा न देहपरिग्रहाद्यपेक्षते इति, तदप्यपेशलम्, विकल्पासहत्वात्, किं तस्य स्वार्थविषयेच्छा वा? परानुग्रहार्थविषया वा? न तावदाद्या, आप्तकामत्वभङ्गापातात्, न द्वितीया—प्राणिनामुपभोगस्य पुण्यापुण्यनिर्मितत्वात्, ईश्वरस्य तु सन्निधानमात्रेण नेच्छाविद्वारेणानुग्राहकत्वात्, अपि चेच्छादिमत्वे तस्यास्मदादिवत् संसारित्वप्रसक्तेर्न तत्त्वमभ्युपेयम्। तस्मात्परमेश्वरस्य नित्यविज्ञानवत्त्वेऽपि कार्यकरणवैधुर्येण वेदप्रणयनासम्भवात्। अनीश्वराणान्तु कार्यकरणवत्त्वेऽपि धर्मादिज्ञानस्य वेदपूर्वकत्वात् सुतरां वेदप्रणयनासम्भवान्न पुरुषाधीनविरचनो वेद इति सिद्धम्।

किञ्च वेदः सकर्तृको न भवितुमर्हति असम्भाव्यमानकर्तृत्वात्, अविच्छि-

म्व्यवहारत्वे सति, अस्मर्यमाणकर्तृकत्वात्, आत्माकाशादिवत् । न च जीर्णकूपारामादिषु व्यभिचारः, तेषां सम्भाव्यमानकर्तृकत्वात् विच्छिन्नव्यवहारत्वाच्च । न च वेदस्य विच्छिन्नव्यवहारत्वमिति शङ्क्यम्; जीवानां पुण्यापुण्यतत्फलसाधनप्रकाशकत्वेनानादिसंसारचक्रप्रवर्तकत्वात् । ननु—वेदस्यापि महाप्रलये अस्त्येव व्यवहारविच्छेदः इति चेत्; तत्रेदं विवेक्तव्यम्—कोऽयं व्यवहारविच्छेदोऽभिप्रेतो भवत इति । किं अध्ययनाभावः, किं वा स्वरूपनाशः । नाद्यः—तथाविधव्यवहारविच्छेदस्याधुनातनत्वेऽपि सम्भवात् न नित्यत्वक्षतिः । न द्वितीयः—तस्य प्रलयेऽपि स्वरूपेणानादितया नाशाभावात् ।

अपि च विमतं सृष्टिकालीनं वेदाध्ययनं पूर्वपूर्ववेदाध्ययनानुस्मृतिनिबन्धनं भवितुमर्हति वेदाध्ययनत्वात्, अधुनातनवेदाध्ययनवत् । इति ।

यथा कश्चिदतिनिपुण उपाध्यायः सुप्तोत्थितः, अनायासेन वे [illegible] यः पूर्वं यथाऽध्यापितवान् तथैव पुनरप्यध्यापयति, प [illegible] र्योस्तु विशेषः, लौकिकाध्यापकस्य वेदमात्रस्मरणाध्या- च [illegible] परमेश्वरस्य तु पूर्वकल्पेऽपि स्वयमेव उपाध्यायान्त- र [illegible] था च विचित्रगुणमायासहायोऽनावृतस्वप्रकाशचि- ः [illegible] ः प्रलये स्वस्मिन्नेव संस्कारावशेषान् वेदान् पूर्वया- र [illegible] क्रमसजातीयक्रमवतो यथाऽवस्थितानेव स्मृत्वा तदर्थांश्च युगपज्ज्ञात्वैव चतुर्मुखमन्वादिभ्योऽध्यापयामासेति लौकिकोपाध्यायवदेव परमेश्वरस्यापि वेदसम्प्रदायप्रवर्तकत्वमास्थीयते । न च भारताद्यध्ययनस्यापि पूर्वपूर्वाध्ययनानुस्मरणनिबन्धनत्वेनापौरुषेयत्वापातः इति शङ्क्यम् । तस्य तत्तत्कर्तृस्मरणेन बाधात्, न चेहापि 'इदं सर्वम-

सृजत यदिदं किञ्च ऋचो यजूंषि सामानि' (बृ. १।२।५) इत्यादिश्रुत्या कर्तृस्मरणेन बाधः। तस्याः अभिव्यक्तिमात्रपरतया संप्रदायप्रवर्तकत्वपरतयापि चोपपत्तेर्नाभिनवसर्जनपरत्वमेष्टव्यम्। एतेन 'अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' (बृ. २।४।१०) इत्यादिश्रुतिवचांस्यपि व्याख्यातानि।

ननु—'अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम्। आदिकर्ता कविः साक्षात् शूलपाणिरिति श्रुतिः॥' इति वचनेन सृष्ट्यारम्भे वर्तमानकविवत् तस्यादिकवेः परमेश्वरस्य विवक्षापूर्वकं वेदकर्तृत्वमवगम्यते इति चेन्नैवम् पूर्वस्मिन् कल्पे वेदस्य यादृशानुपूर्वी वर्णसमुदायो यच्च तात्पर्यं, तदनुसन्धायास्मिन्नपि कल्पे तथैव करोतीत्युपगमात् प्रमाणान्तरेणार्थमुपलभ्य तदनुसारेण वेदानां विरचितत्वलक्षणकर्तृत्वस्य केनापि वचनेनाप्रतिपादितत्वात् आदिकर्तृत्वकविवनिरूपणेन साकं अपौरुषेयत्वसिद्धान्तस्य विरोधाभावात्। इदमेव हि अपौरुषेयत्वं, यत् प्रमाणान्तरेणार्थमुपलभ्य तदनुसारेण रचितत्वाभावः सजातीयोच्चारणानपेक्षोच्चारणविषयत्वाभावश्च। न च 'नालिकेरसलिलपानेन स्वर्गो भवति' इत्यादिवाक्यस्यापि प्रमाणान्तरेणोपलब्धार्थज्ञानं विना विरचितत्वात्, अपौरुषेयत्वं स्यादिति वाच्यम्; तस्य प्रमत्तपुरुषविशेषनिर्मितत्वस्य प्रत्यक्षेण गृह्यमाणत्वात्।

यत्पुनरुक्तम्—वेद आप्तप्रणीतः प्रमाणभूतवाक्यत्वात्, व्याकरणादिवत्। तत्र व्याकरणादेः प्रमाणान्तरयोग्यार्थविषयत्वादाप्तप्रणीतत्वं न तु वाक्यप्रमाणत्वात्, तथा च प्रमाणान्तरयोग्यार्थविषयत्वमुपाधिः। यत्तूक्तम्—आप्ताप्रणयने वेदस्याप्रामाण्यप्रसङ्ग इति, तदपि तुच्छम्; शब्दस्य स्वयमेवार्थे प्र-

माणत्वात् नाप्तप्रणीतत्वं प्रामाण्यप्रयोजकम्; प्रतिबन्धनिवृत्यर्थं तन्निश्चयोऽपे-
क्षितः। अङ्गुल्यग्रादिवाक्येषु चानाप्तप्रणीतत्वेन प्रामाण्यप्रतिबन्धः। तत्र यदुक्तं—
वक्तृज्ञानव्यवधानेनैव शब्दोऽर्थमवगमयतीति तदपि विवेक्तव्यम्। किं वक्तृज्ञान-
मावेदयति? किं वा अर्थविशिष्टं? आद्ये वक्तृज्ञानव्यवधानेन शब्दादर्थावगमा-
भावात्। द्वितीये—ज्ञानविशेषणीभूतार्थप्रतीतिकारणं वक्तव्यम्, न तावदत्यक्षादि-
प्रमाणं कारणं तत्र शब्दातिरिक्तप्रमाणासम्भवात्, अनभ्युपगमाच्च। वक्तृज्ञान-
व्यवधानकल्पना निष्प्रयोजना। तस्माल्लोकेऽपि स्वसामर्थ्यादेव शब्दार्थप्रति-
पत्तिरिति सिद्धम्।

अस्तु तर्हि वेदेऽपि प्रतिबन्धनिवृत्यर्थं आप्तप्रणीतत्वनिश्चय इति चेन्नैवम्;
पुरुषसम्बन्धाभावादेवाप्रामाण्यशङ्कालक्षणस्य प्रतिबन्धस्यासम्भवात्। ननु भो!
भगवान् बादरायणः शारीरकमीमांसायां '**शास्त्रयोनित्वात्**' (ब्र. सू. १।
१।३) इति सूत्रेण परमेश्वरस्य वेदकारणत्वं प्रतिपादयन् तस्य पौरुषेयत्वं
सूचयति, इति चेन्नैवम्; '**वाचा विरूप नित्यया**' (ऋ. ८।७५।६)
'**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**' (म. भा. शा. प.
२३२।२४) इति श्रुतिस्मृतिभ्यां नित्यत्वावगमात्। स्वयंबादरायणोऽपि
देवताधिकरणे सूत्रयामास—'**अत एव च नित्यत्वम्**' (ब्र. सू. १।३।
२९) इति। तर्हि परस्परविरोध इति चेन्न, '**नित्यत्वस्य व्यावहारिक-
त्वात्, सृष्टेरूर्ध्वं संहारात्पूर्वो व्यवहारकालः, तस्मिन्नुत्पत्तिविनाशा-
भावात्,** नित्यत्वव्यपदेशः कालाकाशादेर्व्यावहारिकनित्यत्ववत्।
आदिसृष्टौ तु कालाकाशादिवत् वेदोत्पत्तिरभ्युपगम्यते, अतो विष-
यभेदान्न परस्परविरोधः। तदुत्पत्तिरपि संस्कारशेषस्य यथाऽवस्थि-

**तस्य पूर्वसिद्धस्य तस्याविर्भावमात्रं पूर्वोक्तं न विस्मर्तव्यम्। न** त्वभिनवविरचनम्। यदि वेदकारणत्वकथनेन पुरुषाधीनोत्पत्तिकत्वलक्षणं पौरुषेयत्वं सूच्यते चेत्तदा त्वियापत्त्या सिद्धसाधनम्। अन्यादृशं चेत्तर्हि तत्-र्वत्र समाहितं तत्रानुसन्धेयम्। **तस्मादपौरुषेयो नित्यो नित्यार्थसम्बन्धोऽपि वेदः 'एकमेवाद्वितीयम्' (छां. ६।२।१) इति श्रुतिप्रामाण्यात् ब्रह्मचैतन्यविवर्तो ब्रह्मपरतन्त्रश्चाभ्युपेयः।**

ननु—वेदस्य ब्रह्मविवर्तत्वे कथमनादित्वम्? कथं वा रज्जुसर्पवत् मिथ्याभूतस्य तस्य प्रामाण्यम्? इति चेन्नैवम्, वेदस्वरूपस्य विचार्यमाणत्वात्। तथाहि—कोऽयं वेदः? न तावद्वर्णराशिमात्रं वेदः, अक्रमव्युत्क्रमोच्चरितेषु वर्णेषु तेष्वर्थप्रतिपत्त्यदर्शनात्। अतो नियतक्रमविशिष्टो वर्णराशिर्वेद इत्यभ्युपेयम्। तत्रापीदं विचारणीयम्। वर्णानां नियतक्रमः किं निमित्तकः? न तावत्तेषु देशनिमित्तो वा कालनिमित्तो वा क्रमः सम्भवति, तेषां सर्वगतत्वात् नित्यत्वाच्च। ननु—मास्तु आगन्तुकः क्रमः स्वाभाविक एव किं नेष्यते? इति तन्न, 'राजा जारा' इत्याद्यनियतपूर्वापरत्वेन दर्शनात्। अतः परिशेषात्—अनित्योच्चारणप्रतिपत्त्यन्यतरगतक्रमोपरक्ता वर्णा एव वेद इति वाच्यम्, तथा चान्यधर्मस्य क्रमस्यान्यत्र भानं जपाकुसुमलौहित्यस्य स्फटिके भानमिव मिथ्याभूतमेव मन्तव्यम्। सति चैवं मिथ्याभूतनियतक्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां वर्णानां तदुपरक्तमिथ्यारूपेणैवार्थप्रतिपादकत्वमनिच्छताऽप्यन्धमतिनाऽऽस्थेयम्। सा चेयं क्रमपरम्परा वर्णानां पूर्वपूर्वसमानैवोत्तरोत्तरा प्रवर्तते इति प्रवाहरूपेण वेदस्यानादित्वमुच्यते महाप्रलये तु रूपप्रपञ्चस्येव नामप्रपञ्चस्य शक्तिमात्रावशेषेऽपि पूर्वस्मिन् कल्पे

यादृशक्रमविशिष्टानां वेदशब्दोपलक्षितवर्णानां यादृगर्थाभिधानसामर्थ्यं तादृशक्रमो-परक्तानां तादृगर्थाभिधानसामर्थ्योपेतानामेव वर्णानामुत्तरकल्पेऽपि प्रादुर्भावोऽभ्यु-पेयते, अतो ब्रह्मचैतन्यविवर्तत्वेऽपि नानादित्वविरोधः। नाप्यर्थप्रतिपादकत्वक्षतिः, न वा प्रामाण्यक्षतिः। अज्ञातार्थज्ञापकत्वेन तस्य स्वत एव प्रामाण्यात्।

ननु—पूर्वकल्पीयक्रमाद्यपेक्षायत्वेन तस्य परमेश्वरस्य स्वातन्त्र्यं कथं सिद्ध्येत्? इति चेन्नैवम्; उच्चावचजीवसृष्टौ धर्माद्यपेक्षयेव न ह्येतावन्मात्रेणापि तस्य स्वातन्त्र्यं विहन्यते। न हि यादृशः कटः पूर्वं रचितः तमाकारमनुसन्धाय क्रय्यादिव्यवहारार्थं तादृशमेव पुनः कटं सृजतः स्वातन्त्र्यविघातो भवति। सति चैवं 'धाता यथा पूर्वमकल्पयत्' (ऋ. १०।१९०।३) इत्यादि-श्रुतिवचनमनुसृतं भवति। तस्मात् वेदानां ब्रह्मविवर्तानां तत्परतन्त्रा-णामप्यनादित्वेनापौरुषेयत्वं, ब्रह्माभिन्नत्वात् 'वेदा अवेदाः' (बृ. ४।३।२२) इतिश्रुतिप्रामाण्याच्च मिथ्यात्वेऽपि तत्त्वावेदक-प्रामाण्यञ्च सिद्धमिति सर्वमनाविलम्।

× × ×

## ( ६९ )

### ( पुरुषमुखादिरूपेण ब्राह्मणादिवर्णनम् )

तस्य पुरुषस्य मुखं किमासीत्? किं बाहू ऊरू चास्ताम्? पादावपि किमास्ताम्? इति प्रश्नानामुत्तराण्याह—

**ॐ ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥**

(शु. य. ३१।११। ऋ. १०।९०।१२। अथर्व. १९।६।६। तै. आ. ३।१२।५)

अस्य—पुरुषस्य प्रजापतेर्मुखं ब्राह्मण आसीत्, राजन्यः=क्षत्रियः, बाहू-कृतः—बाहूरूप आसीत्। अस्य—पुरुषस्य यो ऊरूः तद्रूपो वैश्य आसीत्, पद्भ्यां शूद्रोऽजायत इति स्पष्टमेव। अत्र प्रजापतेः पुरुषस्य मुखादिरूपेण प्रतिपाद्यमानाः ब्राह्मणादयः के सन्ति? तत्र केचन मन्यन्ते—योऽयं ब्राह्मणत्व-जातिविशिष्टः पुरुषः सोऽयमस्य प्रजापतेर्मुखमासीत्—मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः=क्षत्रियजातिः स बाहुत्वेन निष्पादितः—बाहुभ्यामुत्पादित इत्यर्थः। तत्=तदानीं यौ प्रजापतेरूरू, तद्रूपो वैश्यः सम्पन्नः—ऊरूभ्यामु-त्पादित इत्यर्थः। तथा पद्भ्यां शूद्र उत्पन्नः। इयं च मुखादिभ्यो ब्राह्मणा-दीनामुत्पत्तिस्तैत्तिरीयसंहितायाः सप्तमकाण्डे—'**स मुखतस्त्रिवृतं निरमिमीत**' इत्यादौ स्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि—उत्पत्तिपरतयैव योजनीये। इति।

अन्ये तु ब्राह्मणादिशब्दा गुणशब्दा न जातिशब्दा इत्यत्र व्याकरण-महाभाष्यकाराणां पतञ्जलिमुनीनां '**सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति।**' (अध्या. २। २। ६) इति वचनं प्रमाणतयोपन्यस्यन्त एवं व्याचक्षते—अस्य परमेश्वरस्य ब्राह्मणः=ब्राह्मण-त्वप्रयोजकशमदमादिगुणविशिष्टो ब्रह्मभवितुकामः सत्त्वगुणबहुलो वेदादिविद्या-सम्पन्नः परमेश्वरोपासको मुखमासीत्=मुखस्थानीयो मुख्यः—सर्वोत्तमः आसीत्। यथा मुखं ज्ञानप्रधानमितराङ्गापेक्षया श्रेष्ठं, तथाऽयमपि ज्ञानप्रधानतयाऽशमादि-गुणैः श्रेष्ठश्चाथ मुखव्यपदेशः। अत एव '**अथ य एतदक्षरं गार्गि! विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः।**' (बृ. ३। ८। १०) इत्यादिश्रुतिषु ज्ञाननिबन्धनो ब्राह्मणत्वव्यपदेशः संगच्छते। तथा राजन्यः=क्षत्रियः—शौर्यादिगुणविशिष्टः सत्त्वोपसर्जनरजोबहुलः बाहुकृतः बाहुस्थानाप-न्नत्वेन सम्पादितः, यथा बाहुर्बलप्रधानं तथाऽयमपि। तथा अस्य—पुरुषस्य

यत्=यौ ऊरू, तत्=तद्रूपः तत्स्थानापन्नः, वैश्यः=कृष्यादिकर्मविशिष्टो धन-धान्यसञ्चयप्रधानः तमउपसर्जनरजोबहुलः ऊरुत्वेन सम्पादितः । यो यत्र तत्र पुनः पुनर्विशति-प्रविशति कार्यार्थमसौ विट् तदपत्यं वैश्य इति तद्व्युत्पत्तेः । तथाऽस्य पद्भ्यां=यौ पादौ विभक्तिव्यत्ययः-प्रश्नोपक्रमानुरोधात्-पञ्चमी प्रथमार्थां, पादस्थानीयः शूद्रः=परिचर्याशिल्पकौशल्यनिरभिमानत्वादिगुणविशिष्टो रजउपसर्जनतमोबहुलः, अजायत=अकल्पयत । एवमेते ब्राह्मणादय एव मुख-प्रभृतय अवयवा अस्य पुरुषस्य विवक्ष्यन्ते इति कल्प्यते । इति ।

केचिदेवं मन्त्राक्षराणि विवेचयन्ति-मुखादिशब्दा लाक्षणिकाः मुखादि-सम्भवान् गुणान् लक्षयन्ति । तत्र दृश्यमाना प्रथमा विभक्तिः पञ्चम्यर्थां, तथाहि-अस्य पुरुषस्य मुखः, मुखे भवाः मुख्या गुणाः सत्यवदनोपदेशादीनि कर्माणि च तेभ्य इत्यर्थः । ब्राह्मणः आसीत्-उत्पन्नो भवति । तथा बाहू=बाह्वो भवा बलवीर्यादयो गुणाः, तेभ्यः राजन्यः क्षत्रियो बाहुभवगुणयुक्त उत्पन्न आसीत् । ऊरुः=मध्यभागः, तत्र भवाः कृषिव्यापारादयो मध्यमगुणाः तेभ्यो वैश्यः तद्गुण-संयुक्त उत्पन्न आसीत् । पद्भ्यां=पादशब्दस्तद्वत् नीचगुणान् जडबुद्धित्वमूर्ख-त्वादि-अधमगुणान् लक्षयति, तेभ्योऽधमगुणेभ्यः शूद्रः=सेवादि-अधमगुण-विशिष्टः पराधीनः, अजायत=सम्भूत इत्यर्थः ।

× × ×

## ( ७० )

## ( विश्वरूपस्य विराजः पुरुषस्य मन आदिरूपेण चन्द्राद्यवयवानां निरूपणम् )

यथा प्रजापतेः परमेश्वरात् ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्चोत्पन्नास्त-

या चन्द्रादयो देवा अपि तस्मादेव उत्पन्ना इत्याह,—यद्वा विश्वरूपस्य समष्टि-ब्रह्माण्डदेहस्य विराजः पुरुषस्य ध्यानार्थमन्यानवयवानाह—

ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥
ॐ नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाꣳ अकल्पयन् ॥

( शु. य. ३१ । १२-१३ । ऋ. १० । ९० । १३-१४ । )
(अथर्व. १९ । ६ । ७-८ । तै. आ. ३ । १२ । ६-७ )

तस्य पुरुषस्य मनसः सकाशात् चन्द्रमा—जातः—अजायत—उत्पन्नोऽभू-दिति कल्प्यते, वस्तुतः तन्मन एव चन्द्रमा । चक्षोः—चक्षुषः सकाशात् सूर्यो-ऽजायतेति कल्प्यते, वस्तुतश्चक्षुरेव सूर्यः । यः प्राणो व्यष्टिशरीरेषु वर्तमानः, वायुश्च समष्टिब्रह्माण्डे वर्तमानः, श्रोत्रात्=कर्णात्—अजायतेति कल्प्यते, वस्तुतः श्रोत्रमेव प्राणाभिन्नो वायुः । योऽयमग्निः स मुखादजायतेति कल्प्यते, वस्तुतो मुखमेवाग्निः । यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन्, तथा नाभ्यादय अन्तरिक्षादिलोकानित्याह—नाभ्या इति । पुरुषस्यास्य नाभ्याः=नाभेः सका-शात्, अन्तरिक्षं=नभः—आसीदिति कल्प्यते, वस्तुतः पुरुषस्य या नाभिः तदे-वान्तरिक्षम् । शीर्ष्णः=शिरसः, द्यौः=स्वर्गः समवर्ततेति कल्प्यते, वस्तुतो या द्यौः तदस्य शिरः । पद्भ्यां=पादाभ्यां भूमिरुत्पन्नेति कल्प्यते, वस्तुतः पादौ भूमिरेव । श्रोत्राद्दिश उत्पन्ना इति कल्प्यते, वस्तुतः तस्य श्रोत्रमेव दिशः सर्वाः पूर्वाद्याः । तथा=नेनोक्तेन विधिना लोकान्=भूरादीन् पुरुषस्यावयवभूतान्

अकल्पयन्=कल्पितवन्तः । 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ।' (महाभारते आदिपर्वणि) इति न्यायेन भागवतादिपुराणपठितः तत्र पुरुषे चतुर्दशलोककल्पनाप्रकारोऽत्रानुसंधेयः—तद्यथा—अस्य पुरुषस्य विराजः पादमूलं पातालं (१) पार्ष्णिप्रपदे रसातलं (२) गुल्फौ महातलं (३) जङ्घे तलातलं (४) जानुनी सुतलं (५) ऊरुद्वयं वितलं (६) चातलञ्च (७) जघनं महीतलं (८) नाभिसरो नभस्तलं (९) उरःस्थलं ज्योतिरनीकं (१०) ग्रीवा महर्लोकः (११) वदनं जनलोकः (१२) रराटी तपोलोकः (१३) शीर्षाणि सत्यलोकः (१४) इति ।

अन्यावयवकल्पनाप्रकारोऽपि—पुरुषस्यास्य बाहवः—इन्द्रादयो देवाः, नासिकाच्छिद्रे—अश्विनीकुमारौ, श्रवणेन्द्रियं—शब्दः, घ्राणेन्द्रियं गन्धः, जिह्वेन्द्रियं—रसः, पक्ष्माणि—अहोरात्रे, नेत्रगोलकं—अन्तरिक्षलोकः, भ्रूकुटीविलासो—ब्रह्मलोकः, तालुः—जलं, वेदाः—उत्तमाङ्गं=मस्तकं, दंष्ट्रा—यमः, दन्ताः—स्नेहः, हासः—जगन्मोहिनी माया, अनन्तसृष्टिः—कटाक्षविक्षेपः, व्रीडा—उत्तरोष्ठः, लोभः—अधरोष्ठः, स्तनः—धर्मः, पृष्ठः—अधर्मः मेढ्रं—प्रजापतिः, वृषणौ—मित्रावरुणौ, कुक्षिः—समुद्राः, अस्थिसङ्घाः—गिरयः, नाड्यः—नद्यः, रोमाणि—वृक्षाः, श्वसितं—मातरिश्वा, तद्गतिः—कालः, तत्कर्म—गुणप्रवाहः, केशाः—अम्बुवाह्या घनाः, वासः—वस्त्रं—सन्ध्यावर्णः, तन्नखानि—अश्वोष्ट्रगजावाः पशवः, कटिदेशः—वन्यपशवो मृगाः, तद्विचित्ररचनाकौशलं—पक्षिगणाः, तत्स्वरःस्मृतिश्च—गन्धर्वविद्याधरचारणाप्सरसः, तद्वीर्यं सकलसुरासुरसङ्घः, हृदयं—मूलप्रकृतिः, समष्टिबुद्धिः—महत्तत्त्वं, व्यष्टिबुद्धिः—स्वयम्भुवो मनुः, अहंकारः—रुद्रः, सर्वे मानवाः—तन्निवासस्थानं, अत एवासौ नारायणनाम्ना परिगीयते, यज्ञानुष्ठानं—तद्विशिष्टं कर्म,

इत्येवमादिरूपः–तद्धयानाय विज्ञेयः । यदाहुः श्रीतोटकाचार्याः–' भूः पादौ यस्य खं चोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे । कर्णावाशा शिरो-द्यौर्मुखमपि दहनं यस्य वास्तेयमब्धिः । अन्तःस्थं यस्य विश्वं सुर-नरखगगोभोगिगन्धर्वदैत्यैः, चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णु-मीशं नमामि ॥' इति ।

अयं भावः–सर्वस्य सृष्टिप्रकारस्य मायिककल्पनामयत्वात् 'मायायां सर्वसम्भवात्' इति न्यायेन नेदृशोत्पत्ति–अवयवकल्पनम-सङ्गतम् । एकमेव वस्तु अनेकधा व्यवहारास्पदतां प्रतिपद्यमानं 'आ-काशस्य छिद्रं' 'मविमायाः शरीरं' 'आत्मनः चैतन्यं' 'राहोः शिरः' इत्यादौ दृष्टं, तथाऽत्रापि कार्यकारणरूपेण क्रियमाणा मप-ञ्चभेदकल्पना न तत्त्वतः पृथग्वस्तुविषयाऽवगन्तव्या । अपि च सप्र-योजनमिदं कल्पनम् । यतो दृश्यमानेषु श्रूयमाणेषु सर्वपदार्थेषु पर-मेश्वरशरीरावयवधारणया मनोमलानि रागद्वेषादीनि क्षीयन्ते, चेतो-निर्मयतामनुभवन् प्रसीदति, अतस्तत्रान्यभावनां विहाय भगवद्भाव-नैव विधातव्या इति ।

मूले चन्द्रमाः=चन्द्–आह्लादं माति–निर्मिमीते इति व्युत्पत्तेः । आह्लाद-करः सोम इत्यर्थः । 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' । (ऐ० आ० २ । ४ । २ ) इति श्रुत्यन्तरम् । चक्षोः, चक्षुषः–अत्रान्त्यसकारलो-पश्छान्दसः । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्' ( ऐ० आ० २ । ४ । २ ) इति श्रुतेः मुखात्–अत्र मुखशब्देन वागिन्द्रियमुच्यते । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यत्र तु सर्वं मुखमण्डलं विवक्षितम् । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. आ, २ । ४ । २ ) इति श्रुतेः । ऋग्वेदसंहितायाम-

थर्ववेदसंहितायाञ्च श्रोत्रादित्यादिस्थले 'मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत।' (ऋ० १०।९०।१३) (अथर्व० १९।६।७) इति पाठ उपलभ्यते। श्रोत्रात् दिशः 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' (ऐ० आ० २।४।२) इति हि श्रुत्यन्तरम्।

× × ×

## ( ७१ )

( क्रियाज्ञानादियज्ञेन साधनेन यज्ञस्वरूपंविष्णुपूजनध्यानादिकं कृत्वा मानवा महान्तो देवा भवन्ति, अनन्तञ्च सुखमवाप्नुवन्ति )

अभ्युदयनिःश्रेयससाधनेन क्रियाज्ञानादियज्ञेन तत्तदभीप्सितफलप्राप्तिं निरूपयति—

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि
धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र
पूर्वे साध्याः सन्ति देवाः॥

(शु. य ३१।१६।ऋ. १।१६४।५०+१०।९०।१६।अथर्व. ७।५।१। तै. स. ३।५।११।५। तै.आ. ३।१।७। शत.ब्रा. १०।२।२।२।ऐ. ब्रा. १।३।४)

यज्ञेन=शास्त्रविहितसाधनविशेषेण, यज्ञ=यज्ञस्वरूपं विष्णुं, व्यापकं यज्ञाभिन्नं परमात्मानं, देवाः=देवत्वप्राप्तियोग्यतासम्पादकशुभसंस्कारविशिष्टाः—दैवीसम्पद्भाजो मनुष्या इत्यर्थः। अयजन्त=पूजितवन्तः—ध्यातवन्त इत्यर्थः।

यजनेन विष्णुप्रसादं प्राप्तवन्त इति यावत्, अतस्तानि विष्णुयजनरूपाणि शास्त्रविहितानि धर्माणि=सर्वाण्यपि प्रेयः–श्रेयः–साधनानि यज्ञत्वेन प्रतिपादयितुमर्हाणि जगद्धारकाणि साधकोद्धारकाणीत्यर्थः। प्रथमानि=मुख्यानि–श्रेष्ठानि, आसन्=अभूवन्। धर्माणीति बहुवचननिर्देशेन यज्ञस्य नैकविधत्वमपि तु बहुविधत्वं गम्यते। अत एव स्वयं भगवता वेदपुरुषेण गीतासु–'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे। स्वाध्यायज्ञानयज्ञाश्च।' (४।२८) इत्यादिरुपक्रम्य 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।' (४।३२) इति वेदद्वारेण विस्तारिता यज्ञा बहुविधा सन्तीत्युक्तम्। एवं सति चात्र यज्ञतत्त्वं प्रतिपित्सूनां प्रतिपत्तिसौकर्याय कथञ्चित्कल्प्यमानो यज्ञविभागः प्रदर्श्यते। तथाहि–यज्ञो द्विविधः,फलात्मकः साधनात्मकश्च;तत्राद्यः–सम्यग्दर्शनलक्षणो ब्रह्मात्मैक्यज्ञानरूपो यज्ञः प्रशस्ततमः। अत एवैतदभिसन्धाय भगवताऽप्युक्तम्–'श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप। सर्वं कर्माखिलं पार्थ। ज्ञाने परिसमाप्यते॥' (४।३३) इति। तत्साधनात्मको द्वितीयो यज्ञः प्रशस्ततरः। स चानेकविधः श्रौतस्मार्तयज्ञः (१) द्रव्ययज्ञः (२) पञ्चमहायज्ञः (३) स्वाध्याययज्ञः (४) तपोयज्ञः (५) योगयज्ञः (६) प्राणायामयज्ञः (७) संयमयज्ञः (८) महाव्रतयज्ञः (९) उपासनायज्ञः (१०) तत्त्वविचारयज्ञश्च (११) इति। क्रमशः एते व्याख्यायन्ते।

(१) तत्र ज्योतिष्टोमदर्शपूर्णमासादिलक्षणो ब्राह्मणकल्पसूत्रादिविहितेतिकर्तव्यताकः श्रौतयज्ञः। महारुद्रमहाविष्णुमहाशक्त्यादिदेवताप्रसन्नताऽऽपादकः स्मृतितन्त्रादिविहितेतिकर्तव्यताकः स्मार्तयज्ञः। 'ज्योतिष्टोमेन यजेत' इत्यादिश्रुत्या 'दैवमेवापरे यज्ञं

-योगिनः पर्युपासते ।' ( गी. ४ । २५ ) इत्यादिस्मृत्या च तयोर्यज्ञत्वं चाम्नायते स्मर्यते च ।

(२) द्रव्यसाध्यो यज्ञो द्रव्ययज्ञः, द्रव्यं नाम लोकप्रसिद्धं धनं, तस्य दानलक्षणेन त्यागेन देवप्राण्याद्युपकारकं परमेश्वरप्रसादसम्पादकं शिष्टैरपि प्रशंसनीयं यज्ञबुद्ध्या क्रियमाणं पूर्तदत्तादिरूपं कर्म इति यावत् । तदेतत् गीतासु 'द्रव्ययज्ञाः' ( ४ । २८ ) इत्यनेन स्मृतं भगवताऽपि । अत्रैतत्स्मृतिवचनानुमिता काचन श्रुतिः कल्पनीया, यतो यस्यकस्यचित्प्रामाणिकस्मृतिवचनस्य मूलं वैदिकवचनं साक्षान्नोपलभ्यते । तस्य मूलं तादृशवैदिकवचनं कल्पनीयं भवति । तत्कल्पितवचनमपि श्रुतिरित्युच्यते—'द्रव्यसाध्यो लोकोपकारकः पूर्तादिरूपो यज्ञो धनवान् कुर्यादि' ति; ग्रन्थसमाप्तिकामो मङ्गलमाचरेदितिवत् । अभिहितानि तावत् पूर्तादिलक्षणानि, तद्यथा—'वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम् । बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥ अग्निहोत्रं तपः सत्यं वेदानांचानुपालनम् । आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ इति । तडागादीत्यत्रादिपदेन चिकित्सालयगोशालाऽनाथालयप्रभृतिकं ग्राह्यम् ।

(३) पञ्चमहायज्ञः—नित्यं गृहस्थकर्तव्यतया निर्धारितं पञ्चसूनादोषापनोदकं ऋषिदेवपितृमनुष्यादिविश्वरूपभगवदर्चनादिलक्षणं ब्रह्मयज्ञ—देवयज्ञ—पितृयज्ञ—नृयज्ञ—भूतयज्ञशब्दप्रतिपाद्यं कर्म इत्यर्थः । तत्र स्वाध्यायसंध्योपासनादिकं ब्रह्मयज्ञः । अग्निहोत्रादिकं देवयज्ञः, मातापित्रोर्नमस्कारशुश्रूषाश्राद्धतर्पणादिना प्रशस्तप्रजातन्त्वविच्छेदेन च प्रसादनं, अर्यमादिपितॄणां वा पितृ-

यज्ञः । वेदादिशास्त्रविदां पण्डितानां संन्यासिनां कर्मयोगिनामभ्यागतानां दरिद्राणाञ्च मनुष्याणामन्नवस्त्रादिना सत्कारो मनुष्ययज्ञः । गृहवर्तिभ्यो गोऽश्वमहिषीप्रभृतिभ्यो भूतेभ्यो यथाकालं घासोदकप्रदानं तत्स्थानगोष्ठादिसंशोधनं, अन्येभ्योऽपि पशुपक्ष्यादिभ्यो यथाशक्यं बलिसमर्पणं भूतयज्ञः । यत्रैतच्छ्रुतं भवति–'**पञ्च वै एते महायज्ञाः सतति प्रतायन्ते, सतति सन्तिष्ठन्ते– देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति ।**' ( तै. आ. २ । १० ) इति । सतति=सततं दिने–दिने, प्रतायन्ते=प्रारभ्यन्तेऽनुष्ठीयन्ते इत्यर्थः । संतिष्ठन्ते=समाप्यन्ते इत्यर्थः । यस्मिन् दिने उपक्रमस्तस्मिन्नेव दिने तत्समाप्तिः । न तु यज्ञान्तरवत् दिनान्तरापेक्षा इति यावत् । स्मरति च भगवान् मनुरपि–'**अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥**' ( मनु. ३ । ७० ) '**ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा । नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥**' ( ३ । २१ ) इति । तथा च श्रीमद्भागवतेऽपि–'**वेदाध्यायस्वधास्वाहा बल्यन्नाद्यैर्यथोदयम् । देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥**' ( ११ । १७ । ५० ) इति ।

(४) **स्वाध्याययज्ञः**–विधिवद्वेदाभ्यासः, उपनिषदादिमोक्षशास्त्राणामध्ययनं वा प्रणवादिपवित्रमन्त्राणां जपो वा स्वाध्यायः । यज्ञभावनयाऽनुष्ठेयत्वात् तस्य यज्ञत्वम् । तथा चाम्नायते–'**स्वाध्यायो वै ब्रह्मयज्ञः**' ( श. ब्रा. ११ । ५ । ६ । २ ) इति । अत एव चोक्तं भगवता गीतासु– '**स्वाध्यायज्ञानयज्ञाश्च**' ( ४ । २८ ) स्वाध्यायेन प्रवृद्धं ज्ञानं स्वाध्यायज्ञानं तदेव यज्ञो येषां ते स्वाध्यायज्ञानयज्ञा इत्यर्थः । यद्वा स्वाध्याययज्ञा ज्ञानयज्ञाश्च यज्ञशब्दस्य प्रत्येकं सम्बन्ध इत्यर्थः । जपरूपस्य स्वाध्यायस्य यज्ञत्वं '**यज्ञानां**

जपयज्ञोऽस्मि' (गी. १० । २५) इति भगवताऽभिहितम्। मनुनाऽपि—'सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्।' इति। यद्यपि पञ्चमहायज्ञान्तर्गतब्रह्मयज्ञेऽस्य स्वाध्याययज्ञस्यान्तर्भावः कर्तुं शक्यः। तथापि गोबलीवर्दन्यायेनाऽस्य* किमपि विशिष्टं प्राशस्त्यं द्योतयितुं पृथक् ग्रहणं प्रत्येतव्यम्। तत्र—'अपहतपाप्मा हि स्वाध्यायो× देवपवित्रं वै एतत्, तं यो अनूत्सृजति अभागो वाचि भवति अभागो नाके।' (तै. आ. २। १५) 'ये वै केचन श्रमाः इमे द्यावापृथिव्यन्तरेण स्वाध्यायो ह एव तेषां परमता काष्ठा' (श. ब्रा. ११। ५। ७। २) 'स्वाध्यायो वै ब्रह्मयज्ञः प्रिये स्वाध्यायप्रवचने भवतः, युक्तमना भवति अपराधहीनः अर्थान् साधयते सुखं स्वपिति।' (श. ब्रा. ११। ५। ६। ३) 'यदि ह वै अपि अभ्यक्तः अलङ्कृतः सुहितः सुखे शयानः स्वाध्यायमधीते, आ ह एव स नखाग्रेभ्यः तपः तप्यते।' (श. ब्रा. ११। ५। १८) 'यावन्तं ह वै इमां पृथिवीं वित्तेन पूर्णां

* 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः।' इत्यभिधानात् सामान्य बलीवर्दवाचकेत्यत्र गोपदेनैव बलीवर्दबोधसिद्धौ बलीवर्दपदं दुर्दम्यत्वज्ञापनपरत्वेन सफलमिति। तद्वत् प्रकृतेऽपि पृथक् ग्रहणस्य तस्य साफल्यं बोध्यम्।

× न खलु कश्चिदपि पाप्मा स्वाध्यायं स्पृशति। यस्मादेतत्स्वाध्यायस्वरूपं देवानामपि शोधकं, देवा हि पूर्वस्मिञ्जन्मनि मनुष्या भूत्वा स्वाध्यायमधीत्य तदर्थं चानुष्ठाय शुद्धाः सन्तो देवत्वं प्राप्ताः, तस्मात्तमीदृशं स्वाध्यायं योऽनूत्सृजति=प्रारभ्य पश्चात्त्यजति स पुमान् वाचि=महाफलहेतुभूतायां अभागो=भाग्यहीनो भवति। नाके=महापुण्यनिष्पाद्ये स्वर्गेऽपि अभागः=भाग्यरहित इत्यर्थः। यो हि पाणिलब्धं चिन्तामणिं मौढ्यादब्धौ प्रक्षिपति स भाग्यहीनस्तथाऽत्र स्वाध्यायपरित्यक्ताऽपि।

ददत् लोकं जयति त्रिस्तावन्तं जयति भूयांसं च अक्षय्यं यः स्वाध्यायमधीते ।' (श. ब्रा. ११ । ५ । ६ । २) 'एष पन्था एतत् कर्म एतद् ब्रह्म एतत्सत्यं तस्मान्न प्रमाद्येत् ।' (ऐ. ब्रा. ५ । १) इत्येवमादिश्रुतिभ्यः स्पष्टमवगम्यते इति । अपि च स्वाध्याययज्ञस्य सततानुष्ठानादेवायं पुमान् बहुश्रुतो भूयोविद्योऽनूचानश्च भवति । यदाह यास्कः–' भूयोविद्यः प्रशस्यो भवति (निरुक्तपरिशिष्टे) इति । स्वाध्यायकुशलो बहुश्रुतो हि बहुदृष्टत्वात् अनेकविषये मन्त्रार्थे शास्त्रार्थे वा न क्वचिदपि प्रतिबध्यते । न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति । तस्माद् भूयोविद्याचार्यमुखाद्बहु श्रोतव्यम् । मनः प्रणिधाय स्वयञ्च भूयोऽध्येतव्यम् । तदर्थतत्त्वञ्चासकृन्मन्तव्यम् । ततोऽप्यतिगभीराणामस्पष्टार्थानामपि वेदमन्त्राणां विस्पष्टार्थान् अवबोद्धुं निर्वक्तुञ्च प्रभवत्येव । ईदृशोऽयं स्वाध्याययज्ञस्य महिमा । इति । तदुक्तं माधवभट्टेन–' अधीतसाङ्गवेदोऽपि पदार्थमिह मानवः । बाहुश्रुत्याद्विजानाति व्यसनादभियोगतः ॥ वृद्धसेवाऽभियोगाभ्यामर्थो ज्ञेयः प्रयत्नतः ।)' इति ऋग्वेदानुक्रमणिकायाम् । अत एव तैत्तिरीयश्रुतिरप्यसकृत् स्वाध्यायप्रमादं परित्यक्तुमर्थतः शान्तिश्रमाभ्यां तदनुष्ठातुमादिशति–' स्वाध्यायान्मा प्रमदः ' ' स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।' इति (१। ११) ' स्वाध्यायादिष्टदेवतासंप्रयोगः ' इति योगसूत्रमपि तन्महत्त्वमाह । इति ।

(५) तपोयज्ञः–कृच्छ्रचान्द्रायणपञ्चाग्निसेवनकाष्ठमौनादि व्रतोपवासादिवा तपः, क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहनं वा स्ववर्णाश्रमधर्मपरिपालनं वा तपः, तदेव यज्ञः, तद्बुद्ध्याऽनुष्ठीयमानत्वात्, अत एव गीतासु–' तपोयज्ञाः ' (४ । २८) इत्युक्तम् ।

(६) योगयज्ञः–नित्यनैमित्तिकप्रायश्चित्तदेशजात्युपकारकादिप्रशस्तकर्मणामनुष्ठानं योगयज्ञ इत्यर्थः। यद्वा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टाङ्गोपेतो–' योगश्चित्तवृत्तिनिरोधः ' (यो. सू. १।२) इति सूत्रितो योग एव यज्ञ इत्यर्थः। ' योगयज्ञास्तथाऽपरे ' (गी. ४। २८) इत्यत्र गीतासु स्मृतमेतत् योगस्य यज्ञत्वम्।

(७) प्राणायामयज्ञः–प्राणापानवृत्तिनिरोधः प्राणायामः, स एव यज्ञः होमसाधर्म्यात्तत्त्वम्। स च त्रिविधः–रेचकः, पूरकः कुम्भकश्चेति। शरीरान्तर्गतस्य वायोर्बहिरुच्छ्वासेन निःसारणे रेचकः, बहिःस्थस्य वायोरन्तर्निश्वासेन प्रवेशने पूरकः, उच्छ्वासनिश्वासनिरोधेन निश्चलतयाऽवस्थाने कुंभकः। स च द्विविधः आन्तरकुम्भको बाह्यकुंभकश्चेति। तत्र पूरकानन्तरं क्रियमाणः श्वासप्रश्वासनिरोधोऽन्त कुम्भकः, रेचकानन्तरं क्रियमाणस्तु बहि कुम्भक इति। उक्तञ्च भगवता–' अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे। प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ ' (गी. ४।२९) इति। यदाहुः प्राणायामस्य महत्वं योगभाष्यकाराः बादरायणाचार्याः–' तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य ' (स. भा. २।४९) इति। अन्यत्रापि–' प्राणायामं महाधर्मं वेदानामप्यगोचरम्। सर्वपुण्यस्य सारं हि पापराशितुलानलम् ॥ ' (रुद्रयामलोत्तरतन्त्रे. १७।४०) ' मनोजीवात्मनः शुद्धिः प्राणायामेन जायते। ' (गन्धर्वतन्त्रे. १०। ९) इति। तस्मात्–' मुमुक्षुभिः प्राणजयः कर्तव्यो मोक्षहेतवे। ' (यो. शि. उ. ६६) इति। ' सन्ध्ययोरुभयोर्नित्यं गायत्र्या प्रणवेन वा। प्राणसंयमनं कुर्यात् ब्राह्मणो वेदपारगः ॥ ' (याज्ञवल्क्यसंहिता. ६।१९) इति च।

(८) संयमयज्ञः—धार्मिकनैतिकमर्यादामनतिक्रम्य रागद्वेषशून्यत्वेन शब्दादिविषयभोगः संयमयज्ञः। यज्ञत्वमस्य होमसाधर्म्यात्। तदुक्तं—'**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते॥**' (४।२७) इति। सर्वेषां ज्ञानकर्मेन्द्रियाणां शब्दादिविषयग्रहणात्मकानि वचनादिव्यापारात्मकानि च कर्माणि, प्राणादेः श्वासादिरूपकर्माणि ज्ञानेन—विषयदोषदर्शनलक्षणेन दीपिते=प्रज्वलिते, आत्मसंयमयोगाग्नौ—आत्मा मनः तस्य संयमः—वशीकारः स एव योगः स एवाग्निः तस्मिन् जुह्वति—समर्पयन्तीत्यर्थः। यद्वा धारणा ध्यानं समाधिरिति त्रयमेकविषयं सम्पाद्य निखिलेन्द्रियवृत्तिनिरोधरूपः संयमयज्ञः, तत्र धारणा नाम हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनम्। एवमेकत्र धृतस्य चित्तस्य ध्येयाकारवृत्तिप्रवाहोऽन्तराऽन्तराऽन्याकारप्रत्ययव्यवहितो ध्यानम्। सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः। स च द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्च। ध्येयाकारवृत्तिप्रतिभासे सम्प्रज्ञातः, तस्या अपि निरोधे चित्तनिरोधादसंप्रज्ञातः इति योगशास्त्रप्रक्रिया। तदुक्तं पातञ्जलयोगशास्त्रे—'**त्रयमेकत्र संयमः**' (३।४) इति। तदेतत्सूक्तं गीतासु—'**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**' (४।२६) इति। धारणाध्यानसमाधिरूपाः संयमाः त एवाग्नयः, तेष्विन्द्रियाणां हवनं नाम धारणादिसिद्ध्यर्थं तेषां स्वस्वविषयेभ्यः प्रत्याहारः, तस्मिन् हि साध्यमाने विक्षेपाभावाच्चित्तधारणादिकं सिद्धं भवति। सोऽयं समाध्यवस्थायामखिलेन्द्रियवृत्तिनिरोधरूपः संयमयज्ञ उक्त इत्यर्थः। आहारनियमः, विहारनियमः, निद्राजागरणनियमः, ब्रह्मचर्यनियमः, इत्यादिनियमपरिपालनमपि संयमयज्ञ एव। तथा हि—'**द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्॥**' '**हितं मेध्यमश्नीयात्**'

इत्यादिना शास्त्रेण हितमितमेध्यस्याहारस्य नियमः । तदेतद्भगवानपि गीतासु यज्ञत्वेनोपक्षिपन्नाह—' अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ' ( ४ । ३० ) इति । अपरे=अन्ये शारीरादिप्रकृतितत्त्वाभिज्ञाः, नियतः=नियमितो नियमबद्धः परिमितः आहारो भोजनं येषां ते सायंप्रातर्हितमितमेध्याशिनः इत्यर्थः । ' सायं प्रातराश्येव स्यात् स यो ह वै विद्वान् सायं प्रातराशी भवति सर्वं हैवायुरेति ।' ( श. ब्रा. २ । ४ । ६ ) इति श्रुतेः । प्राणान्=आहारलोलुपान् आध्यात्मिकवायुभेदान्, प्राणेषु=प्राणाग्निषु ' प्राणाग्नय एवैतस्मिन् पुरे जाग्रति, गार्हपत्यो ह वा एषोऽपानः, व्यानोऽन्वाहार्यपचनः, यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ' ( प्रश्नो. ४ । ३ ) इति श्रुतेः । जुह्वति–होमयन्ति इत्यर्थः । ' योजनान्न परं गच्छेत् ' ' न पाणिपादचपलो न नेत्रचपलो यतिः । न वाक्चपलश्चैव । ' इत्यादिना विहारस्य नियमः । ' रात्रिभागत्रयं कृत्वा प्रबुद्धः प्रथमान्तयोः । प्रस्वपन्मध्यमे भागे योगयोग्यः प्रजायते ॥ ' ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम् ।' इत्यादिना निद्राजागरणयोर्नियमः । गृहस्थस्य—' परदारपरित्यागात्स्वदारपरितुष्टितः । ऋतुकालाभिगामित्वात् ब्रह्मचारी गृहीरितः ॥ विवाहो न विलासार्थः प्रजार्थ एव केवलः । तेजोबुद्धिबलध्वंसो विलासात्प्रभवेत्खलु ॥ अत एव परित्यज्य विलासं मोहकारणम् । संयम्येन्द्रियाण्याशु विचारेण सुखी भवेत् ॥ इत्यादिना ब्रह्मचर्यनियमः । इतराश्रमाणान्तु सर्वथाऽष्टविधमैथुनपरित्यागपूर्वकं ऊर्ध्वरेतस्त्वसम्पादनात्मको ब्रह्मचर्यनियमः प्रदर्शितः ।

(९) महाव्रतयज्ञः—जातिदेशकालप्रयोजनप्रयुक्तावच्छेदवर्जिता-

हिंसा—सत्य—अस्तेय—ब्रह्मचर्य—अपरिग्रहात्मक—पञ्चयमपरिपालनं महाव्रतं स एव यज्ञः। अशास्त्रीयं प्राणिपीडनं हिंसा, सा च कृतकारितानुमोदितभेदेन त्रिविधा, एतन्निवृत्तिलक्षणा अहिंसा। एवमयथार्थभाषणं, अवध्यहिंसानुबन्धि यथार्थभाषणं चानृतं, एतन्निवृत्तिलक्षणं सत्यम्। अशास्त्रीयमार्गेण परद्रव्यस्वीकरणं स्तेयं, एतन्निवृत्तिलक्षणमस्तेयम्। अशास्त्रीयः स्त्रीपुंसव्यतिकरो मैथुनं एतन्निवृत्तिलक्षणं ब्रह्मचर्यं, शास्त्रनिषिद्धमार्गेण देहयात्रानिर्वाहाधिकभोगसाधनस्वीकारः परिग्रहः एतन्निवृत्तिलक्षणोऽपरिग्रहः। तत्राहिंसायां जात्यवच्छेदो हि यथा 'मृगयोर्मृगातिरिक्तान्न हनिष्यामि' इति। देशावच्छेदो यथा 'न तीर्थे हनिष्यामि' इति। कालावच्छेदो यथा 'न चतुर्दश्यां न पुण्येऽहनि' इति। प्रयोजनावच्छेदश्च यथा 'क्षत्रियस्य देवब्राह्मणादिप्रयोजनव्यतिरेकेण न हनिष्यामि' इति। 'युद्धं विना न हनिष्यामीति' च। एवं सत्यास्तेययोरपि—'विवाहादिप्रयोजनव्यतिरेकेणानृतं न वदिष्यामी' ति। 'आपत्कालव्यतिरेकेण—इक्षुद्वयातिरिक्तस्य स्तेयं न करिष्यामी' ति च। एवं 'ऋतुव्यतिरिक्तकाले पत्नीं न गमिष्यामी' ति। एवं 'गुर्वादिप्रयोजनमन्तरेण न परिग्रहीष्यामी' ति। यथायोग्यमवच्छेदोऽन्यत्र तथ्यः। एतादृशावच्छेदपरिहारेण यदा 'कस्यामपि जातौ कस्मिन्नपि देशे कस्मिन्नपि समये यज्ञादिप्रयोजनेऽपि हिंसां न करिष्यामि, नानृतं वदिष्यामि, ब्रह्मचर्याद् भ्रष्टो न भविष्यामीत्येवमादिदृढनिश्चयपूर्वकेण महता प्रयत्नेन सर्वथा सर्वदा परिपाल्यमाना अहिंसादयो यमा भवन्ति, तदा ते महाव्रतयज्ञशब्देनाभिधीयन्ते इति। एतादृशमहाव्रतयज्ञानुष्ठानदार्ढ्ये सति नरकद्वारभूतानां चतुर्णामपि कामक्रोधलोभमोहानां निवृत्तिर्भवति। तत्र अहिंसया क्षमागर्भितया क्रोधस्य, वस्तु-

विचारप्रभवेण ब्रह्मचर्येण कामस्य, अस्तेयापरिग्रहोपलक्षितेन सन्तोषेण लोभस्य, सत्येन यथार्थज्ञानलक्षणेन विवेकेन मोहस्य, तन्मूलानां सर्वेषां दोषाणां निवृत्तिरिति द्रष्टव्यम् । इतराणि च फलानि 'अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः' ( यो० सू० २ । ३५ ) इत्यादिसूत्रसन्दर्भेण योगशास्त्रे वर्णितानि तत्रैवानुसंधित्सुना द्रष्टव्यानि । 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेवतत्' ( छां० ८ । ५ । १ ) 'सत्यं यज्ञः परः मोक्षः सर्वं सत्ये प्रतिष्ठितम्।' ( म. भा. शां. प. १६२ ) इत्यादिश्रुतिस्मृतिवचनेभ्यो महाव्रतशब्दवाच्यानां सत्यब्रह्मचर्यादीनां यज्ञत्वमवगन्तव्यम् ।

(१०) उपासनयज्ञः—उपासनं नाम—शास्त्रेण यथा स्वेष्टदेवात्मादिस्वरूपं ज्ञाप्यते तथा श्रद्धाभक्तिभरितेन मनसा उपगम्य किञ्चिदभीष्टं मन्त्रप्रतिमादिकमालम्बनमुपादाय आसनं=अनन्यप्रेम्णा लौकिकप्रत्ययाव्यवधानेन चिन्तनमुपासनमित्युच्यते, तच्च यावत्तद्देवात्मादिस्वरूपात्माभिमानाभिव्यक्तिर्न स्यात् तावत्कर्तव्यम् । 'मनुष्योऽहं ब्राह्मणोऽहमि' त्यादिलौकिकात्माभिमानवत्। ' 'देवो भूत्वा देवानप्येति'* 'ब्रह्मभूतोऽधिगच्छति' (गी. ५ । २४) इत्येवमादिश्रुतिस्मृतिभ्यः । तदेव यज्ञः । तच्च द्विविधं भेदबुद्ध्या क्रियमाणं प्रतीकोपासनं, अभेदबुद्ध्याऽनुष्ठीयमानमहंग्रहोपासनञ्च । आद्यं द्विविधं सम्पद्रूपमध्यासरूपञ्च । आरोप्यप्रधाना सम्पत्, आलम्बनप्रधानोऽध्यासः । आरोप्यो भगवानिष्टदेवः, प्रतिमादिकमालम्बनम् । प्रतिमादिकमेव भगवानिति यदा विभाव्यते, तदा उत्कृष्टस्य निकृ-

* इहैव जन्मनि साक्षात्कारो देवभावः, मरणादूर्ध्वं देवत्वापत्तिर्देवाप्ययः ।

द्रूपेण, व्यापकस्य परिच्छिन्नरूपेण, चैतन्यस्य च जडरूपेण विभावनादध्यासोपासनं निकृष्टं द्रष्टव्यम्। भगवानेव प्रतिमादिकमिति यदा भगवत्स्वरूपेण प्रतिमादिकं विभाव्यते, चैतन्यभावनया जडत्वं विलाप्यते, तदा–'ब्रह्मदृष्टिरुत्कर्षात्' (ब्र० सू० ४ । १ । ५) इतिन्यायेन 'न हि व्यापकः सर्वाधारो भगवान् अत्यल्पप्रतिमादिरूपोऽपितु प्रतिमादिकं भगवद्रूपमेव;विश्वरूपस्य तस्य प्रतिमादिरूपत्वं सहजमेवेति निकृष्टे प्रतिमादौ सर्वोत्कृष्टब्रह्मदृष्टेः स्थापनात् सम्पदुपासनमध्यासात्प्रशस्ततरम्। अहंग्रहोपासनमपि द्विविधं सगुणब्रह्मगोचरं निर्गुणब्रह्मगोचरञ्च। तत्राद्यं अनन्तसौन्दर्यमाधुर्यसौष्ठवमार्दवसारसर्वस्वं कर्पूरधवलपुञ्जज्वलरत्नकान्तिकान्तदिव्याङ्गमखिललोकशरण्यमनवरतमप्रसादसुमुखं रमणीयचन्द्रकलावतंसं प्रशान्तवीतरागजनसेव्यमशेषनाथं श्रीविश्वनाथमुमारमणं महादेवं, मदनकोटिसुन्दरं मरकतोपलश्यामलं मणिकिरीटकुण्डलवलयहारकेयूरमुद्रिकाद्याभूषणालङ्कृतं मङ्गलमयविग्रहं मन्दस्मितरुचिरबिम्बाधरं महनीयाद्भुतचरितं भगवन्तं रमारमणं श्रीविष्णुं वा श्रीरामं वा श्रीकृष्णं वाऽहंभावनयाऽनवरतं ध्यायमानस्य तत्स्वरूपापत्त्यात्मकं सारूप्यं फलं सम्पद्यते। तथाचाम्नायते–'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत।' (छां. ३ । १४ । १) इति। अथ खल्विति हेत्वर्थः। यस्मात्क्रतुमयः=क्रतुप्रायः–अध्यवसायात्मकः पुरुषो जीवः। यथाक्रतुः=यादृशः क्रतुः–अस्य सोऽयं यथाक्रतुर्यथाध्यवसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवन्निह पुरुषो भवति तथेतः=अस्माद्देहात्प्रेत्य=मृत्वा भवति=क्रत्वनुरूपफलात्मको भवतीत्यर्थः।

स्मर्यते च—'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमे-वैति कौन्तेय! सदा तद्भावभावितः॥' (गी० ८। ६) इति। द्वितीयं तु श्रुत्युक्तैरानन्दादिभिर्विधेयैरस्थूलादिभिर्निषेध्यैर्गुणैर्लक्षितो वस्तुतो निर्गुणोऽखण्डैकरसः पूर्णाद्वैतो ब्रह्मात्माऽहमस्मीत्येवं सततं चिन्तनात्मकं निर्गुणब्रह्मगोचरमहंग्रहोपासनम्। तदुक्तम्—'नित्यः शुद्धो बुद्धमुक्तस्वभावः, सत्यः सूक्ष्मः सन् विभुश्चाद्वितीयः। आनन्दाब्धिर्यः परः सोऽहमस्मि, प्रत्यग्धातुर्नात्र संशीतिरस्ति॥' (मै. उ. १। ११) इति।

नन्वेवं सति निर्गुणोपासनस्य ब्रह्मबोधस्य च को विशेषः? इति चेत् उच्यते, अयं हि विशेषः—'बोधस्य वस्तुतन्त्रत्वेन वस्तुतत्त्वविचारात्स्योत्पद्यमानत्वात् पुरुषेच्छया कर्तुमकर्तुमन्यथाकर्तुमशक्यो बोधः। उपासनस्य च कर्तृतन्त्रत्वेनाप्तस्य गुरोरुपदेशमुपास्यतत्त्वप्रतिपादकं विश्वस्योपास्यतत्त्वमविचार्याव्यवहितवद्गोचरसजातीयप्रत्ययप्रवाहेण तस्याजस्रं चिन्त्यमानत्वात् पुरुषेच्छया कर्तुमकर्तुमन्यथाकर्तुं भवति शक्यमुपासनम्। इति। उपासनमिदं यत्र तत्र 'ईश्वरप्रणिधानाद्वा' (यो. सू. १। २३) 'भक्त्या मामभिजानाति' (गी. १८। ५५) इत्यादौ प्रणिधानभक्त्याराधनादिशब्दैर्व्यपदिश्यते। सर्वेषां कर्मणां परमगुरौ परमेश्वरे फलनिरपेक्षतयाऽर्पणम्—ईश्वरप्रणिधानम्, तदेव प्रकारान्तरेण 'तस्य वाचकः प्रणवः' (यो. सू. १। २७) 'तज्जपस्तदर्थभावनम्' (यो. सू. १। २८) इतिद्वाभ्यामसूत्रयत् भगवान् पतञ्जलिः। तत्फलञ्च 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' (यो. सू. १। २९) इति। ततः=प्रणवजप-

रूपात्तदर्थभावनरूपाच्चेश्वरप्रणिधानात् प्रत्यक्चेतनस्य त्वंपदलक्ष्यस्य पूर्णस्य पुरुषस्याधिगमः=साक्षात्कारो भवति, अन्तरायाणां विघ्नानाञ्चाभावो भवतीत्यर्थः। भक्तिश्च–'द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता। सर्वेशे मनसो वृत्ति-र्भक्तिरित्यभिधीयते ॥' इति। श्रवणकीर्तनार्चनपादसेवनवन्दनादेरप्युपासन एवान्तर्भावः। उपासनस्य च यजतिगतोः देवपूजासंगतिकरणदानार्थानु-गमात् यज्ञत्वम्।

(११) तत्त्वविचारयज्ञः–विद्वांसं ब्रह्मनिष्ठं गुरुमुपसृत्य ऋग्वे-दादिगीतोपनिषन्मीमांसादिशास्त्रार्थस्य श्रवणमननाभ्यां परिशीलनं तत्त्वविचारयज्ञः। अत एव 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्त-या।' इत्यादौ सर्वदा विचारकर्तव्यता विधीयते। अस्यापि ज्ञानयज्ञप्रयोज-कत्वात् यज्ञत्वम्। यदाहुः–'विचारो नाम मीमांसाऽपरपर्यायो युक्ता-युक्तत्वव्यवस्थापनलक्षणस्तर्कः' इति। अयं हि विचार्यमाणं विषयं परिशोधयति; व्यभिचारादिशङ्काकलङ्कान् विनिवारयति, तत्त्वञ्च वि-निश्चाययति। अत एवोचिरे भगवत्पादाः श्रीमदाचार्य्याः–'वेदा-न्तार्थविचारेण जायते ज्ञानमुत्तमम्।' (विवेकचूडामणा) 'नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः।' (अपरोक्षानुभूतौ. ११) 'वस्तुसि-द्धिर्विचारेण' (विवेक.११) 'अर्थस्य निश्चयो दृष्टो विचारेण' (वि-वेक. १३) 'अतो विचारः कर्तव्यः।' (विवेक. १५) इति। सद्-सद्विवेचनरूपो विवेकः सर्वसाधनमूलं, संसारासक्तिनिवर्तकश्च वैराग्यो न विचाराहते जातु जायेते। उक्तञ्च विचारस्य माहात्म्यं, अविचा-रस्य च दौरात्म्यं भगवद्भिर्दत्तात्रेयावधूतैः भार्गवं रामं समुपदिशद्भिः–

'विचारः सर्वमूलं हि, सोपानं प्रथमं भवेत्। परश्रेयोमहासौधप्राप्तौ जानीहि सर्वथा ॥ सुविचारमृते क्षेमप्राप्तिः कस्य कदा भवेत् । अविचारः परो मृत्युः अविचारहता जनाः ॥ विमृश्यकारी जयति सर्वत्राभीष्टसङ्क्रमात् । विचारः सुखवृक्षस्य बीजमङ्कुरशक्तिकम् ॥ विराजते विचारेण पुरुषः सर्वतोऽधिकः । विचाराद्विधिरुत्कृष्टो विचारात्पूज्यते हरिः ॥ सर्वज्ञस्तु विचारेण शिव आसीन्महेश्वरः । अविचारवशादेव विपदं प्राप्नुवन्ति हि ॥ महाभागा हि ते धीरा यान्कुत्रापि भार्गव ! । विजहाति विचारो नो नमस्तेभ्यो निरन्तरम् ॥ (त्रिपुरारहस्ये ज्ञानखण्ड, अध्या० २ । ५१—५२ आदि) इति । अत एव तर्कलक्षणस्य विचारस्य शाश्वतमृषित्वम् यथाह निरुक्तौ—तद्यथा—'मनुष्या वा ऋषिपूत्क्रामत्सु देवानब्रुवन्—को न ऋषिर्भविष्यति ? इति तेभ्य एतं तर्कमृषिं प्रायच्छन, मन्त्रार्थचिन्ताऽभ्यूहम्, तस्माद् यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद्भवति ।' (नि. १३ । १०) इति । अनूचानः=गुरुमुखाल्लब्धवेदादिशास्त्रार्थपरिज्ञानः । शास्त्रार्थाभ्यूहनप्रकारस्तु—'तपसा पारमीप्सितव्यम् ।' (नि० १३ । १३) 'तपसा ब्रह्म विजिज्ञासस्व' (तै. ३ । २) इत्यादिरूपः । तपस्तु 'यस्य ज्ञानमयं तपः' (मुं. १ । १ । ९) इति श्रुत्युक्तं ज्ञानप्रधानं विज्ञेयम् । यदाहुः शिष्टाः—'तपसा हि स्वयमपि वेदार्थः प्रादुर्भवेदेव, यथा मन्त्राः प्रादुरभवन् पूर्वेषामृषीणाम्, तथा मेधावी तपस्व्यपि च स्वयमप्युत्प्रेक्षितुं शक्नुयादेव ।' (दुर्गाचार्याः) इति । यद्यपि केवलस्य तर्कस्य तत्त्वनिश्चायकत्वमप्रतिष्ठितत्वान्नास्त्येव तथापि शास्त्रसहकृतस्य प्रतिष्ठितस्य तस्य तदस्त्येव ।

इत्येवं शास्त्रविहितज्ञानयज्ञसाधनीभूतानां यज्ञानामनेकविधत्वं यथाशक्यं

निरूपितम् । अथाखिलसाधनयज्ञफलात्मकः प्रशस्ततमो ज्ञानयज्ञो वस्तुत एकोऽपि भावनाप्रकारभेदादनेक इव प्रतिभाति । तद्यथा–(क) ब्रह्मैवाहमित्यैक्यानुसंधानरूपः कश्चिदेको ज्ञानयज्ञः (ख) मत्तो न भिन्नं किञ्चिदिति व्यतिरेकानुसंधानरूपः कश्चित् द्वितीयो ज्ञानयज्ञः (ग) सर्वमिदमहञ्च वासुदेवः इति समन्वयानुसंधानरूपः कश्चित् तृतीयो ज्ञानयज्ञः (घ) ब्रह्मविष्णुशिवादिविविधरूपेण भगवानेक एव बहुधा स्थितः इत्यनेकैक्यानुसंधानरूपः कश्चिच्चतुर्थो ज्ञानयज्ञः । (ङ) 'परमकारणात्मन् ! इष्टदेव ! प्रियतम ! त्वमेवासि चराचरं विश्वमि'ति पराभक्त्यात्मकः कश्चित्पञ्चमो ज्ञानयज्ञ इति । एतावता साधनफलद्वयात्मकयज्ञविभागविस्तारः संगृहीतः । अथ तदनुष्ठातृलभ्यं तन्महाफलं प्रतिपादयति–त इति । ते=पूर्वोक्तयज्ञानुष्ठातारः, महिमानः=महाभाग्यशालिनो महत्त्वयुक्ता महात्मान इत्यर्थः, ह=निश्चयेन, नाकं=कं–सुखं, अकं दुःखं तन्नास्ति यत्र सः तं नाकं–स्वर्गं–पूर्णाद्वैतानन्दस्वरूपावस्थानलक्षणं ब्रह्मकैवल्यं विष्णुपदमिति यावत् । तदुक्तं च–'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरं । अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥ इति । अस्य व्याख्यानं ऋग्वेदसंहितोपनिषच्छतकस्याध्यात्मज्योत्स्नायां द्रष्टव्यम् । 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।' (गी. १५ । ८) इति । सचन्त=षचन्ते–सेवन्ते–समवयन्ति–प्राप्नुवन्ति इत्यर्थः, 'षच समवाये' स्मरणात् । कीदृशं तं ? इत्यत आह–यत्र=यस्मिन्नाके, पूर्वे=पुरातनाः शुकवामदेववसिष्ठाद्या महर्षयः, वैदिकसम्प्रदायस्यानादित्वं प्रदर्शयितुमिदं विशेषणम्, श्रद्धोत्साहौ वर्धयितुं वा, महाभागा सफला खल्वियं यज्ञविद्या, महद्भिरस्मत्पूर्वजैरनुष्ठितत्वात् । तथा चाम्नायते–'ॐ इदं नमः ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः'

( ऋ. १० । १४ । १५ । अथर्व. १८ । २ । ३ ) इति । साध्याः= साध्यं–सिद्धिः 'साध संसिद्धौ' 'ऋहलोर्ण्यत्' इति भावे ण्यत्, साऽस्त्येषां ते साध्याः=अर्शआद्यच्,मोक्षसिद्धिमन्तो मुक्ता इत्यर्थः, अशेषाज्ञानतत्कार्यबन्ध-रहिता इति यावत् । दीपनात्–स्वप्रकाशात् देवाः–स्वयंज्योतिःप्रत्यगभिन्नब्रह्म-स्वरूपाः पूर्णानन्दभाजः, सन्ति=विद्यन्ते तिष्ठन्तीति यावत् । यद्वा साध्याः= व्यत्ययेन कर्तरि कृत्यप्रत्ययः, साधका इत्यर्थः अहंब्रह्मोपासका इति यावत् । यद्वा साध्यं=ज्ञानेन प्राप्यं सदासिद्धमात्मभूतं वस्तु येषां स्वस्वरूपत्वेनास्तीति साध्या इत्यर्थः, अत्रापि अर्शआदित्वादच् । प्रियपाठकबुद्धिं विशदयितु वि-लक्षणव्युत्पत्तिप्रदर्शनमिदमवसेयम् ।

अथाधिदैवम्–देवाः=प्रजापतिप्राणरूपाः, यज्ञेन=मानसेन सङ्कल्पेन यज्ञं= यज्ञस्वरूपं प्रजापतिं, अयजन्त=पूजितवन्तः । तस्मात् पूजनात् तानि=प्र-सिद्धानि धर्माणि=जगद्रूपविकाराणां धारकाणि प्रथमानि=मुख्यानि आसन् । यत्र=यस्मिन् विराट्प्राप्तिरूपे नाके,पूर्वे साध्याः=पुरातना विराडुपास्तिसाधकाः देवाः सन्ति=तिष्ठन्ति, तत् नाकं=विराट्प्राप्तिरूपं स्वर्गं ते महिमानः=तदुपा-सका महात्मानः सचन्त–प्राप्नुवन्ति इत्यर्थः ।

यद्वा प्रकारान्तरेणास्याधिदैविकं व्याख्यानमित्थं कथनातन्यते–तथाहि– देवाः=आदित्याः–आदित्यस्य स्वभूता रश्मय इत्यर्थः, यज्ञेन=पार्थिवाग्निहुत-बाष्परूपसाधनभूतेनाग्निना, यज्ञ=अग्निं–मध्यमं वैद्युतमित्यर्थः, अयजन्त= यजन्ते=मेघसृजनं कुर्वन्ति,तानि=अग्निमाध्यम्याग्नियजनानि अर्थाद् बाष्पमाध्यम्य मेघसृजनानि, धर्माणि=कर्माणि प्रथमानि=मुख्यानि आसन्=सन्ति, सदैव तेषां देवानामिति शेषः । अत एवाह यास्कः–'यदासावादित्योऽग्निं रश्मिभिः

पर्यावर्ततेऽथ वर्षति' (निरुक्त. ७ । ७ । १ ) इति । ते=देवाः यत्र लोके पूर्वे=पूर्वं रसाकर्षकतया साध्याः=मेघसृजनरूपेष्टेः साधनाः सन्ति=सन्तः, अत एव महिमानः=माहात्म्ययुक्ताः, देवाः=आङ्गिरसाः पार्थिवानामङ्गानां रसाकर्षकाः इति ह=प्रसिद्धाः, तमेव नाकं=स्वर्गलोकं=वस्तुतः सूर्यं सचन्त=समसेवन्त=सेवन्ते इत्यर्थः, अनेन सूर्यरश्मिभिर्मेघसृजनरूपं वस्तुतत्त्वमुपदिष्टम् । इति।

अर्थाधियज्ञम्–देवाः=यज्ञकर्मणा देवत्वं प्राप्ता यजमानाः पूर्वं, यज्ञेन=अग्निना निर्मन्थ्येन, यज्ञं=होमाधारमाहवनीयमग्निं, अयजन्त=अनुष्ठानाय संयोजितवन्त इत्यर्थः, यजिरत्र संगतिकरणवाची । तानि धर्माणि=अग्निसाधनानि कर्माणि प्रथमानि=प्रतमानि–प्रकृष्टतमानि,आसन्=फलप्रसवसमर्थानि अभवन्नित्यर्थः । धर्मशब्दः अर्चे पुल्लिङ्गः, तत्साधने नपुंसक इति च 'अर्धर्चाः पुंसि' इति सूत्रे वृत्तिकारेण लिङ्गानुशासनं विहितम् । ते ह=ते खलु देवाः महिमानः=महत्त्वयुक्ताः नाकं=स्वर्गं दुःखरहितसुखभोगविशेषं, सचन्त=सङ्गताः अभवन् । यत्र=यस्मिन् नाके पूर्वे=पुरातनाः प्राणाभिमानिनो देवाः सन्ति इत्युच्यन्ते । तथा च वाजसनेयके–' **प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्** ' (श. ब्रा. १० । २ । १ । ४ ) इति । यद्वा गायत्र्यादिच्छन्दोभिमानिनो देवा आदित्या आङ्गिरसश्च साध्या देवा इत्युच्यन्ते । ते देवाः सन्ति=नित्यसन्तीत्यर्थः, तस्मादिदानीमपि यज्ञाधिकारिभिरेवं कर्तव्यमिति । अत्रैतरेयब्राह्मणम्–' **छन्दाँसि वै साध्या देवा....तेऽग्नेऽग्निनाऽग्निमयजन्त ते स्वर्गं लोकमायन्** ' इति ( ऐ० ब्रा० १ । ३ । ५ ) तदित्थं यज्ञकर्मणां स्वर्गप्राप्तिसाधनत्वं तत एव प्राधान्यं चाख्यातम् । इति ।

यद्वा देवाः=इदानीं देवभावमापन्नाः, पूर्वं यज्ञेन=अग्निना–पशुभूतेन यज्ञं=

यष्टव्यमग्निं, अयजन्त=पूजितवन्तः। अग्नेरेव मूर्तिभेदेन समयभेदेन च देवं पशुत्वञ्चावगन्तव्यम्। 'अग्निः पशुरासीत् तमालभन्त तेनायजन्तेति च ब्राह्मणम्' इति हि ( निरु० १२ । ४ । ७ ) यास्कः। साध्याः=यज्ञादि साधनवन्तः। शिष्टं पूर्ववत्।

× × ×

## ( ७२ )

( ब्रह्मात्मतत्त्वापरोक्षज्ञानादेवाविद्यामृत्युः तत्कृतो बन्धश्च विनिवर्तते ज्ञानं विहाय कल्याणप्राप्तये नास्ति किञ्चिदपि स्वतन्त्रं साधनम् )

'बद्धोऽस्मी'ति सर्वजनानुभूतप्रत्ययादस्ति कश्चित् बन्धः। य सर्वेऽपि वादिनो येन केन प्रकारेणाभ्युपगच्छन्त्येव। अतः तत्तदुपायानाश्रित्य यन्निवृत्तं सर्वेऽपि बद्धप्रयत्ना लक्ष्यन्ते। केचन प्रतिकूलवेदनीयं दुःखमात्रं बन्ध इति वदन्ति। इतरे तु रागद्वेषादयः क्लेशा एव बन्ध इति ब्रुवते। अन्ये तावत् घटीयन्त्रवदनवरतं प्रवर्तमानः कर्मपाशात्मको दुःखमयः संसार एव बन्ध इति भणन्ति। अपरे पुनः मायातत्कार्यमिथ्याज्ञाननिमित्तः कर्तृत्वभोक्तृत्वादिरेव बन्ध इति कथयन्ति। तत्रेयं विचारणा प्रवर्तते। योऽयमभ्युपगम्यमानो बन्धः स कीदृशः स्यात्? स्वाभाविको वा औपाधिको वा?। न तावदयं स्वाभाविको भवितुमर्हति, यतस्स्वभावसिद्धस्य तस्यानपायित्वात्। न ह्यग्नेः स्वभावसिद्धमौष्ण्यं शिल्पिसहस्रैरप्यपनेतुं शक्यम्। तदुक्तं–सुरेश्वराचार्यैः–'न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः॥' इति। अनपायित्वे च तस्य मोक्षसाधनोपदेशानर्थक्यप्रसङ्गः। शास्त्रस्य हि विविधा उपदेशाः बन्ध-

मोक्षमुद्दिश्यैव प्रवर्तन्ते। यदि बन्धोऽनपायी स्यात् कथञ्च तस्मान्मोक्ष उपदेशसहस्रैरपि सम्भवेत्?। उक्तं हि—यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः। नहि तस्य भवेन्मुक्ति उपदेशशतैरपि (जन्मान्तरशतैरपि)॥ इति। न च बन्धस्य स्वाभाविकत्वेऽपि श्रुतिबलादेव बाध्यत्वं स्यादिति वाच्यम् अशक्यासम्भवोपदेशानुपपत्तेः। न च ज्ञानबलाद्बाध्यत्वं स्यादिति शङ्क्यम्, यतो ज्ञानमज्ञानमेव बाधते, न तद्भिन्नं बाधितुमीष्टे। तस्मान्न स्वाभाविको बन्धः, परिशेषादौपाधिक एवाङ्गीकर्तव्यः।

उपाधिश्चाऽविद्यातत्कार्यदेहादि संसार एव, तत्कृतोऽयं बन्धः। यथा जपाकुसुमोपाधितः स्फटिके लौहित्यभ्रमो भवति तथाऽविद्यादिवशात एव नित्यशुद्धबुद्धमुक्तस्वभावे चिदानन्दमात्रैकरूपप्यात्मनि कर्तृत्वभोक्तृत्वदुःखित्वादिभ्रममात्र एव बन्धः, स चाविद्यक एवेत्यायातम्। यद्याविद्यको बन्धो न स्यात्तदा विद्यया स कथमपि न बाध्यो भवेत्, यतो विद्याबाध्या अविद्यैव, ततोऽविद्यैव बन्ध इत्यभ्युपेयम्। यद्यविद्यायाः पृथग्भूतः कश्चिद् बन्धः स्यात्तर्हि विद्ययाऽविद्याबाधेऽपि न कश्चिन्मुक्तः स्यात्, तथा चानिर्मोक्षप्रसङ्गः, विद्याऽऽनर्थक्यञ्चोभौ दोषौ समापतेताम्, तस्माद् बन्धस्याविद्यकत्वमेव मन्तव्यम्। तदुक्तं वार्तिककारपादैः—'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।' 'अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्॥' 'नचाविद्यातिरेकेण मुक्तेर्बन्धोऽन्य इष्यते।' (बृ. उ. भा. वा. ३। ३। २२) इति।

अपि च यथा बन्धतयाऽवस्थिताऽविद्या बन्ध इत्युच्यते, तथा दुःखतयाऽवस्थितो बन्धोऽपि दुःखमित्युच्यते। यदि दुःखत्वेन बन्धस्यावस्थानं न स्यात्तदाऽसौ द्वेष्यः कथमपि न स्यात्, अतः तस्य दुःखरूपत्वमप्येष्टव्यम्।

तथा च सर्वैरपि प्राणिभिः प्रयत्नतो जिहासितं दुःखमपि न बन्धाद्व्यभूतम् । यद्यपि बन्धदुःखयोरन्वयव्यतिरेकाभ्यां कार्यकारणभावोऽवगम्यते, तथापि तद-नन्यत्वन्यायेन तयोरभेद एव मन्तव्यः ।

अपि चाविद्यकस्यास्य बन्धस्य ज्ञाननिवर्त्यत्वादेव हेतोर्मिथ्यात्वमेवाभ्युपेयम्, न सत्यत्वम् । यदि ज्ञाननिवर्त्यस्य बन्धस्यापि केनचित्सत्यत्वमिष्यते, तर्हि ज्ञाननिवर्त्यानां रज्जुसर्पादीनामपि तेन सत्यत्वमेष्टव्यं भवेत्, न च तदेष्टुं शक्यम् । अतोऽविद्यादिद्वैतलक्षणो ज्ञाननिवर्त्यः सर्वोऽप्ययं प्रपञ्चबन्धो मिथ्यैव । यथा जीवतो देवदत्तस्य गृहाऽसत्त्वं बहिःसत्त्वाभावेऽनुपपद्यमानं बहिःसत्त्वं कल्पयति, तथा बन्धस्य ज्ञाननिवर्त्यत्वं श्रुत्या प्रतिपाद्यमानं तस्य सत्यत्वेऽनुपपद्यमानं तन्मिथ्यात्वमप्यर्थादाक्षिपति ।

ननु—नायमेकान्ततो नियमो यज्ज्ञाननिवर्त्यस्य मिथ्यात्वमेव, सत्यस्यापि ज्ञानप्रागभावस्य ज्ञाननाश्यत्वदर्शनात्, सत्यस्यापि ब्रह्महत्याख्यपापस्य सेतुदर्शनेन निवृत्तिस्मरणात् इति चेन्नैवम्—ज्ञानमात्रबाध्यत्वस्यैव मिथ्यात्वप्रयोजकत्वविवक्षितत्वात् ज्ञानप्रागभावस्य न केवलं ज्ञाननाश्यत्वमपि तु ज्ञानोत्पत्तिसामग्रीविनाश्यत्वमपि, एवं ब्रह्महत्याख्यपापस्यापि न सेतुदर्शनमात्रविनाश्यत्वमपि तु छत्रपादुकावर्जन–दोषोद्घोषण–दूरदेशगामित्व–भिक्षाभोजित्वादि–कर्मकलापसहकृतस्यैव सेतुदर्शनस्य पापविनाशकत्वम्, अन्यथा तत्रत्यम्लेच्छादीनामपि तावतैव पापनाशत्वप्रसङ्गात् ।

नन्वेवं तर्हि बन्धस्यापि कर्मोपासनसहकृतज्ञाननाश्यत्वमस्तु ज्ञानमात्रबाध्यत्वाभावात् कथं तस्य मिथ्यात्वमिति चेन्नैवम्—'नान्यः पन्था विद्यतेऽय-

नाय' इत्यनया प्रकृतन्याचिख्यासितश्रुत्या समुच्चयलक्षणस्य कर्मोपासनसहकारस्य प्रतिषिद्धत्वात् सिंहमेषयोरिव कर्मज्ञानयोर्बाध्यबाधकभावेन तयोरेकदेशानवस्थानात् हेतुस्वरूपकार्यैश्चानयोर्विरोधस्य वक्ष्यमाणत्वाच्च समुच्चयप्रतिषेधो युक्त एव। स्मरति च शारीरकमीमांसायां भगवान् सूत्रकारो व्यासोऽपि–'उपमर्दञ्च' (ब्र. सू. ३ । ४ । १६ ) इति। विवृणोति च तदेतद्भगवान् भाष्यकारो भगवत्पाद –'अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति–'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं जिघ्रेत्' (बृ. २ । ४ । १४ ) इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत, तस्मादपि स्वातन्त्र्यं विद्यायाः । इति तस्मात् ज्ञानमात्रबाध्यत्वमेव बन्धस्येति सिद्धम् ।

तथाचायमात्माऽनाद्यविद्योपाधिवशात् कर्तृत्वभोक्तृत्वाद्यध्यासपूर्वकनानाविधशुभाशुभकर्माणि कुर्वाणः तत्फलोपभोगायोच्चावचानि शरीराणि रचयन् इष्टानिष्टपदार्थेषु रज्यन् मुह्यन् दुःखंश्चासकृज्जन्ममरणादिदुःखान्यनुभवन् पुनः पुनर्घटीचक्रवदितस्ततो बंभ्रमीति । सोऽयमस्याविद्याकामकर्माख्योऽनेकविधो मृत्युपदाभिधेयः सर्वलोकप्रत्यक्षो नैसर्गिको बन्धो विद्यत एव । तस्यास्य बन्धस्य प्रहाणं ज्ञानेनैव सिद्ध्यति, नान्येन केनचित् साधनेन इति विस्पष्टं प्रतिपादयन्ती ज्ञाननिवर्त्यस्यास्य बन्धस्यार्थतो मिथ्यात्वमप्यवगमयन्ती श्रुतिराह–

ॐ वेदाहमेतं पुरुषं महान्तं,
आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति,
नान्यः पन्था विद्यतेऽयनाय ॥

(शु. य. ३१ । १८ । तै. आ. ३ । १३ । श्वे. उ. ३ । ८ + ६ । १५)

एतं=प्रत्यगात्मरूपेण समीपतरवर्तिनं साक्षादपरोक्षं, महान्तं=विभुं—सर्वव्यापकं देशकालवस्तुपरिच्छेदरहितं सर्वोत्कृष्टमित्यर्थः, पुरुषं=सर्वासु शरीरलक्षणासु पूर्षु साक्षिचैतन्यरूपेण शेते वर्तते इति, पूर्णं वाऽनेन सर्वमिति सोऽसौ पुरुषः तमित्यर्थः, अहं वेद=जानामि—अनुभवामीति तत्त्वदर्शिनो महर्षेर्वचनमिदम् । यदाह निरुक्ते यास्कः—'साक्षात्कृतधर्माण ऋषयो बभूवुः' (१ । २०) 'ऋषिः दर्शनात्' (२ । ११) 'तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयंभू: अभ्यानर्षत् तदृषीणामृषित्वमिति विज्ञायते।' (२ । ११) इति । एतेन तज्ज्ञानमपरोक्षं न कस्यापि संभवतीति नास्तिकस्य कस्यचिदाशङ्कां स्वयं मन्त्रद्रष्टा ऋषिः 'वेद—अहमपरोक्षतो जाने' इति स्वानुभवं स्पष्टं प्रदर्शयन्नपनयति । कथंभूतं तं विज्ञेयं पुरुषमित्यत आह—आदित्यवर्णं=आदित्यस्य—सूर्यस्य तेजोमयवर्ण इव वर्णः—स्वप्रकाशस्वरूपं विद्यते यस्य स तं स्वयंज्योतिःस्वभावमित्यर्थः । तथा तमसः=अज्ञानात् परस्तात्—दूरतरं तमोरहितमित्यर्थः । तमःशब्देनात्राविद्योच्यते । एतेन स्वप्रकाशानन्दघनस्यास्य तस्याज्ञानाख्यतमसा सह भ्रान्तजनकल्पिततादात्म्यसम्बन्धसत्त्वेऽपि वास्तवमुभयैक्यलक्षणतादात्म्यसम्बन्धाभावः प्रदर्शितः । एवं महर्षेस्तस्यैतन्मन्त्रद्रष्टुः

पुरुषसाक्षात्कारमभिधाय यः कश्चिदन्योऽप्यधिकारी तद्वदेव तं साक्षाद्विजानाति, सोऽपि अविद्यातत्कार्यलक्षणान्मृत्युबन्धाद्विमुक्तोभवतीत्याह—तमेव—पूर्णं ब्रह्माभिन्नमात्मानं, विदित्वा=ज्ञात्वा—साक्षात्कृत्य मृत्युं=अविद्यातत्कार्यलक्षणं, अत्येति=अतिक्रामति—विनाशयति—परं ब्रह्म गच्छत्यभेदेन ब्रह्मविदिति यावत्। अत्रातीत्युपसर्गस्यैतीति क्रियापदेन साकं सम्बन्धः। तदुक्तं—'छन्दसि परेऽव्यवहितवचनश्च' गत्युपसर्गसंज्ञकाः शब्दाः क्रियापदस्य परे पूर्वे दूरे व्यवहिताश्च भवन्तीति यावत्। मृत्युपदेनात्राविद्यातमः तत्कार्यभूतो मृत्युयुक्तो मिथ्यासंसार एव चोच्यते। तथा चाम्नायते—शतपथब्राह्मणे—'मृत्युर्वा असत् सदमृतं' 'मृत्युर्वै तमो ज्योतिरमृतम्' (बृ. १।३।२८) इति। यद्वा नन्वात्मज्ञाने किमर्थमतियत्नः करणीयः, सन्ति सहस्रमुपायाः सुखप्राप्तये दुःखपरिहाराय चेत्यत आह—तमेव=आत्मानमेव न त्वन्यम्। तथैव श्रुत्यन्तरमपि 'तमेवैकं जानथ आत्मानम्' (मुं. २।२।५) 'तमेव धीरो विज्ञाय' (बृ. ४।४।२१) इतीममर्थं द्रढयति। तस्मादात्मज्ञानमेवैको विद्यते सुखप्राप्तये दुःखपरिहाराय चाभ्युपायो नान्योऽस्त्यतस्तत्प्राप्तय एव मतिमताऽतियत्न आस्थेय इति सिद्धम्। यद्वा मृत्युपदेनात्र साक्षादात्मज्ञाननिवर्त्या—विक्षेपजननी—दुःखवृक्षबीजभूता—मरणादिप्रबन्धदायिनी—आवरणशक्तिमती—अविद्यैवावगन्तव्या। विद्याऽविद्ययोरेव बाध्यबाधकभावाभ्युपगमात्। विद्यया तत्प्रहाणे सति 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इतिन्यायेनाविद्याकार्यभूतस्याखिलस्य विक्षेपादिसंसारस्यापि प्रहाणसम्भवात्।

ननु आदित्यवर्णे स्वप्रकाशे तमोरहिते आत्मनि कथमविद्यातत्कार्याध्यास-

ब्रह्मणो मृत्युप्रतिपाद्यो बन्धोऽवतिष्ठेत ? न ह्यादित्ये प्रचण्डप्रकाशैकात्मनि तमसोऽवस्थानं कथमपि सम्भावयितुं शक्यमिति चेत् विकल्पासहत्वान्नैवम् । तथाहि—किं बन्धस्य तत्रानवस्थानं अयुक्तत्वादुच्यते, किंवाऽभानादिति । आद्य इष्ट एव, यतः स्वप्रकाशासङ्गस्वरूपे आत्मनि वस्तुतः तमोलक्षणबन्धावस्थानस्यायुक्तत्वं भूषणमेव न दूषणम् । न द्वितीयः—यतः 'कर्ता भोक्ता मनुष्योऽहमि'ति प्रत्यक्षानुभवात् तत्र बन्धावस्थानस्याभानमसिद्धम् । तथा च बन्धस्य भासमानत्वादेव तत्र तस्यास्तित्वमभ्युपगम्यत एव । 'प्रतीतिर्नो बलवती भगवती प्रमाणम्' 'नहि प्रत्यक्षदृष्टेऽनुपपन्नं नाम किञ्चित्' इति न्यायात् । अयुक्तमिदमिति नः क्व संप्रतिपन्नं यत्र किल तत्प्रमाणपथातिगं वर्तेत, प्रमाणपथगोचरं तत्कथमयुक्तं भवेत् ? । आदित्येऽपि तमः पेचकैरनुभूयत एवेति प्रकृते दृष्टान्तोऽप्यनुकूल एव । इत्थमात्मनि अविद्यानर्थबन्धं संभाव्य पुरुषज्ञानात् जीवात्मगतानर्थबन्धनिवृत्तिं बोधयन्ती श्रुतिः—'यद्विषयकमज्ञानं तद्विषयकज्ञानेनैव निवर्त्यमिति ज्ञानाज्ञानयोः समानविषयकत्वनियमेन' अन्यज्ञानादन्यविषयकाज्ञाननिवृत्तेरयोगात् जीवपुरुषयोरैक्यमपि सूचयति । तथाचायं प्रयोगः—जीवः पुरुषाभिन्नो भवितुमर्हति तज्ज्ञाननिवर्त्यबन्धाश्रयत्वात्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति । एतेन ज्ञाननिवर्त्यस्य बन्धस्य रज्जुसर्पवत् अध्यस्तत्वमर्थान्मिथ्यात्वमपि सूचितम् ।

ननु—कर्मणा वा उपासनया वाऽन्येन केनचित्साधनेन वा बन्धो निवर्ततामित्याशङ्क्याह—नान्य इत्यादि । अयनाय=संसाराब्धेः पारगमनाय कल्या-

णाय—अनृतबन्धनिवृत्तिलक्षणमोक्षाख्यपरमपदप्राप्तये, अन्यः पन्था आत्मज्ञानं विहाय न विद्यते, आत्मज्ञानादेव ब्रह्मनिर्वाणं कैवल्यं, तस्मादृते न बन्धमुक्तिरन्येनकेनापि कर्मादिसाधनेन सम्पद्यते इत्यर्थः। यद्वा अयनाय-अगमनाय-अपुनरावृत्तये, अनागयनायेति प्राप्ते नञो लोपश्छान्दसः।

अयमत्राभिसन्धिः—न तावत्कर्मकार्यो मोक्षो भवितुमर्हति। यतः श्रुत्यादिषु अमृतत्वकामस्य मुमुक्षोः कृते तत्सिद्धये 'स्वर्गकामस्याग्निहोत्रादिकमिव' किञ्चिदपि विहितं कर्म नोपलभ्यते, प्रत्युत 'नास्त्यकृतः कृतेन'[1] (मु. २।२।१२) 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्'[2] (क. १।२।१०) इत्यादिश्रुतिभिः 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥ (महाभा. शां. प. २४२।७) इत्यादिस्मृतिभिश्च स्पष्टं कर्मणां मोक्षफलकत्वं निषिध्यते, अतो न कर्मसाध्यो मोक्षः। अपि च मोक्षस्य कर्मजन्यत्वाभ्युपगमे 'यत्कृतकं तदनित्यमि'ति न्यायेन तस्यानित्यत्व सम्पद्येत। न च मोक्षस्यानित्यत्वं युज्यते, न चाभ्युपगन्तुं शक्यते, यतः सर्वैरपि श्रुत्यादिभिर्वादिभिश्च तस्य नित्यत्वाभ्युपगमात्।

ननु—'अपाम सोममभृता अभूम'[3] (ऋ. ६।४।११) इतिश्रुत्या

---

१ कृतेन=कर्मणा, अकृत=असाध्यो नित्यसिद्धो मोक्षः, नास्ति=न लभ्यते इत्यर्थः।

२ अध्रुवैः=अनित्यैः कर्मभिः ध्रुवं=नित्यं मोक्षाख्यं फलं न प्राप्यते इत्यर्थः।

३ कदाचिदिन्द्रादिदेवाः विचारयन्ति स्म, कथं वयममृता अभूमेति यतो वयं सोमं, अपाम=पीतवन्त इत्यर्थः।

अमृतत्वकामस्य कृते सोमपानोपलक्षितं कर्म विधीयते, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' (श. ब्रा. २ । ६ । ३ । १) इति च श्रुत्या कर्मजन्यमपि फलमक्षय्यं श्राव्यते, तथा च कथमुच्यते मोक्षसिद्धये विहितं कर्म नोपलभ्यते, कर्मसाध्यस्य तस्यानित्यत्व सम्पद्यते ? इति । अत्राभिदध्महे—पीतसोमानां देवानाममृतत्व ब्रुवाणा उक्तश्रुतिः न तेषां त्रैकालाबाध्यत्वलक्षणं निरतिशय मोक्षपदाभिधेयममृतत्व विवक्षति, किन्तु चिरकालस्थायित्वलक्षण सातिशयममृतत्व प्रतिपादयति । अतएव तदेतत्स्मरति भगवान् व्यासोऽपि 'आभूतसम्प्लवस्थानममृतत्वं हि भाष्यते ।' (वि. पु. २ । ५ । १६) इति । अन्यथा 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते ।'[४] (छा. ८ । १ । ६) [५]'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' (मु. १ । २ । १२) 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।' (गी. ९ । २१) इत्याद्या तेषां क्षयित्वादिप्रतिपादिन्य श्रुतिस्मृतयो विरुध्येरन् । एतेन अक्षय्यश्रुतिरपि व्याख्याता, तस्या अपि चिरस्थायिफलत्वप्रतिपादनपरत्वात्, जन्यभावस्य विनाशित्वनियमेन सुकृतस्याक्षय्यत्वासम्भवात्, 'अतोऽन्यदार्तम्' (बृ. ३ । ४ । २+३ । ५ । १+३ । ७ । २३) इत्यात्मातिरिक्तस्य सर्वस्य नश्वरत्वश्रुतेश्च । तस्मादमृताक्षय्यश्रुति प्ररोचनार्थत्वेनार्थवादरूपा सा बहुतरप्रबल-

---

४ इह=लोके यथा कर्मणा—कृष्यादिना चित.—सम्पादितः धान्यादिलोक क्षीयते=विनश्यति, एव अमुत्र=परस्मिन् लोके पुण्यचितः स्वर्गलोक क्षीयते इत्यर्थः ।

५ कर्मचितान्=कर्मणा सम्पादितान् लोकान्=दक्षिणोत्तरमार्गगम्यान् कर्मफलभूतान् भोग्यपदार्थान् परीक्ष्य=प्रत्यक्षानुमानाभ्यामनित्यत्वेन निश्चित्य ब्राह्मण =अधिकारी निर्वेद=तेभ्यो वैराग्य आयात्=कुर्यात्.

प्रमाणनिरुद्धमर्थं साधयितुं न क्षमते। एवं च सति मोक्षलक्षणामृतत्व-कामस्य मुमुक्षोः कृते कुत्रापि विहितं कर्म नोपलभ्यते, कर्मसाध्यस्य चानित्यत्वमेवेति यत्पूर्वं प्रतिज्ञातं तदविरुद्धं सिद्धम्।

किञ्च भो! 'अमृतत्वकामस्य कृते विहितं कर्म नोपलभ्यते' इत्येतावदेव नावगन्तव्यम्, किन्तु 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्व-मानशुः।' (कै. २) इति श्रुत्या स्पष्टमेव कर्मणा बन्धविच्छेदलक्षणम-मृतत्वं प्रतिषिध्यते, न केवलं प्रतिषिध्यतेऽपि तु ब्रह्मविद्याप्रयोजकेन कर्मसंन्यासलक्षणेन त्यागेनैवामृतत्वं प्रतिपाद्यते इत्यपि बोद्धव्यम्।

ननु—कर्मणां संन्यासो न युक्तः, यतः 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपौर्णमासाभ्यां यजेत' 'कुर्वन्नेवेह कर्माणि जिजीविषे-च्छतं समाः।' (ईश. २) इत्यादिश्रुतिभिः 'नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।' (गी. १८। ७) 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।' (गी. १८। ५) 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषो-ऽश्नुते।' (गी. ३। ४) इत्यादिस्मृतिभिश्च नित्यनैमित्तिकादिकर्म-त्यागस्य निषिद्धत्वात् संन्यासशास्त्रन्तु कर्मानधिकृतविधुरादिविषयं, काम्यकर्मत्यागकर्मफलत्यागविषयं वाऽभ्युपेयम्। उक्तं च गीतासु भगवता—'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। सर्वकर्म-फलत्यागं प्राहुस्त्यागं विचक्षणाः॥' इति। (१८। २) न च संन्यास-मन्तरेण श्रवणाद्यसम्भवात् तदावश्यकत्वमिति वाच्यम्, गृहस्थादेरपि कर्मानवरुद्ध-समये श्रवणादि कर्तुं शक्यत्वात्, जनकयाज्ञवल्क्याजातशत्रुप्रतर्दनप्रभृतीनां गृह-स्थानामेव ब्रह्मनिष्ठत्वस्य चोपनिषत्सु श्रवणात्, तस्मात् कर्मसंन्यासो न न्याय्य, इति चेत् अत्र वदाम.—'एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः कि-

र्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे।' 'एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवाञ्चक्रिरे' 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति[1]।' (श. ब्रा. बृ. ३।५।१) '[2]एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार' (बृ. ४।५।१५) '[3]एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. ४।४।२२) 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः।' (मुं. ३।२।६। तै. आ. १२। ३। कै. उ. ४).

'[4]न्यास इति ब्रह्मा, ब्रह्मा हि परः, परो हि ब्रह्मा तानि वा

१ ब्राह्मणा=ब्रह्मविदो ब्रह्मविविदिषवश्च व्युत्थाय=कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः परमहंसपारिव्राज्यं प्रतिपद्य भिक्षाचर्यं चरन्ति=भिक्षार्थं चरणं भ्रमणं भिक्षाचर्यं चरन्ति=कुर्वन्तीत्यर्थः ।

२ एतावत्=एतावन्मात्रं यदेतन्नेति नेतीत्यादिभिः प्रतिपादितमद्वैतात्मदर्शनमिदं, अरे=मैत्रेयि ! अमृतत्वम्=अन्यसहकारिकारणनिरपेक्षममृतत्वसाधनमित्यर्थः इति=इत्येवमात्मज्ञानं भार्यायै उक्त्वा याज्ञवल्क्यः किं कृतवान् ? यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति तच्चकार विजहार=प्रव्रजितवानित्यर्थः ।

३ एतमेव लोकं=आत्मलोकमेव इच्छन्तः=प्रार्थयन्तो विविदिषन्तः प्रव्राजिनः=प्रव्रजनशीला मुमुक्षवः प्रव्रजन्ति=प्रकर्षेण सर्वाणि कर्माणि सन्न्यस्यन्तीत्यर्थः, 'आग्नेयोऽष्टाकपालो भवति' इतिवत् प्रव्रजन्तीत्यत्र लेडर्थे लडित्यभिप्रेत्य सन्न्यासो विधीयते ।

४ न्यासः=कर्मणां परित्याग ■ एवोत्तमो मोक्षहेतुरिति ब्रह्मा हिरण्यगर्भो मन्यते, स च परः=परमात्मरूपः । तच्छिष्यत्वेन तत्समानज्ञानत्वात् । तानि वा एतानि-पूर्वोक्तानि-तपांसि=सत्यादीनि साधनानि, सन्न्यासमपेक्ष्य, अवराणि=निकृष्टानि, सन्न्यास एक एव सर्वाण्यत्यरेचयत्=अतिक्रान्तवान् सर्वोत्तमत्वेन तत्र तारतम्य विश्रान्तमित्यर्थः । यद्वा ब्रह्मरूपतया सन्न्यासो ब्रह्मत्वेन स्तूयते ।

'तपांसि न्यास एवात्यरेचयत्' (तै. आ. १० । ६२) 'यदहरेव विरजेत् तदहरेव प्रव्रजेत् (जाबालोपनिषद्) 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा' (जा. उ.) 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥' (बृहस्पतिः) 'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥' (मनुः ६। ३८) 'प्रव्रजेद् ब्रह्मचर्येण प्रव्रजेद्वा गृहादपि। वनस्थः प्रव्रजेद्विद्वानातुरो वाऽपि दुःखितः ॥' (अङ्गिरा) 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति।' (गी. १८। ४९) 'योगारूढस्य तस्यैव शमः कारणमुच्यते।' (गी. ६। ३) इत्याद्यनेकश्रुतिस्मृतिप्रभृतिप्रमाणसहस्रैः शिष्टाचारपरम्पराभिश्च सिद्धः संन्यासोऽपह्नोतुमशक्यः। तथा च 'कुर्वन्नेवेह कर्माणि' इत्येवञ्जातीयकानि पूर्वोक्तानि श्रौतानि 'नियतस्य तु' इत्येवञ्जातीयकानि स्मार्तानि वचनान्यविरक्तविषयकानि मन्दविरक्तविषयकानि वेति मन्तव्यानि, न तु वीतरागब्रह्मविद्विषयाणि। अन्यथा सुन्दोपसुन्दन्यायेन परस्परविरुद्धार्थप्रतिपादकानां तेषां श्रुत्यादिवचनानामप्रामाण्यमेव स्यात्, न चास्तिकैः तदङ्गीकर्तुं शक्यते, तथा चोक्तं—'को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः। एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति। तस्मादन्यतरानुगुण्येनान्यतराविरोध्यर्थव्यवस्थापनमेव न्यायः इति विभावयन्तु सुमतयः।

यत्तूक्तं संन्यासशास्त्रं कर्मानधिकृतविधुरादिविषयं, काम्यकर्मत्यागपरं प्रथमाविषयं वाऽभ्युपेयम् इति तन्न सम्यक्, यतः संन्यासशास्त्रस्य तदा कर्मानधि

विषयत्वकल्पन युक्तं स्यात् यदा स्वप्रयुक्ताधिकारिणः कथमपि लाभो न स्यात्, अत्र तु ब्रह्मसाक्षात्कारकामस्य तदधिकारिणः सत्त्वादेव नैव कल्पयितुमुचितम्, संन्यासस्य च ब्रह्मविद्यापरिपाकाङ्गत्वात् नानधिकृतविषयत्वं कथमपि सम्भवति। तदुक्तं च—'तस्मात् ज्ञानं समुद्दिश्य संन्यसेदिह बुद्धिमान्।' इति। अपि चानधिकृतानामपि तेषां सति वैराग्ये—'अथ पुनरव्रती वा व्रती वा स्नातकोऽस्नातको वा उत्सन्नाग्निरनग्निको वा' (जा. प. उ.) इत्यादिना संन्यासस्य पृथग्विधानात् अविशेषश्रवणाच्च न तस्य मुख्यत्वाऽपि कल्पयितुं शक्यम्। काम्यकर्मत्यागविषयस्य कर्मफलत्यागविषयस्य च संन्यासस्य गौणत्वात्, नासौ स्वोपजीव्यं मुख्यं संन्यासं बाधितुमुत्सहते। तथा हि—संन्यासो द्विविधः, मुख्यो गौणश्च, तत्र मुख्यो विद्वद्विविदिषासन्यासभेदेन द्विविधः, अयं हि काषायवस्त्रकाष्ठदण्डज्ञानदण्डादिलिङ्गसमन्वितः चतुर्थाश्रमलक्षणो विज्ञेयः। विदुषा तत्त्वदर्शिना जीवन्मुक्तिसुखमुद्दिश्य क्रियमाणो विद्वत्संन्यासः, मुमुक्षुणा विविदिषुणा साधकेन तत्त्वसाक्षात्कारमुद्दिश्य विधीयमानो विविदिषासंन्यासः। ब्राह्मणोक्तगुणकर्मसमन्वितो विरक्तो द्विजो ह्यत्राधिक्रियते। काष्ठदण्डापेक्षया ज्ञानदण्डस्य मुख्यत्वं शिष्टा मन्यन्ते। यदाहुः—'सर्वान् कामान् परित्यज्याद्वैतब्रह्मात्मचिन्तनम्। अयमेव परो दण्डः पञ्चमुद्रासमन्वितः॥ मुख्यं तत्त्वनिगूढं यत् द्रष्टुं शक्यं यदाश्रयात्। आचष्टे सारभूतं या मुद्रा सेयमुदाहृता॥ मुदं ददाति देवानां द्रावयत्यसुरांस्तथा। मोदनाद् द्रावणाच्चैव मुद्रेति परिकीर्तिता॥ प्रणवस्य तदर्थस्य जपश्च भावनं सदा। ख्याता प्रणवमुद्रेयं संधार्या यतिभिर्मुदा॥ दुग्धामृतस्य बोधस्य स्फीतस्योपनिषद्गवाम्। स्वादनं धारणं शश्वत् धेनुमुद्रेयमुच्यते।

वास्यम्' (शु.य.४० । १) इत्यात्मज्ञानमुपक्रम्य 'तेन त्यक्तेन भुञ्जीथाः '* इति वाक्यशेषे तदङ्गभूतः संन्यासो विधीयते । 'मा गृधः कस्यस्विद्धनम्'इत्यनेनासौ उपपाद्यते,मध्ये च ज्ञानानधिकारिणामवीतरागाणां कृते 'कुर्वन्नेवेह'इति ज्ञानाधिकारप्रतिबन्धपापनिरासाय कर्मकर्तव्यतामभिधायान्ते 'असुर्या नाम ते लोकाः' इत्यनात्मज्ञनिन्दापूर्वकं 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।' इतिसफलात्मज्ञानोपसंहारः क्रियते । सति चैवं विद्याविद्ययोः श्रूयमाणः समुच्चयो विद्यापदेनोपासनामादाय समर्थनीयः , इत्थं 'पूषन्नेकर्षे' (शु. य. ४० । १६ ) इत्यादिना क्रियमाणा उत्तरमार्गप्रार्थनापि संयुज्यते, अन्यथा कर्मसमुच्चितज्ञानवादिमते सा असंगता स्यात् 'न तस्य प्राणा उत्क्रामन्ति ' ( बृ. ४ । ४ । ६ ) इत्यादिना ब्रह्मविदो गतिनिषेधात् । तस्मात् विद्याऽविद्यापदबोधितयो उपासनकर्मणोः कामं समुच्चयः सम्भवेदपि न तु ब्रह्मविद्याकर्मणोः समसमुच्चयः कथमपि सम्भावयितुं शक्यः । पराक्रान्तं चात्राचार्यवरैर्नेहाधिकं वितन्यतेऽस्माभिः ।

×यद्वा 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।' ( शु. य. ४० । १४ ) इति विद्याविद्ययोः पौर्वापर्याभिधानात् 'उभयꣳसह वेदेति' च वेदने एव सहभावश्रवणात् उपक्रमानुरोधेनात्मविद्याविषयत्वेऽपि विरोधकरं

* त्यक्तेन=भावार्थकक्तप्रत्यय , सर्वकर्मत्यागेन सन्यासेनेत्यर्थः, भुञ्जीथाः=सर्वमिदमहमात्मैवेति बुद्धिं पालयेथाः ।

× पूर्वमुपासनाविषयत्वेन परिहारोऽभिहितः, इदानीमुपक्रमानुरोधेनास्तु विद्यापदात्परमात्मविद्याग्रहणम्, तथापि तस्य वाक्यस्य क्रमसमुच्चयपरत्वे विरोधाभावात् समसमुच्चयपरत्वे एव विरोधसम्भवात् तदुपपादयति–यद्वेति ।

समसमुच्चयं परित्यज्य विद्यायाः स्वातन्त्र्यसमर्थकं क्रमसमुच्चयमादाय प्रकृता श्रुतिरियमेवं व्याख्येया । तथाहि-विद्यां=परिपक्वात्मज्ञान लक्षणां,अविद्यां च कर्मलक्षणां यः ता उपायोपेयभावेन वेद=जानाति, सोऽधिकृतः पुरुषोऽविद्यया कर्मलक्षणया विद्योत्पत्तिप्रतिबन्धकं मृत्युपदवेदनीयं पापं तीर्त्वा=विनाश्य, विद्यया=परिपक्वसाक्षात्कार- लक्षणयाऽमृत-निर्वाणमश्नुते । इति ।

अस्मिन् पक्षे 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायां रताः ॥' ( शु. य. ४० । १२ ) इत्यत्र विद्याविद्ययोः श्रूयमाणा निन्दा न ज्ञानार्थकर्मविषया, न परिपक्वात्मविद्याविषया च, किन्तु काम्यकर्मविषया, अपरिपक्वात्म- विद्याविषया च वेदितव्या । काम्यकर्मणस्तु निन्दा प्रसिद्धैव । अपरि- पक्वात्मविद्याविषया निन्दा इत्थमवगन्तव्या । तथाहि-ये क्लिन्नान्तः- करणशुद्धेः प्रागेवापातदृढाऽऽपातात्मविद्योदयमात्र एवात्मानं कृतार्थं मन्यमानाः विहितानि चित्तशोधकानि नित्यादीनि कर्माणि त्यजन्ति, तेषामुपात्तदुरितक्षयाभावात्, विहिताकरणनिमित्तसमुपचितदुरित- निचयत्वाच्चाशुद्धान्तःकरणतया परिपक्वात्मविद्याऽनुदयात् न कैवल्यं, शुभकर्मपरित्यागाच्च नाभ्युदयं लभन्ते, किन्तूभयभ्रष्टास्तेऽत्यन्तमधः पतन्तीत्येवं सा निन्द्यते । इति ।

उपासनमपि मानसं कर्मैव, नाक्रियासाध्ये नित्यसिद्धेऽविद्यानिवृत्तिगम्ये मोक्षे एतस्याप्यवकाशः । अतो विद्यां विना उपासनयाऽपि अविद्याऽपनोदो नैव- कर्तुं शक्यः, विरोधाभावात्, न हि तमः तिमिरं तिरस्करोति । प्रकाशमन्तरेण न हि तमसः प्रध्वंसः कदाचिदपि संभवेत् । अतोऽविद्यामृत्युं विद्यैव

विनाशयति नान्यः कश्चन। तयोरेव परस्परं निवर्त्यनिवर्तकभावः। अत एव 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।' (केन. उ. १। ४) इत्यादिश्रुत्याऽपि स्पष्टमुपासनक्रियया मोक्षलक्षणा ब्रह्मभावाप्तिर्निषिध्यते, तथा च तस्या अपि न ब्रह्मविद्यया समुच्चयः संभावयितुं शक्यः। ब्रह्मविद्या स्वोत्पत्तौ चेतसः शुद्ध्यै एकाग्रतायै च कर्मोपासनेऽपेक्षमाणाऽपि स्वं मोक्षाख्यं फलं प्रसोतुं नान्यत्किमप्यपेक्षते, किन्तु सिद्धा सा स्वतन्त्रैव मोक्षं सम्पादयति।

ननु–नाहं कर्ता भोक्ता किन्तु कूटस्थं ब्रह्मैवास्मीत्येवमात्माकाराखण्डान्तःकरणवृत्तिरेव ब्रह्मविद्या, इति विद्वद्भिरभिधीयते, सा चाविद्याकार्यत्वात् तदन्तर्भूतत्वेन तदविरोधिन्येव स्यात्, कार्यस्य च स्वोपादानेन सह विरोधाभावात्, स्वोपजीव्यां तां कथमपि न निवर्त्तयेति, तथा च कथमुच्यते विद्यैवाविद्यानिवर्तिका इति चेन्नैवम् कार्यकारणयोरप्यग्निसंयोगपटयोर्निवर्त्यनिवर्तकभावदर्शनात्, लोके समानविषयत्वेन क्लृप्तयोः प्रकाशतमसोरिव निवर्त्यनिवर्तकभावस्य ज्ञानाज्ञानयोर्दृढत्वादविरोधोऽनुपपन्नः। वस्तुतो न तादृशवृत्तिरूपमेव ब्रह्मज्ञानमपि तु तदारूढचैतन्यप्रकाश एव तदविद्यातन्मूलप्रपञ्चनिवर्तकमभ्युपगम्यते। अज्ञानस्य प्रकाशनिवर्त्यत्वनियमेन जडरूपवृत्तिनिवर्त्यत्वायोगात्। यद्यपि स्वरूपेण चैतन्यस्याविद्यादिसाक्षितया तदनिवर्तकत्वेऽप्यखण्डाकारवृत्त्युपारूढस्य तस्य तन्निवर्तकत्वोपपत्तेः। यदाहुरभियुक्ताः–'तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत्। सूर्यकान्तमुपारुह्य तन्न्यायं तत्र योजयेत्॥' इति।

ननु–ब्रह्मज्ञाने विशेषणविधया प्रविष्टाया वृत्तेर्मिथ्यात्वान्निवर्त्यत्वेन कथं

निवर्तकत्वं, भ्रमत्वेन च कथं प्रामाण्यं स्याताम् इति । तत्र, निवर्त्यत्वेऽपि सलिलवर्तिरजोऽपनयनसामर्थ्यशालिकतकरजोवत् निवर्तकत्वस्य, भ्रमत्वेऽपि सम्यक्फलप्रदायिसंवादिभ्रमवत् मिथ्यात्वेऽपि प्रतिबिम्बादेर्वास्तविकबिम्बाद्यनुमानवच्च तत्त्ववेदकप्रामाण्यस्य च सम्भवात्, अविद्याविरोधित्वेन ब्रह्माकारवृत्त्युपारूढबोधस्य मोक्षसाधनत्वस्येष्टत्वात् ।

तस्मात् ज्ञानकर्मणोः समसमुच्चयाभावात् केवलं निरपेक्षमेव तत् ब्रह्मात्मैक्यज्ञानं मृत्युपदगम्यमज्ञानबन्धं विनाश्य सदासिद्धं स्वस्वरूपावस्थानलक्षणं कैवल्यं समर्पयतीति भगवत्याः श्रुतेरुपदेशोऽयं सर्वथा युक्त्यादितोऽप्यनुकूल एवेति दिक् ।

× × ×

## ( ७३ )

### ( एकस्यैवाद्वितीयस्य सर्वकारणस्य सर्वात्मनो भगवतोऽनेकरूपैः प्राकट्यवर्णनम् )

प्रजापतिः परमेश्वरः त्रिगुणात्मकमायागर्भभूते व्यष्टिसमष्टिप्रपञ्चे स्वप्रतिबिम्बरूपं समर्प्यान्तर्यामित्वेन संचरति । नानाजगदाकारेण परिणममानमायाऽधिष्ठानत्वेन नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽपि स नानाकारेण जायमानः सन् प्रतीयते । अतोऽस्य प्रपञ्चस्य स एक एवोपादानकारणं, अखिलाधिपतित्वान्निमित्तमपि कारणं स एव । तमेतं मायोपहितं चराचरविश्वोद्भवस्थितिलयानामा-

श्रेयभूतमपि वस्तुतो मायाऽतिगं प्रपञ्चोपशमं विशुद्धं परमात्मानं सर्वात्मानं ध्यानपरायणा धीराः प्राज्ञा योगिन एव परितो द्रष्टुं शक्नुवन्तीत्याह—

**ॐ प्रजापतिश्चरति गर्भेऽन्तः,**
**अजायमानो बहुधा विजायते ।**
**तस्य योनिं परिपश्यन्ति धीराः,**
**तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥**

( शु. य. ३१ । १९ ) ( तै. आ. ३ । १३ )

यः सर्वात्मा एक एवाद्वितीयः प्रजापतिः=परमेश्वरः सर्वेषां प्राणिनामन्तर्हृदि स्थितः सन् गर्भे चरति=मायायां गर्भभूते तत्सृष्टव्यष्टिसमष्टि—कार्यकरण-संघाते पिण्डब्रह्माण्डरूपे स्वप्रतिबिम्बरूपं समर्प्य प्रविशतीत्यर्थः । '**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति**' (छा. ६ । ३ । २) श्रुतेः । वस्तुतो यः, अजायमानः=अनुत्पद्यमानो नित्यः सन् बहुधा=कार्यकारण-रूपेण विजायते=मायया चराचरविश्वात्मनोत्पद्यते इत्यर्थः । धीराः=ब्रह्मविदो मनीषिणो योगिन इत्यर्थः '**धीरो मनीषी ज्ञः प्राज्ञः**' इति निघण्टुः । तस्य प्रजापतेः योनिं=पारमार्थिकं सर्वाधिष्ठानलक्षणं स्वरूपं परिपश्यन्ति='**सर्वं खल्विदं ब्रह्म**' ( छा. ३ । १४ । १ ) '**अहं ब्रह्मास्मि**' ( बृ. १ । ४ । १० ) इति सर्वाभेदेन विजानन्ति । यतो विश्वा=विश्वानि—सर्वाणि भुवनानि=भूरादयो लोकाः, तत्स्थानि चराचरभूतानि च तस्मिन् ह=तस्मिन्नेव परमकारणे सर्वाधिष्ठातरि ब्रह्मणि स्वस्वरूपे तस्थुः=स्थितानि । **अतः सर्वं तदात्मकमेव अहमपि तदात्मक एवेति ब्रह्माद्वैतभावनां सदा सर्वत्र काल्पनिक-नामरूपभावनापरित्यागेन दृढीकुर्यादिति भावः ।**

अथवा परमार्थतो यस्य सर्वव्यापकस्य निर्गुणस्य निराकारस्य सर्वान्तर्यामिरूपेण सर्वत्रानुगतत्वेन च विद्यमानस्य नित्यस्याजस्य प्रकृतिनियन्तुः प्रजापतेः परमेश्वरस्य स्वेच्छयैव स्वभक्तानामनुग्रहाय सज्जनानां बुद्ध्यारोहाय नास्तिकानां मुखभङ्गाय पापिष्ठानां दुष्टानां विध्वंसाय चोपासनादिसौकर्यसिद्धये च सद्धर्मप्रतिष्ठायै च भक्तेप्सित-चतुर्भुजपञ्चमुखद्विभुजाद्याकारविशेषाणामविमानुपात्यद्भुतविविध-दिव्यचरित्रशालिनां विशिष्टावतारविग्रहाणां प्रादुर्भावकरणं ' अत्यन्त-दुर्लक्ष्यमपि मामनन्तसुखनिधिममी मदाराधकाः सुजना भक्ताः पुरुप-धौरेयाः साक्षात्पश्यन्तु ' इत्येवमादि बहुप्रयोजनकमित्याह—प्रजा-पतिश्चरतीति ।

प्रजापतिः=परमेश्वरः, रामकृष्णाद्यवतारविग्रहान् परिग्रहीतुं स्वेच्छया कौशल्यादेवक्यादिमातॄणां गर्भेऽन्तः चरति=प्रविशतीव प्रतीयते, परमार्थतो यः अजायमानः=अजन्मा परमात्मा भक्तानुग्रहादिविविधप्रयोजनानि साधयितुं स्वाम-निर्वाच्यां मायां वशीकृत्य बहुधा=रामादिविविधदिव्यरूपेण जायते=प्रादुर्भवति युगे युगे संभवामीति यावत् । एतेन प्रकृतिनियन्तुः परमेश्वरस्य तस्य न कर्मायत्तं जन्म किन्तु स्वेच्छायत्तं सम्यगप्रच्युतज्ञानबलैश्वर्यादिशालि दिव्यं तदिति सूच्यते । अत एव स्मर्यते गीतासु—' अजोऽपि सन्नव्य-यात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्म-मायया ॥ ' ( गी. ४ । ६ ) इति । एतेन स्वयमजायमानः कथं विजायमानः स्यात् ? विजायमानस्याजायमानत्वं वा कथमवतिष्ठेत ? सुंदोपसुंदन्यायेन परस्पर-विरोधे हि नैकस्याप्यवस्थानं स्यात् ? अथापि. कस्मै प्रयोजनायाजायमानो

विजायते ? इत्याद्याः शङ्काः परास्ताः, परमार्थतोऽजायमानस्य तस्य मायया जायमानत्वाभ्युपगमात्, मायिकं तत्पारमार्थिकमजायमानत्वं न विरोद्धुमीष्टे। विषमसत्ताकत्वेन तयोर्विरोधाभावात् प्रयोजनस्योपदर्शितत्वाच्च। तस्य परमेश्वरस्य साकारदिव्यविग्रहविधरणशीलस्य योनिं=निजमसाधारणं शुद्धं सच्चिदानन्दस्वरूपं धीराः=ध्यानपरायणा अनन्तसुखेप्सवो भक्ताः परिपश्यन्ति। शिष्टं समानम्। इति।

× × ×

## (७४)

(परब्रह्ममहत्त्वसाक्षात्कारेण सर्वाभीष्टसिद्धिर्भवति विश्वविन्नपथ)

परमेश्वरस्यानुपमदिव्यमहत्त्वं वर्णयन् तद्विदामपि तदाह—

ॐ यो देवेभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।
यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे॥

(शु. य. ३१। २०। २१। तैत्ति. आ. ३। १३। १४)

यः=पूर्णः पुरुषोत्तमः प्रजापतिर्वस्तुतः सत्यज्ञानानन्तानन्द एक एवाद्वितीयोऽप्यजायमानोऽपि माययाऽनिर्वाच्ययाऽनेक इव बहुधा जायमान इव च प्रतीयमानः परमेश्वरः, देवेभ्यः=दैवीसम्पद्भ्यो विद्वद्भ्यः—विदुषां कृते इति यावत्, 'विद्वांसो हि देवाः' (३। ७) इति शतपथश्रुतेः। आतपति=

पारमार्थिकं स्वं याथात्म्यं प्रकाशयति—स्वयं तदात्मना द्योतते इत्यर्थः, देवानां देवत्वसिद्धये तत्तद्हृदयेषु स्वात्मानं प्रकटयतीति यावत्। यश्च परमात्मा देवानां पुरोहितः=सम्मुखे स्थितः, पुरः=अग्रे—सम्मुखे सर्वेषु चराचरपदार्थेषु धीयते स्थाप्यतेऽसौ पारमार्थिकशुद्धापरिच्छिन्नात्मकः सन्। धा—क्तः। अखण्डानन्दनिधिरसौ परमात्मा सर्वत्र पुरः स्थितोऽनुभूयते विद्वद्भिः। अनर्घ्याणां हीराणामिवातिधीराणां वीराणां निर्मलेक्षणस्वान्तानां विदुषां यदा तत्प्रसादात्प्रत्यगात्मरूपेण तस्य साक्षात्कारः प्रादुर्भवति, तदा केवलमखण्डानन्दमयमेव सर्वं जगद्वभासत इति भावः। यदाहुः श्रीमच्छङ्करभगवत्पादाचार्याः—'एको भानुस्तटस्थः प्रतिफलनवशाद्यस्त्वनेकोदकान्त—र्नानात्वं यात्युपाधिस्थितिगतिसमतां चापि तद्वत्परात्मा। भूतेषूच्चावचेषु प्रतिफलित इवाभाति तावत्स्वभावाऽवच्छिन्नो यः परन्तु स्फुटमनुपहतो भाति तावत्स्वभावैः॥' इति (श. श्लो. ५२) सर्वत्र स्थितो यः परात्मा पूर्णाद्वयात्मना ब्रह्मविद्भ्यः प्रादुर्भवति, स एव देवेभ्यः=हिरण्यगर्भादिभ्यः सकाशादपि पूर्वं जातः=मायां स्वामाश्रित्य विश्वसर्गस्थित्यादिविधानाय सर्वस्मात् प्रथममेवावर्तत इत्यर्थः। यः सृष्ट्यादौ हिरण्यगर्भमुखान् देवान् सृष्ट्वा तेभ्यो वैदिकं ज्ञानं विश्वकल्याणाय प्रयच्छति, तस्मै ब्राह्मये रुचाय नमः। ब्रह्मणोऽपत्यभूतः स्वरूपभूतो ब्रह्मानन्दो ब्राह्मिः। इञि टिलोपः। तस्मै ब्राह्मये, कीदृशाय? रोचतेऽसौ रुचस्तस्मै रुचाय='इगुपधेति कप्रत्ययः' स्वतःप्रकाशमानाय नमः=चित्तस्य सदाऽऽभिमुख्यं तदेकनिष्ठत्वमस्तु इत्यर्थः, ज्ञायमानानन्दस्यैव परमपुरुषार्थत्वात्। 'अज्ञातं ब्रह्म विषयो ज्ञातं सचत्प्रयोजनम्।' इत्यभियुक्तोक्तेश्चेति भावः। यद्वा देवानां पुरोहितः=बृहस्पतिर्बभूव 'बृहस्पतिर्देवानां पुरोहितः' इति श्रुतेः। यश्च देवेभ्यः पूर्वो जातः=

प्रथमां पत्रहिरण्यगर्भरूपेण प्रकटोऽभूत् 'हिरण्यगर्भः समवर्तताग्रे' (ऋ. १० । १२१ । १) इति श्रुतेः । तादृशाय रुचाय=रोचमानाय ब्राह्मये= ब्रह्मणा वेदेन प्रतिपाद्याय नमः=नमस्कारोऽस्त्वित्यर्थः ।

देवाः=ब्रह्मनिष्ठा उदारचरिताः पुरातनाः सत्पुरुषा इत्यर्थः, रुचं=शोभन- रुचिकरं परमप्रीत्यास्पदं, ब्राह्मं=ब्रह्मण इदं शान्तमानन्दमयं दिव्यं भर्गो ज्योतिः, अग्रे=प्रथमं, जनयन्तः=स्वहृदये प्रादुर्भावयन्तः सन्तः पश्चात् तत्=ब्रह्मस्वरूपं विवेकादिसाधनसम्पन्नेभ्यः तत्त्वबुभुत्सुभ्यः, अब्रुवन्=श्रुतिवचोभिः उक्तः- बोधयामासुः इति यावत् । एतेन ब्रह्मस्वरूपानुभवमन्तरेण दीयमानस्तदुपदेशो न फलाय कल्पते इत्यतः पूर्वं तदनुभवं यथार्थं सम्पाद्य पश्चाद् येऽन्यस्तदुपदेशो दातव्यो नान्यथेति ध्वनितम् । यद्वा देवाः=ज्ञानविदः, अन्येषां जिज्ञासूना- मग्रे=सम्मुखे, तत्=ससाधनं ब्रह्मज्ञानं अब्रुवन्=ब्रुवन्तु—उपदिशन्तु इत्यर्थः । किं कुर्वन्तः? ब्राह्मं रुचं=ब्रह्मज्योतिः जनयन्तः=आत्मशक्तिपातेनापरोक्षं तेषां हृदि समुत्पादयन्तः । तदुक्तमाचार्यशङ्करस्वामिभिः—'**आचार्याल्लब्धबोधा अपि विधिवशतः सन्निधौ संस्थितानां त्रेधा तापं च पापं सकरुणहृदयाः स्वोक्तिभिः क्षालयन्ति ।**' (श. श्लो.) इति । ब्रह्मानुभवस्य फलमाह- यस्तु कश्चित् ब्राह्मणो=ब्रह्मभवितुकामः—उत्तमाधिकारी विप्रः, एवं=ब्रह्मनिष्ठस- द्गुरोः सकाशात् ब्रह्मोपदेशं लब्ध्वा मनननिदिध्यासनपरिपाकं विधाय प्रत्यग- भिन्नं ब्रह्मतत्त्वं विद्यात्=विजानीयात्, तस्य कृतब्रह्मसाक्षात्कारस्य महापुरुषस्य ब्राह्मणस्य देवाः=विषयप्रकाशकानि चक्षुरादीनि बाह्येन्द्रियाणि, मनः आदौ या- भ्यन्तरेन्द्रियाणि इत्यर्थः । '**नैनद् देवा आप्नुवन्पूर्वमर्शत्**' (य. ४० । ४) इत्यत्रेवात्रापि द्योतनात् शब्दादिविषयज्ञापनाद्धेतोर्देवपदेनेन्द्रियाणां ग्रहण- मवगन्तव्यम् । वशे=स्वाधीनानि, असन्=भवन्ति । **निरतिशयानन्दरूपं ब्रह्म**

साक्षात्कृस्य स्थितानां स्थितप्रज्ञानां ब्रह्मविदां स्वोपादानाज्ञाननाशात् तुच्छविषयाभिलाषस्य निवृत्तत्वात् अनुपमातिवेलाप्राकृतमहत्त्वभाजि परब्रह्मणि मनसो विन्यस्तत्वाच्च सर्वेन्द्रियवश्यताऽनायासेन सम्पद्यत इति भावः। यद्वा देवाः=इन्द्रियाद्यधिष्ठातारो महावीर्या इन्द्रादयोऽपि वशे असन्=वश्याः—अप्रतिकूला भवन्ति, ब्रह्मविदां तत्फलञ्च प्रति देवा विघ्नं न कुर्वन्ति, यतः स लब्धसर्वात्मभावो ब्रह्मवित् देवानामपि स्वरूपभूतोऽन्तर्यामी परमात्मा भवति, अतो देवानां स्वस्यात्मनः प्रतिकूलतया न कथमपि प्रयतनः सम्भवति, तस्माद्देवा एतदधीना न त्वस्य देवा ईश्वराः। एतमर्थं वाजसनेयिनो विस्पष्टमामनन्ति—' य एवं वेदाहं ब्रह्मास्मीति स इदᳪ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते, आत्मा ह्येषाᳪ स भवति।' (बृ. १।४।१०) इति। अपि च ब्रह्मविद्यायां सत्यां 'प्रदीपे सति तमःकार्यस्येव' अविद्याकार्यविघ्नानुपपत्तेः, देवाः कथं केन वा हेतुना कस्य विघ्नं कुर्युः, अवसरानुपपत्तेः देववश्यता स्वतः सिद्धा भवतीति भावः।

अथाधिदैवतम्—यः=प्रजापतिरादित्यरूपो देवेभ्योऽर्थाय, आतपति=द्योतते यश्च देवानां पुरोहितः=सर्वकार्येष्वग्रे नीतः, यश्च देवेभ्यः सकाशात्पूर्वं जातः=प्रथममुत्पन्नः, तस्मै आदित्याय नमः। कीदृशाय। रोचतेऽसौ रुचस्तस्मै दीप्यमानाय। तथा ब्राह्मये=ब्रह्मणोऽपत्यं ब्राह्मिः तस्मै, ब्रह्मावयवभूताय वा। देवाः=प्राणाः, रुचं=शोभनं ब्राह्मं=ब्रह्मणोऽपत्यं आदित्यं जनयन्तः=उत्पादयन्तः, अग्रे=प्रथमं तत् वचोऽब्रुवन्=ऊचुः। 'ब्राह्मो जातो' इति निपातः। तत्किमत आह—यो ब्राह्मणः हे आदित्य! त्वा=त्वामेवमुक्तविधिना उत्पन्नं विद्यात्—जानीयात्, तस्य ब्राह्मणस्य देवा वशे असन्=वश्या भवन्ति, आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः।

अत्रेदं बोध्यम्—देवशब्दस्य सन्ति भूयांसोऽर्था इति। तदुक्तं—निरुक्तो यास्कमहर्षिणा—'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा' (नि. ७।१५) दानात्=सम्पद्विज्ञानवृष्ट्यादिदानकर्तृत्वात्, दीपनात्=सदुपदेशेन स्वदीप्त्या स्वसत्तया स्वस्फूर्त्या च वस्तूनां प्रकाशकत्वाच्च स्वपितरः, आचार्याः, विद्वांसः, इन्द्रियाणि, परमेश्वरः, इन्द्रादयश्च देवशब्दवाच्या भवन्ति, द्युनिवासादिन्द्रादीनामपि देवसंज्ञत्वम्, द्योतनात्=स्वतः प्रकाशनात् परमेश्वरस्य मुख्यदेवत्वमिति। यदाहुः—'महाभाग्यत्वात् देवताया एक एवात्मा बहुधा स्तूयते, एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति।' (नि. ७।१।४) इति। अत एव देवशब्दप्रकृतिभूतस्य दिवुधातोः क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिलक्षणा बहवोऽर्था भगवता पाणिनिना स्मर्यमाणाः संगच्छन्ते। तथाहि—यो दीव्यति—क्रीडति स्वात्मना स्वात्मनि स्वयमेवानन्दतो रमते, क्रीडावद्वाऽनायासेन सहायान्तरानपेक्षयैव स्वशक्त्या निर्माति सर्वं प्रभूताश्चर्यास्पदं जगत्, क्रीडयति—रमयति वा भक्तानभीप्सितार्थप्रदानेन सोऽसौ देवः। यश्च विजिगीषते दुष्टान् परिभूय विजेतुमिच्छति, परैरजेयो यं कोऽपि जेतुं न पारयति। यश्च व्यवहरति निग्रहानुग्रहाभ्यां धार्मिकाधार्मिकाणां—न्याय्यं करोति, समुपदिशति च जिज्ञासुभ्यस्तत्त्वम्, व्यवहारयति वाऽन्यान् स्वशक्त्या। यश्च चराचरं विश्वं विद्योतयति द्योतते च स्वयमेव। यश्च स्तूयते प्रशस्यतेऽहर्दिवं सर्वैः। यश्च स्वयं शोकादिविमुक्तः सन् मोदते धार्मिकान् भक्तांश्च तथा विधाय मोदयति। यश्च स्वात्मनि माद्यति, अनात्मनि देहादौ माद्यतो विषयमदमत्तान् व्यथयति च। यश्च प्रलये स्वयमेकलः

तेऽन्यान् चराचरपदार्थानपि स्वस्मिन् स्थापयति च। यश्च काम-
ते सृष्टयादौ एकस्य स्वस्य बहूनि रूपाणि। यश्च सर्वत्रानुगच्छति,
ानाति च सर्वं, माप्नोति च सर्वत्र तत्त्वदृशामिति सोऽसौ देवः
रमेश्वर। एवमन्यार्थानुगामिन्यो व्युत्पत्तयोऽपि मतिमद्भिः स्वयमुह्या इति।

× × ×

## ( ७५ )

( परमेश्वरस्योपहितस्वरूपवर्णनं, तत्स्वरूपादिप्राप्तये तदभ्यर्थनञ्च )

परमेश्वरस्य सात्त्विकं विशिष्टं स्वरूपं वर्णयन् तत्स्वरूपादिप्राप्त्यर्थं तमभ्यर्थयते–

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥

( शु य ३१। २२ )

हे विमलसौन्दर्यसारसर्वस्व! हे अनन्तदिव्यशक्तिनिधे! हे
भखण्डानन्दपीयूषपूर्णपाथोनिधे! हे विष्णो! परमेश्वर! ते=तव,
श्रीः लक्ष्मीश्च पत्न्यौ=जायास्थानीये त्वद्रूपे त्वत्स्वरूपलक्षणे स्तः
इत्यर्थः। या श्रयति=सेवतेऽनन्तं परमेश्वरं सा श्री=पराशक्तिः 'पराऽस्य
शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।' ( श्वे. ६।
८ ) इति श्रुते.। यद्वा यया सर्वजनाश्रयणीयो भवति भगवान् सा श्रीः,

श्रीयते=सेव्यते सर्वैः सा श्रीः=निरङ्कुशैश्वर्यसम्पल्लक्षणा इत्यर्थः । यद्वा ऋग्यजुःसामलक्षणा दिव्यज्ञानरूपा विद्या श्रीः '**ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्**' इति श्रुतेः । यद्वा श्रयन्ते सर्वे प्राणिनो यां सा श्रीः=भूदेवी इत्यर्थः । उक्तञ्च—'**समुद्रवसने ! देवि ! पर्वतस्तनमण्डले ! । विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥**' इति । लक्ष्मीः=यया लक्ष्यते—ज्ञायते यः सौन्दर्यनिधिर्भगवान् जनैः सा इति अनुपमदिव्यशोभा सर्वातिशायिसौन्दर्यमित्यर्थः । तदुक्तमभियुक्तैः—'**यस्य सौन्दर्यलेशेन सकलं सुन्दरीकृतम् । सः सौन्दर्यनिधिर्ज्ञेयो भगवान् सर्वसुन्दरः ॥**' इति । यद्वा लक्षयति—पश्यति नीतिज्ञं धार्मिकं जनं या सा लक्ष्मीः=**समुद्रोद्भवा सरसिजनिलया त्रिभुवनविभूत्यधिष्ठात्री—अच्युतवल्लभा देवी इत्यर्थः** 'लक्ष दर्शनाङ्कनयोः' चुरादिः । ययोराभासमात्रेणापि सर्वलोकः श्लाघ्यतामेति ते एते श्रीलक्ष्म्यौ सम्पत्सौन्दर्यरूपे परमेश्वरस्य विभूतिप्रभावौ स्तः । तथा अहोरात्रे=अहश्च रात्रिश्च ते, भगवतस्तव पार्श्वे=पार्श्वस्थानीये स्तः । यद्वा अहः प्रकाशकत्वात्, तेन भवबन्धभेत्री मोक्षजननी विद्याशक्तिः, रात्रेश्चान्धकारात्मत्वात् तथा क्लेशमूला संसारजननी अविद्याशक्तिश्च उपलक्षणीये । तयोः परमेश्वराश्रयविषयत्वेन तत्पार्श्वस्थानीयत्वमविरुद्धमिति भावः । यद्वा ताभ्यां परापरे प्रकृती लक्ष्येते । तथाहि—जीवभूता परा=चेतनत्वेन प्रकृष्टा प्रकृतिः अहःपदलक्ष्या,। पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्कारभेदेनाष्टधा भिन्ना अपरा, जडत्वेन बन्धरूपत्वेन च निकृष्टा प्रकृतिः रात्रिपदलक्ष्या । तयोः चिदचिद्रूपत्वरूपत्वेन विश्वरूपस्य तस्य पार्श्वस्थानीयत्वसम्भवात् । तथा च स्मर्यते गीतासु—'**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां ।**

जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥' (गी. ७ । ४–५) इति । एतेन कृत्स्नस्य जडाजडरूपस्य परापराप्रकृतिलक्षणस्य विश्वस्य परमेश्वरकार्यत्वात् कार्यस्य कारणानन्यत्वात् उमे अपीमे प्रकृती पातञ्जलनामिव परमेश्वरान्नातिरिच्येते इति पार्श्वपदेन सूच्यते । यद्वा अह्ना सात्त्विकाः पदार्थाः, रात्र्या च राजसाः तामसाश्च पदार्था ग्राह्याः, तेषु सर्वेषु पदार्थेषु भगवत्पार्श्वस्थानीयेषु भगवद्विग्रहचिन्तनं विधेयमिति भावः । तदुक्तं श्रीमद्भागवते–' खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् । सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ॥' (११ । २ । ४१) इति । नक्षत्राणि=गगनगाः ताराः तव रूपम् । तवैव तेजसा भासमानत्वात् तद्रूपेण स्थितत्वाच्च । अधिनिशमूर्ध्वं दृष्टिनिक्षेपे समेपामाश्चर्यवत् नभोनैल्यसहितानि नक्षत्राणि भूयांसि प्रतीयन्ते, तत्र भगवद्रूपभावनया विक्षिप्तमपि चित्तं प्रसीदतीति विश्वजनीनम् । अश्विनौ=द्यावापृथिव्यौ, तव व्यात्तं=विकासितमुखस्थानीये अनुव्याते व्याप्नुतस्ताविति यश्विनौ, तदुक्तं श्रुत्यन्तरे–' अश्विनौ द्यावापृथिव्यौ इमे हीदं सर्वमश्नुवातामि' ति । एवं स्मर्यते महाभारतेऽपि–' व्यात्ते मे रोदसी पार्थ ! कान्तिश्चाभ्यधिका स्थिता । क्रमणाच्चाप्यहं पार्थ ! विष्णुरित्यभिसंज्ञितः ॥' (भ. भा. शा. ३४१ । ४२) इति । द्यावापृथिव्यौ रोदसी ।

य ईदृशो भगवान् त्वमसि, तं त्वमद्विमप्रतिष्ठितं त्वां याचे इष्णन्=कर्मफलमिच्छन् सन्, इषाण=इच्छ, ' इषु इच्छायां ' विकरणप्रत्ययव्यत्ययः । यद्वा ' इष आभीक्ष्ण्ये ' क्र्यादिः, धातूनामनेकार्थत्वादन्वेऽर्थः । क्रिमेषणीयं ?

तत्राह—अमुं=परलोकं मे=मम इषाण=मम परलोक समीचीनोऽस्त्वितीच्छेत्यर्थ अथवा इष्णन्=मोक्षात्मकल्याणमिच्छन् सन् त्वां प्रार्थये। किं प्रार्थ्यते इत्यत आह—इषाण=इच्छ—अस्य कल्याण भवेदितीच्छा कुर्विति, अमोघेच्छत्वान्मेष्टसम्पादने त्वमिच्छामात्रेणापि समर्थोऽसीति भाव। यद्वा त्वामेवैकमात्मानं इष्णन्=परमेण प्रेम्णा इच्छन् सदाऽह वर्ते, अत एव त्वमपि मामात्मान इषाणः इच्छ। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।' (४।११) इति गीतासु त्वयोक्तत्वात्। आवयोर्द्वयोरात्मैकत्वात्, आत्मातिरिक्तस्येष्टतमस्य परमप्रेमास्पदीभूतस्यान्यस्य पदार्थस्याभावात्; आत्मानमेवस्तुतस्त्वदभिन्न सन्त भ्रान्त्या भिन्नमिव भासमान मामावरणापोहेनाभिन्न कर्तुमिच्छ, इदञ्च तव स्वार्थहितसाधनमेवास्तीत्यतस्त्वं तदर्थं प्रयतस्व, नित्यशुद्धबुद्धमुक्तानन्तानन्दाद्वैतपूर्णस्वरूपे मा स्थापय, येनाह जीवन्मुक्तः कृतकृत्यो भूयासमितिभावः। किञ्च अमु=प्रारब्धकर्मविमोकानन्तर विदेहकैवल्य मोक्ष मे=मम इषाण=इच्छ 'विमुक्तश्च विमुच्यते' (क. ५।१) इति श्रुते। सर्वलोक मे=मम, इषाण=सर्वलोकात्मक सर्वो माऽह भवेयमिती छेत्यर्थ। तथा च श्रूयते—'तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इद सर्वं भवति' (बृ १।४।१०) स्मर्यते च—'यथा जल जले क्षिप्त क्षीरे क्षीर घृते घृतम्। अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः॥' (उत्तरगीता २।२) इति। महाभागा ब्रह्मविद्या समर्प्य महनीय तत्फल सर्वभावापत्त्यात्मकमपि समर्पयेति भाव।

× × ×

## ( ७६ )

### ( सर्वरूपस्य विभक्तेष्वविभक्तस्य परमात्मनो निरूपणम् )

यस्मात् स एव सर्वस्य विश्वस्याभिन्ननिमित्तोपादानकारणमतः स एव सर्वं न ततः किञ्चिद्विभक्तमस्ति, तस्माद्विश्वेऽग्न्यादिषु सर्वेषु पदार्थेषु स एवोत-प्रोतत्वेन विभाव्यते, इत्याह—

**ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।**
**तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥**

( शु. य. ३२ । १ । श्वे. उ. ४ । २ )

अग्निः, तदेव=प्रसिद्धं सर्वकारणं सर्वाधिष्ठानमात्मतत्त्वं ब्रह्मैव, आदित्यः सूर्योऽपि तदेव, एवशब्दः सर्वत्र सम्बध्यते । वायुः—पवनोऽपि तदेव, चन्द्रमाः तत्=तदेव, उ एवार्थे । शुक्रं=शुक्लं—शुभ्रं तत्, ज्योतिष्मद्वा; यद्वा शुक्रं=दीप्यमानं नक्षत्रादिकं तदेव । ब्रह्म=वेदत्रयीलक्षणं तदेव, यद्वा ब्रह्म=हिरण्यगर्भरूपं तदेव । ताः=प्रसिद्धाः, आपः—जलानि, तदुपलक्षितानि पञ्चभूतानि तदेव । सः=प्रसिद्धः प्रजापतिः विराडपि तदेव ब्रह्म; सर्वमाधेयमधिष्ठानस्वरूपमेव यद्यज्जगद-विद्यादृष्ट्या नानाविधं प्रतीयते, तत्सर्वं विद्यादृष्ट्याऽखण्डैकरसं ब्रह्मैव; ब्रह्मणोऽन्यत्किमपि नास्ति, ब्रह्मैव सर्वं, तदेवात्मतत्त्वम्, तदेव सर्वे देवाः, अत एव 'एष उ ह्येव सर्वे देवाः' इति श्रुत्यन्तर-मपि सर्वदेवभेदं वारयति, तस्मात् सोऽहमिति सर्वाभिन्नं पूर्णाद्वैत-मखण्डैकरसं तत्त्वस्वरूपतः सादरं मुमुक्षुः सततं विभावयेदिति भावः ।' यद्वा अग्निः=वाक्समष्टिः, आदित्यः=चक्षुःसमष्टिः, वायु

चन्द्रमा—मनःसमष्टिः, शुक्र=विराट्—स्थूलभूतसमष्टिः, ब्रह्म=हिरण्यगर्भोऽन्तःकरणसमष्टिः, आपः=जिह्वेन्द्रियसमष्टिः, प्रजापतिः=उपस्थेन्द्रियसमष्टिः, एतदितरसमष्टीनामप्युपलक्षणं द्रष्टव्यम्। परमेश्वर एव स्वमाययाऽऽधिदैविकाधुपाधीन् समष्टिरूपान् सृष्ट्वा तेष्वनुप्रविश्याग्न्यादित्याद्याख्या लब्ध्वा विश्वरूपेण स्थितोऽतोऽग्न्यादिकं सर्वं विश्वं ब्रह्मैवेत्यवगत्य सततं तदेवाखण्डैकरसं पूर्णमद्वैतं प्रत्यगभिन्नं ब्रह्म परिचिन्तनीयम्।

ननु—'योऽग्नौ तिष्ठन् अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरम्' 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरम्' (बृ. ३।७।५) इत्यादिबृहदारण्यकोक्तान्तर्यामिब्राह्मणगोक्तरीत्याऽग्न्यादिभिः साकं ब्रह्मणः शरीरशरीरिभावनिबन्धनमेव सामानाधिकरण्यमभ्युपगन्तव्यम्, नत्वखण्डैकरसपूर्णाद्वैतब्रह्मलक्षणं बाधसामानाधिकरण्यम्। इति चेन्नैवम्, यतः 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्।' (शु. य. ४०।८) 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं।' (मु. १।१।६) इत्यादिश्रुतिभिः परमार्थतोऽवगतमशरीरमेव सत् ब्रह्म कथं सर्वशरीरं स्यात्? इति केनचित्पृष्टे सति किमस्ति ते सदुत्तरम्?। 'इन्द्रो मायाभिः पुरुरूप ईयते' (ऋ. ६।४७।१८) इति श्रुतिमवलम्ब्य मायात एव पुरुरूपलक्षणं सर्वशरीरं स्यादित्यपक्षपातया स्वमत्या ब्रूषे? चेत्; तर्हि समायातं बाधसामानाधिकरण्यमेव; यतो मायासमुज्जृम्भितशरीरमात्रस्य विद्यया बाध्यत्वात्। अन्तर्यामिब्राह्मणं तु नियम्यत्वेन शरीरसमानत्वेन शरीरमिवाग्न्यादिकं गमयति, न तु पारमार्थिकं शरीरशरीरिभावमपि प्रत्याययति।

यतोऽन्यव्याप्त्याऽन्यस्य सामानाधिकरण्यं न हि सम्भवति; आकाशेन घटस्येवाकाशो घट इति । तर्हि—अपरमार्थशरीरशरीरिभावस्योपदेशोऽन्तर्यामिब्राह्मणेन कथं विहितः? इति चेच्छृणु तावत्सावधानेन।

शास्त्राणि आचार्याश्चासत्येन भेदेन निर्भेदसत्यवस्तूपदेशं योग्यं मन्यन्ते। अत एव पारमार्थिकाद्वैतब्रह्मोपदेशं प्रति तद्भिन्नपदार्थानां प्रसक्तिमात्रमपेक्ष्यते न तु सत्यत्वम् । असत्येनापि पदार्थेनास्ति सत्यवस्तूपदेशो लोकानुभवसिद्धोऽपि । धूलिकल्पिताश्वपादचिह्नैर-श्वपदेत्यादिरिव । अत एवोक्तं हरिणाऽपि—'उपायाः शिक्षमाणानां बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥' इति। तथा चाग्न्यादिपदार्थभेदस्य मायया कल्पितत्वेन बाध्यत्वस्यैव विवक्षणात्, सिद्धमशरीरस्य ब्रह्मणोऽग्न्यादिभिः सह बाधसामानाधिकरण्यम्, न तु पारमार्थिकशरीरशरीरिभावनिबन्धनं सामानाधिकरण्यम् । तस्मात् यथा कुलालनिर्मितमृदश्वगजादौ गजोऽयमश्वोऽयमिति बुद्धौ तत्तन्नामरूपाकारोल्लेखे सत्यपि मृन्मात्रमेव सत्यं विवेकिनामवभासते, गजाद्याकारस्य मिथ्यात्वनिश्चयान्न तस्य सत्यतया मानं भवति। तथा ब्रह्माश्रितमायानिर्मिताग्न्यादित्यादिपदार्थेष्वपि तत्तन्नामरूपाकारोल्लेखे सत्यपि ब्रह्ममात्रमेव सत्यं तत्र पश्यन्ति तत्त्वदर्शिनो महापुरुषाः, न त्वग्न्यादिषु ब्रह्मभिन्नं सत्यत्वमवगच्छन्तीत्यलम् ।

× × ×

## (७७)

( कालकारणस्य स्वमकाशस्य निरंशस्य परमात्मनो ग्रहणाभाव-प्रतिपादनम् )

सर्वजन्यजनकस्य कालस्यापि कालं स्वयमकालं तज्जनकत्वेन तस्याप्यधिष्ठानमपरिच्छिन्नमनाकारं परमात्मानं कश्चिदपि नैव परिग्रहीतुं शक्नोति, यतस्तस्योर्ध्वत्वाद्याकारविशेषाभावात् रूपाद्यभावाच्चेत्येतद्दर्शयति—

**ॐ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।**
**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ॥**

( शु. य. ३२ । २ । थे ४ । १९ )

सर्वे निमेषाः=पक्ष्मपातपरिमिताः सूक्ष्माः कालविशेषाः, उपलक्षणमिदम्—त्रुटिकाष्ठाघटयादीनाम् । ते सर्वे कालाः, पुरुषात्=परिपूर्णात् परमेश्वरात् अधिजज्ञिरे=आधिक्येनोत्पन्नाः । कीदृशात् पुरुषात ? विद्युतः=विशेषेण द्योतते इति विद्युत्—तस्मात् स्वयंप्रकाशमानात । कश्चित् विद्युत.=विद्युत्पर्जन्यस्तनयित्नवः पुरुषादधिजज्ञिरे इति व्याचष्टे । कश्चिदपि पुरुषः एनम्=प्रकृतं कालजनकं परमात्मानं, ऊर्ध्वम्=स्तम्भवदूर्ध्वाकारं, तिर्यञ्चम्=उपरिस्थितशालावंशवत्तिर्यगाकारं वा मध्ये गृहान्तर्वर्तिदेववत्तत्कश्चिन्मध्येऽवस्थितं वा न परिजग्रभत्=नैव परिगृह्णाति—परिग्रहीतुं न शक्नोति । ऊर्ध्वाद्याकाराणा तस्मिन्नभावात् । यद्वा ऊर्ध्वम्=उपरिभागे, तिर्यञ्चम्=चतुर्दिक्षु, मध्ये=मध्यदेशेऽपि न परिजग्रभत्=परिग्रहीतुं न शक्नुयात् यतस्तस्यापरिच्छिन्नत्वादद्वितीयत्वात् निरंशत्वान्निरवयवत्वाच्च । न ह्यसौ प्रत्यक्षादीनां विषयः, रूपादिगुणहीनत्वात् ' स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते ' ( बृ. ३ । ९ । २६ )

इति श्रुतेः। नापि मनसो विषयः, क्रियाभावात्तस्य। न हि क्रिया-हीनेऽनवच्छिन्ने वस्तुनि क्रियावदनुगतिमात्रेणापूर्वधर्मोपजननं संभवति, घटादिनाऽनुगते गगने तददर्शनात्। मनोऽपि वस्तूनि संकल्पयत्तदानीमीदृगिति वा तादृगिति वा संकल्पयति। न चैवदु-भयमात्मनि संभवति। तस्मान्मन आत्मनो निवर्तते। तं तन्न ग्रहीतुं शक्नोति। तथा च श्रुतिः—'अप्राप्य मनसा सह' (तै. उ. २।९) इति। जात्यादीनां प्रवृत्तिनिमित्तानामभावान्न शब्दोऽपि प्रकृतमात्मानं ग्राहयितुं शक्नोति 'यतो वाचो निवर्तन्ते' (तै. २।९) इति श्रुतेः। एतच्च नैष्कर्म्यसिद्धावुक्तमाचार्य्येण—'षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः। नाऽऽत्मन्यन्यतमोऽमीषां तेनाऽऽत्मा नाभिधीयते॥' इति। ग्रहणनिषेधोऽयं ज्ञाननिषेधस्योपलक्षकः। सर्वत्रानुगतत्वात् विश्वात्मत्वाच्च नासौ केनापि हातुमपि शक्यः। तथा च पुरुषः सर्वात्मा नोपादेयो न वा हेयो भवितुमर्हति। हानोपादाने हि मूर्त-वस्तुविषये नामूर्ते प्रत्यगात्मनि ते संभवतः। अनेन सर्वे विशेषाः प्रतिषिद्धाः भवन्ति, तेषां परिग्रहपरित्यागात्मकत्वात्, तस्मान्नि-र्विशेषोऽक्रियो नित्यशुद्धः केवलः पूर्णोऽद्वैत एवायमिति सिद्धम्।

× × ×

## ( ७८ )

( सर्वासु दिक्षु व्याप्तस्य सर्वमयस्य प्रत्यगभिन्नब्रह्मतत्त्वस्य विशदवर्णनम् )

परमात्मना सृष्टं दिगादिकं जगत्, हिरण्यगर्भविराडादिमूर्तिश्च स्वाधिष्ठानं परमात्मानमेवोपलक्षयतीत्याह—

ॐ एषो ह देवः प्रदिशोऽनु सर्वाः,
पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः,
प्रत्यङ् जनाः ! तिष्ठति सर्वतोमुखः ॥

( शु. य ३२ । ४ । श्वे २ । १६ )

एष =साक्षादपरोक्षः, अङ्गुल्यग्रेण हृदयाम स्पृशतीत्येतत्पदार्थः । ह= प्रसिद्धः सकलशास्त्रतात्पर्यप्रतिपाद्यो विद्वद्भिरनुभूयमान । देव.=स्वप्रकाशः परमात्मा । सर्वाः प्रदिशः=प्राच्याद्या दिश उपदिशश्चाग्नेयाद्याः, अनु=अनुप्रविश्य, तिष्ठति=सर्वतः तिर्यगूर्ध्वमधश्च व्याप्यावस्थितो भवति । हे जनाः !=हे सज्जनाः तत्त्वबुभुत्सवः ! एष पूर्वः =सर्वस्मात्प्रथमो हिरण्यगर्भात्मना जातः=उत्पन्नः । स उ=स एव, गर्भे अन्त =ब्रह्माण्डरूपस्य गर्भस्य मध्ये तिष्ठति=वर्तते । देवतिर्यगादिविविधोपाधिस्वरूपेण जातोऽपि स एव । इतः पर जनिष्यमाण =उत्पत्स्यमानोऽपि स एव । प्रत्यङ्=प्रतिपदार्थमञ्चति–व्याप्नोति, यद्वा प्रत्यङ्=देहादिभ्यो जडावृतपरिच्छिन्नदु खरूपेभ्यः प्रातिकूल्येन–चैतन्यसत्यज्ञानानन्दरूपेण स्वात्मानमञ्चति=प्रकाशते इति । सर्वतोमुख =सर्वतो विश्वतो मुखाद्यवयवा यस्य स, यद्वा सर्वतो मुखानि रूपाद्युपलब्धिद्वाराणि चक्षुरादीनि यस्यासौ सर्वतोमुख.=विराट्–अचिन्त्यशक्तिरित्यर्थः, सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयति, तादृशोऽयं जगदधिष्ठानत्वेन तिष्ठति । तथा च सम्प्रदायविदां वचन्–'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।' इति तदुक्तं–चतुःश्लोकीभागवतेऽपि–'एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा ॥' इति ।

षष्ठे सप्तमे च स्कन्धेऽपि—' एवं जागरणादीनि जीवस्थानानि चात्मनः । मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ( भा. ६ । १७ । ४४ ) ' संसारो गुणकर्मनिबन्धनः । अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥ ' ( भा. ७ । ७ । २७ ) । विष्णुपुराणेऽपि— ' विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत् । द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥ ' इत्यध्यारोपापवादौ निरूपितौ । ' इति ।

× × ×

## ( ७९ )

### ( सर्वलोकाधारस्य तस्यैकस्यैव परमेश्वरस्य समाराधनं कर्तव्यम् )

येनेमे सर्वे लोका निर्मिता विधृताश्च स एक एव लोकेश्वरो भगवान् श्रद्धाभक्तिभ्यां समाराधनीय इत्याह—

ॐ येन द्यौरुग्रा पृथिवी च दृढा,
येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः,
कस्मै देवाय हविषा विधेम ॥

(शु य ३२ । ६ । ऋ. १० । १२१ । ५ । अथर्व. ४ । २४ । तै. स. ४ । १ । ८ । ५)

येन=परमात्मना, द्यौः, उग्रा=उद्गूर्णा वृष्टिदा कृतेति शेषः, वृष्टिदानाय शक्तिः प्रदत्तेतियावत् यद्वा उग्रा=अशनिनिपातातिवृष्ट्यादिना क्रूरा कृता इत्यर्थः । पृथिवी च येन दृढा=सर्वप्राणिधारणपोषणवृष्टिग्रहणान्ननिष्पादनक्षमा कृता ।

सत्त्वाभावात् । आह स्म भगवान् कृष्णद्वैपायन –' तदनन्यत्वमारम्भण-शब्दादिभ्यः ' ( ब्र. सू. २।१।१४ ) इति । अस्यायमर्थः–न विद्यते ऽन्यत् यस्मात् तत् अनन्यम्, अनन्यस्य भावोऽनन्यत्वम् । तस्यानन्यत्वं तदनन्यत्वम् । अनेन तद्व्यतिरेकेणेतरशून्यत्वमवगम्यते । तथा च वाचारम्भणश्रुतिसमालोचनकालिकं बाधायामेव सामानाधिकरण्यमत्र स्पष्टं विनिश्चीयते । तथा चारोपितस्य द्वैतप्रपञ्चस्य संसारस्य न भावो नाप्यभावः तस्मात्पृथग्भूतः, किन्त्वधिष्ठान-ब्रह्मात्मक एव तौ । अधिष्ठानमेवाध्यस्तस्य स्वरूपं तदभावस्यापीति सिद्धान्तरहस्यम् । कथमन्यदन्यस्य स्वरूपं स्यादिति चेन्न, अन्यत्वस्यानङ्गीकारात् तदेव तदित्यभ्युपगमात् इति भावः । अथर्वसंहितायां ' एकनीडमि 'ति स्थाने एकरूपमिति पाठ उपलभ्यते । एवं प्रपञ्चस्यान्यत्वाभावलक्षणं बाधं निरूप्य ब्रह्मणस्तदधिष्ठानत्वसिद्धये तत्रोतप्रोतत्व प्रतिपादयति–तस्मिन्–वस्तुनि ब्रह्मणि, इद सर्वं=चराचर विश्वं समेति=सगच्छते–विलीनं भवति, प्रलये एकत्वेनावस्थितं भवतीति यावत् । व्येति च=सर्गकाले निर्गच्छति उद्भवतीत्यर्थः । अत एव स परमात्मा प्रजासु ओतः प्रोतश्च, ऊर्ध्वतन्तुषु पट इव शरीरादिभावेन ओतः, तिर्यक्तन्तुषु पट इव शरीरिभावेन प्रोतश्च । यथा पटे ओतप्रोततन्तुव्यतिरेकेण पटस्य पृथगस्तित्वं न सिद्ध्यति, तथा चराचरविश्वस्मिन्नोतप्रोतपरमात्मव्यतिरेकेण विश्वस्य पृथगस्तित्वं न सिद्ध्यतीति भावः । स्मृतमेतत् भागवतेऽपि–' यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु । ' ( भा. ९ । ९ । ७ ) ' ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग ! यथा पटः । ' ( भा. १० । १६ । ३५ ) । ' वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च । भगवद्रूप-

मखिलं नान्यद् वस्त्विह किञ्चन ॥' (भा. १०।१४।५६) इति। विष्णुपुराणेऽपि—'अहं हरिः सर्वमिदं जनार्दनो, नान्यत्ततः कारणकार्यजातम्।' (१।२२।८७) 'भूतानि सर्वाणि तथाऽन्नमेतत्, अहं च विष्णुर्न ततोऽन्यदस्ति।' 'अत्रात्मव्यतिरेकेण द्वितीयं नैव पश्यति।' इति। कीदृशः सः? विभूः=कार्यकारणरूपेण विविधं भवतीति। अतः सर्वमिदमहञ्च स एवेति विभावयेदिति भावः।

× × ×

## ( ८१ )

( ब्रह्मनिष्ठसद्गुरोः सकाशाद् ब्रह्मात्मतत्त्वस्योपदेशं गृहीत्वा मानवो महान् पूज्यो भवति )

ब्रह्मनिष्ठस्य विद्वद्गुरोः कर्तव्यमुपदिशति—

ॐ प्र तद् वोचेदमृतं नु विद्वान्,
गन्धर्वो धाम विभृतं गुहा सत्।
त्रीणि पदानि निहिता गुहाऽस्य,
यस्तानि वेद स पितुः पिताऽसत् ॥

(शु. य. ३२।९। अथर्व. २।१।२६)

गन्धर्वः=गां—वेदवाचं सार्थां धारयति—विचारयतीति—वेदान्तरहस्यवेत्ता-विद्वान् महात्मा इत्यर्थः। नु=क्षिप्रम्। अमृतं=शाश्वतमविनाशि, तत् ब्रह्म, प्रवोचेत्=प्रब्रूयात् तत्त्वजिज्ञासुभ्यः स्वशरणागतेभ्यो योग्यशिष्येभ्य इति शेषः। 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' (छा. ४।९।३)

पोषकत्वात्, सर्वकर्मफलानां वा विधानकर्ता=निर्माता, तदध्यक्षत्वात्। स एव विश्वा=सर्वाणि, भुवनानि=भूतजातानि, धामानि=स्थानानि च वेद=जानाति, सर्वज्ञत्वात्। एवं तस्य सर्वहितकर्तृत्वादिकमभिधाय तत्त्वविज्ञानवतां महात्मनां स्वस्वरूपावस्थानमाह—यत्र=परमेश्वरस्यानन्तानन्दपूर्णे पारमार्थिकस्वरूपे, देवाः=तत्त्वविज्ञानवन्तो महात्मानः, अमृतं=शाश्वतं परब्रह्मलक्षणं मोक्षसुखं, आनशानाः=व्याप्नुवन्तः, तृतीये=क्षराक्षरापेक्षया तृतीये ताभ्यां व्याकृताव्याकृताभ्यामतीते पुरुषोत्तमपदाख्ये, धामनि=स्थाने, अधि—अभि—सर्वतः, ऐरयन्त=प्राप्तवन्त. इत्यर्थः। 'ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति।' (मु. ३। २। ५) इति श्रुतेः। क्षराक्षरशब्दवाच्यकार्यकारणोपाधिद्वयविनिर्मुक्तं शुद्धं परमात्मानं तृतीयं तत्त्वविज्ञाप्य भगवान् श्रीकृष्णोऽपि गीतासु प्रतिपादयति—' क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥' (गी. १५। १६–१७) इति। भूतशब्दो भवनधर्मवद्वस्तुमात्रवाची, सर्वाणि भूतानि=सर्वं कार्यजातमित्यर्थः। कूटस्थः=कूट इव—राशिरिव स्थितः कूटस्थः शिलाराशिः पर्वत इव कार्यराशीभूत इत्यर्थः। यद्वा कूटो माया वञ्चनेति पर्यायः तद्रूपेण स्थितः कूटस्थः पारमेश्वरमायाशक्तिरूपः कारणोपाधिरूपः, स च संसारबीजानन्त्यान् क्षरतीत्यक्षर उच्यते, 'अक्षरात्परतः परः' (मु. २। १। २ इत्यादिश्रुतिदर्शनात्। एताभ्यां क्षराक्षराभ्यां जडराशिभ्यामन्यः=विलक्षणः तृतीयः, उत्तमः=नित्यशुद्धबुद्धमुक्तस्वभावः पुरुषः 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे. ३। ९) इति श्रुत्युक्तः परिपूर्णानन्दस्वभावः परमात्मेत्युदाहृ इत्यर्थः। केचन—देवाः=अग्न्यादयः, तृतीये धामन्=धामनि स्थाने स्वर्गलो अध्यैरयन्त=स्वेच्छया वर्तन्ते। कीदृशा देवाः। अमृतं=मोक्षप्रापकं ज्ञानं य

यत्किं आनशाना:=व्याप्नुवाना:, अश्नुवते इति आनशाना: 'बहुलं छन्दसि' इत्यश्नोह्लादित्वेन द्वित्वे शानचि अभ्यासस्य नुगागमः । ब्रह्मनिष्ठं ज्ञानं प्राप्ताः सन्तः स्वर्गे देवा मोदन्ते इति भावः । इति, यद्वा अमृतमानशाना:=सुधां पिबन्तः स्वर्गे लोके रमन्ते, इति त सर्वं विदित्वा परमेश्वरः तत्तदनुष्ठितकाम्य-कर्मानुसारेण फलं स्वर्गाख्यं प्रयच्छतीति भावः इति व्याचक्षते ।

× × ×

## ( ८३ )

### ('सर्वमिदमहञ्च ब्रह्मैवे'ति विज्ञानादेव ब्रह्मनिर्वाणलक्षणो मोक्षः समधिगतो भवति )

'सर्वमिदमहञ्च पूर्णात्मा ब्रह्मैवे'ति अद्वैतविज्ञानवतो महात्मनो ब्रह्म-निर्वाणलक्षणां मुक्तिं प्रतिपादयति—

**ॐ परीत्य भूतानि परीत्य लोकान्,**
**परीत्य सर्वाः प्रदिशो दिशश्च ।**
**उपस्थाय प्रथमजामृतस्य,**
**आत्मनाऽऽत्मानमभि संविवेश ॥**

( शु. य. ३२ । ११ । तै. आ. १० । १ )

भूतानि परीत्य=सर्वाणि भूतानि ब्रह्मात्मत्वेन विज्ञाय, लोकान्=भूरादीन् सर्वान् परीत्य=ब्रह्मरूपान् ज्ञात्वा, सर्वाः प्रदिशः=आग्नेयकोणाद्याः, दिशः= पूर्वाद्याः च तद्रूपा ज्ञात्वा । यद्वा भूतानि परीत्य=सर्वेषु भूतेष्वहं पूर्णात्मा समन्वितोऽस्मि, सर्वाणि भूतानि च मयि समन्वितानि सन्ति वत्रौत-

प्रोतत्वेन स्वात्मानं परिज्ञाय, लोकान् परीत्य=सर्वेषु लोकेष्वहं पूर्णोऽस्मि, सर्वे च ते भूरादयो लोका मयि प्रत्यगभिन्ने ब्रह्मणि समन्विता सन्तीति परिज्ञाय, एवमग्रेऽपि बोध्यम्। प्रथमजाम्=प्रथमोत्पन्नां—तत्त्वविज्ञानसाधनां वेदत्रयीवाचं, उपस्थाय=संसेव्य—श्रवणादिकं कृत्वा ऋतम्भरां प्रज्ञामखण्डब्रह्माकारां समवाप्य अद्वैतब्रह्मज्ञाननिष्ठो विद्वान्, ऋतस्य—यज्ञस्यात्मानं=यज्ञाधिष्ठातारं व्यापकं विष्णुं परमात्मानं, आत्मना=स्वस्वरूपेण, अभिसंविवेश=सर्वतः संप्रविशति=पूर्णानन्द-निधिर्ब्रह्मैव भवतीत्यर्थः। 'ब्रह्म वेद ब्रह्मैव भवति' (मुं ३।२।९) 'स एव तदभवत्' (बृ. १।४।१०) इत्यादिश्रुतिशतप्रतिपन्नं ब्रह्मरूपं निर्वाणं पूर्वमज्ञानवशादप्राप्तमिव स्थितं मोक्षमधिगच्छति 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४।४।६) इत्यादिश्रुतेः 'अवस्थितेरिति काशकृत्स्नः' (ब्र. सू. १।४।२२) इति ब्रह्म-मीमांसान्यायाच्चेति यावत्। 'अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वम-सृज्यत' इति श्रुतेः, प्रथमजा वाक् वेदरूपा। ब्रह्मैव=वेद एवेत्यर्थः।

× × ×

## ( ८४ )

( मुमुक्षवोऽज्ञाननिवृत्त्यैव सदाप्राप्तं स्वस्वरूपं ब्रह्म प्राप्नुवन्ति )

ये मुमुक्षवस्ते शास्त्राचार्यकृपाकटाक्षात् समधिगतपूर्णब्रह्मात्मतत्त्वाः सन्तः संसारतद्बीजाज्ञानं बाधित्वा तदेव भवन्तीत्याहुः—

ॐ परि द्यावापृथिवी सद्य इत्वा,
परि लोकान् परि दिशः परि स्वः।

**ऋतस्य तन्तुं विततं विचृत्य,**
**तदपश्यत्तदभवत्तदासीत् ॥**

( शु. य. ३२ । १२ । तै. आ. १० । १ )

परीत्युपसर्गः इत्वेत्यनेन संबध्यते । द्यावापृथिवी=लोकद्वयं, सद्यः=शीघ्रं, परि इत्वा=परीत्य ब्रह्मरूपेण ज्ञात्वा, यद्वा परि इत्वा=सद्यो बोधक्षण एव सर्वतो व्याप्येत्यर्थः । लोकान् परीत्य, दिशः परीत्य, स्वः=आदित्यं, स्वर्गलोकं वा परीत्य सर्वं ब्रह्मैवेति निश्चित्य, सर्वं सर्वतो व्याप्य वा । अनेन सर्वात्मज्ञानं सर्वव्याप्तिश्चाभिहिता । ननु—'परीत्य भूतानि परीत्य लोकान्' इत्यादिमन्त्रेण यदुक्तं तदेव पुनः कथमुच्यते इति चेन्नैव दोषः, गुह्यं सूक्ष्मं वस्तु पुनः पुनरुपदिष्टं चित्तमारोहतीत्यभिसंधाय पुनः कथनम् । दुर्विज्ञेयत्वाद्ब्रह्मात्मतत्त्वस्य पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वेदः, कथं नु नाम संसारिणामव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं सत् संसारनिवृत्तये स्यादित्यस्मदाचार्यवर्योक्तेः । उक्तञ्च सुरेश्वराचार्यै—'पौनरुक्त्यं न दोषोऽत्र शब्देनार्थेन वा भवेत् । अभ्यासेन गरीयस्त्वमर्थस्य प्रतिपाद्यते ॥' ( दक्षिणामूर्ति–मानसोल्लासे ८ । ४ ) इति । ऋतस्य=यज्ञस्य शास्त्रविहितशुभकर्मणः—भगवदुपासनस्य चेति यावत् । तन्तुं=इतिकर्तव्यतां—सप्रकारमनुष्ठानं विततं=अन्तःकरणस्य शुद्धये चाञ्चल्यनिवृत्तये च प्रसारितं—शास्त्राचार्यैर्विस्तरत उपदिष्टं यथा, तथा विचृत्य=फलपर्यन्तं कृत्वा समाप्येत्यर्थः । यद्वा ऋतस्य=व्यावहारिकसत्यस्य द्वैतप्रपञ्चस्य विततं=विस्तृतं स्वकार्यव्यापीत्यर्थः तन्तुं=तन्तुवद्बन्धनहेतुं परिणाम्युपादानकारणमज्ञानं, विचृत्य=तत्त्वज्ञानेन

तत्=प्रत्यगभिन्नं ब्रह्म, अपश्यत्=पश्यति—साक्षात्करोति। तत् अभवत्=भवति, तत् आसीत्=वस्तुगत्या तदेवास्ति। अज्ञाननिवृत्तिरेव ब्रह्मदर्शनं भवनं चेति भावः। '**तदेव सन्तः तदु तद्भवामः**' इति '**ब्रह्मैव सन् ब्रह्माप्येति**' (बृ. ४।४।६) इति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्त्यैव सदा प्राप्तब्रह्मप्राप्तिरित्यर्थः।

× × ×

## (८५)

### ( परमेश्वरप्राप्त्यर्थं घनमेधाप्राप्तये च तत्प्रार्थना )

परमेश्वरप्राप्त्यर्थं घनमेधाप्राप्तये च तमन्तर्यामिणं प्रार्थयते—

**ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।**
**सनिं मेधामयासिषᳬ स्वाहा॥**

(शु. य. ३२।१३। ऋ. १।१८।६। साम, १७१। तै. आ १०।१।४)

सदसः=जगत सीदत्यस्मिन्नव्याकृते कारणे सर्वं जगदिति तद्व्युत्पत्तेः। पतिं=पालकमन्तर्यामिणं, अयासिषं=अहं कदा प्राप्स्यामि? इत्याशासे, छन्दसि कालानियमात् भविष्यदुपलक्षणार्थं भूतनिर्देशः। या प्रापणे धातुः, लुङ् मिपोऽमादेशः, सिच इडागमः, धातोः सगागमश्च। कीदृशं तं? । अद्भुतं=आश्चर्यरूपम्। मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽनायासेन निर्मातृत्वात्तथा। इन्द्रस्य=देवराजस्यापि प्रियं=परमप्रीत्यास्पदम्, सोऽप्यन्तर्यामिणं तं कदा प्राप्तो भविष्यामीत्येवमाशास्ते। अत एव सर्वैरन्यैः काम्यं=अपेक्षणीय—अभीप्सित-

मित्यर्थः। सनिं=कर्मफलस्य दातारम्, मेधां=श्रुताधीतग्रन्थधारणशक्तिं प्रयच्छन्त-मिति शेषः।

यद्वा सदसस्पतिं=देवसभायाः स्वामिनं चित्सभेश्वरं महादेवं, अयासिषं=शरणं प्राप्तवानस्मीत्यर्थः। कीदृशं? अद्भुतं=महान्तं—अचिन्त्यशक्तिमित्यर्थः यद्वा अद्भुतं=लीलामात्रेणाश्चर्यकार्यकरमित्यर्थः। इन्द्रस्य=इन्द्रियाणां स्वामिना जीवस्य प्रियं=मित्रं। यद्वा इन्द्रस्य दैवीसम्पद्राजो भक्तस्य प्रियं=परमप्रेमास्पदम्, सत्यात्मत्वात्। काम्यं=कामसम्पत्करं, यद्वा कमनीयं सौन्दर्यमाधुर्यसुधानिधित्वात्, कामनीयं वा धनमेधार्थिभिः। सनिं=अभीष्टदातारं, मेधां प्रयच्छन्तं तमेवंभूतं परमेश्वरमयासिषमित्यन्वयः। यद्वा सनिं=द्रव्यधनलाभं, मेधां=विशिष्टबुद्धिञ्च लब्धुं अयासिषं=परमेश्वरमहं याचे, द्विकर्मको धातुः। स्वाहा=सुहुतमस्तु।

× × ×

## ( ८६ )

### ( प्रतिभैकाग्र्यपावित्र्यादिप्रशस्तगुणयुक्तायै मेधायै परमेश्वरस्य देवानाञ्च प्रार्थना )

प्रशस्तां मेधां प्रार्थयते—

**ॐ यां मेधां देवगणाः पितरश्चोपासते।**
**तया मामद्य मेधयाऽग्ने! मेधाविनं कुरु स्वाहा॥**

तत्=प्रत्यगभिन्नं ब्रह्म, अपश्यत्=पश्यति–साक्षात्करोति। तत् अभवत्=भवति, तत् आसीत्=वस्तुगत्या तदेवास्ति। अज्ञाननिवृत्तिरेव ब्रह्मदर्शनं भवनं चेति भावः। '**तदेव सन्तः तदु तद्भवामः**' इति '**ब्रह्मैव सन् ब्रह्माप्येति**' (बृ. ४।४।६) इति श्रुतेश्च ब्रह्मरूपस्य जीवस्याज्ञाननिवृत्त्यैव सदा प्राप्तब्रह्मप्राप्तिरित्यर्थः।

× × ×

## (८५)

### ( परमेश्वरप्राप्त्यर्थं धनमेधाप्राप्तये च तत्प्रार्थना )

परमेश्वरप्राप्त्यर्थं धनमेधाप्राप्तये च तमन्तर्यामिणं प्रार्थयते—

**ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।**
**सनिं मेधामयासिषꣳ स्वाहा॥**

( शु. य. ३२।१३। ऋ. १।१८।६। साम, १७१। तै. आ १०।१।४ )

सदसः=जगतः सीदत्यस्मिन्नव्याकृते कारणे सर्वं जगदिति तद्व्युत्पत्तेः। पतिं=पालकमन्तर्यामिणं, अयासिषं=अहं कदा प्राप्स्यामि? इत्याशासे, छन्दसि कालानियमात् भविष्यदुपलक्षणार्थं भूतनिर्देशः। या प्रापणे धातुः, लुङ् मिपोऽमादेशः, सिच इडागमः, धातोः सगागमश्च। कीदृशं तं?। अद्भुतं=आश्चर्यरूपम्। मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽनायासेन निर्मातृत्वात्तत्त्वम्। इन्द्रस्य=देवराजस्यापि प्रियं=परमप्रीत्यास्पदम्, सोऽप्यन्तर्यामिणं तं कदा प्राप्तो भविष्यामीत्येवमाशास्ते। अत [illegible] सर्वैरन्यैः काम्यं=अपेक्षणीयं–अभीप्सित-

मित्यर्थः। सनिं=कर्मफलस्य दातारम्, मेधां=श्रुताधीतग्रन्थधारणशक्तिं प्रयच्छन्त-मिति शेषः।

यद्वा सदसस्पतिं=देवसभायाः स्वामिनं चित्सभेश्वरं महादेवं, अयासिषं= शरणं प्राप्तवानस्मीत्यर्थः। कीदृशं ? अद्भुतं=महान्तं—अचिन्त्यशक्तिमित्यर्थः यद्वा अद्भुतं=लीलामात्रेणाश्चर्यकार्यकरमित्यर्थः। इन्द्रस्य=इन्द्रियाणां स्वामिनो जीवस्य प्रियं=मित्रं। यद्वा इन्द्रस्य दैवीसम्पद्भाजो भक्तस्य प्रियं=परमप्रेमास्पदम्, प्रत्यगात्मत्वात्। काम्यं=कामसम्पत्करं, यद्वा कमनीयं सौन्दर्यमाधुर्यसुधानिधित्वात्, कामनीयं वा धनमेधार्थिभिः। सनिं=अभीष्टदातारं, मेधां प्रयच्छन्तं तमेवंभूतं परमेश्वरमयासिषमित्यन्वयः। यद्वा सनिं=द्रव्यधनलाभं, मेधां=विशिष्टबुद्धिञ्च लब्धुं अयासिषं=परमेश्वरमहं याचे, द्विकर्मको धातुः। स्वाहा=सुहुतमस्तु।

× × ×

## ( ८६ )

### ( मतिमैकाम्यपावित्र्यादिप्रशस्तगुणयुक्तायै मेधायै परमेश्वरस्य देवानाञ्च प्रार्थना )

प्रशस्तां मेधां प्रार्थयते—

**ॐ यां मेधां देवगणाः पितरश्चोपासते।**
**तया मामद्य मेधयाऽग्ने! मेधाविनं कुरु स्वाहा॥**

**मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः ।**
**मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥**

( शु. य. ३२ । १४-१५ )

हे अग्ने !=स्वप्रकाश परमेश्वर ! यां मेधां=प्रतिभाविवेकात्मत्वादि-प्रशस्तगुणयुक्तां श्रुताधीतग्रन्थतदर्थावधारणशालिनीं बुद्धिं, देवगणाः=देवानाम्-इन्द्रादीनां महात्मनां विदुषां वा गणाः=समूहाः । पितरः=अर्यमादयः सदुपदेशेन पालयितारो विज्ञानसम्पन्नाः पूर्वजाश्च, उपासते=सेवन्ते, पूजयन्ति वा । तया मेधया, अद्य=एतर्हि, मां=त्वदुपासकं त्वत्कृपाभाजनं मेधाविनं=प्रशस्ता मेधा विद्यते यस्य तं, विवेकादिसमुपेतप्रशस्तगुणवद्बुद्धियुक्तं कुरु । देवपितृ-सेव्या मान्या बुद्धिरस्माकं कृपया समर्पय इति यावत् । स्वाहा=सुहुतमस्तु । होमार्थमन्त्रान्तज्ञापनार्थः स्वाहाकारः ।

वरुणाग्निप्रजापतीन्द्रादयः सर्वे देवाः कृपया मे मेधां ददातु । यद्वा वरुणादीनीमानि परमेश्वरस्य गुणनामानि वेदितव्यानि, सर्वैर्नामभिः तस्यैवाभिधेयत्वात्, सर्वदेवस्वरूपत्वाच्च । वरुणादिनामप्रतिपाद्य-विशिष्टगुणकर्मस्वभावः सर्वदेवमयो भगवान् मह्यं मेधां दिशतु इति समुदायार्थः ।

स्वाहापदार्थो विद्वद्भिर्बहुधा निरुच्यते—तथाहि—स्वाहा=सु—आ-ह—आ, यः खलु आ=समन्ततः सदा सु=सुष्ठु—सत्यं मधुरं कल्याण-करं वचनं श्रोतृभ्यः आह=कथयति, सः स्वाकारी भवति; अर्थात् सर्वत्र सर्वदा नः परमाप्तेभ्यो यथार्थवक्तृभ्यो विद्वद्भ्यः सत्यं प्रियं

हितकरमेव वचनं श्रोतुं प्राप्तं भवेदिति स्वाहा भवतु। यद्वा सु–आ स्वा, वाक् आह–आ स्वाहा, स्वकीया वागपि सदा सत्यहितप्रियभाषिणी भूयादिति स्वाहाऽस्तु। अथवा स्व=स्वकीयपदार्थं प्रत्येव यः स्वत्वमाह=कथयति, नान्यपदार्थं प्रति; अर्थादस्मदीया वाणी धर्मनीतिविचारयुक्ता सती स्वकीयं पदार्थमेव स्वत्वेन प्रतिपादयतु, परकीयपदार्थं कदाप्यधर्मान्यायमाश्रित्य स्वकीयत्वेन मा प्रतिपादयत्विति स्वाहा भवतु। अथवा सु=समीचीनरीत्या व्रीहिघृतादिकं हविः संस्कृत्य आ=समन्ततः सदा हा=होतव्यमग्नौ परमेश्वरमुद्दिश्य वेदमन्त्रैरिति। यद्वा सु=शोभनो हितमितमेध्याहारः, आ=सदा जाठराग्नौ होतुं प्राप्तो भवतु इति। यद्वा सु=सम्यक् योगाभ्यासेन, आ=समन्तात् विषयेभ्यो मनो निरुध्य संविदग्नौ क्लेशानविद्यादिकान् भस्मसात्कृत्वा परमात्मनि जीवात्मनस्तद्रूपेण स्थापनमाध्यात्मिकः स्वाहापदार्थः। तथा चाहुर्निरुक्तकाराः–'स्वाहाकृतयः स्वाहेत्येतत्सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा तासामेषा भवति।' ( ८। २० ) इति।

\+ + +

## ( ८७ )

( देवप्रसादलब्धां मदीयां श्रियं सर्वे इमे धार्मिकाः सेवन्ताम् )

श्रीकामोऽनेन मन्त्रेण श्रियं सर्वजनहितकारिणीं याचते, प्राप्ता तां सर्वेषामभ्युदयाय विनियुङ्क्ते च—

**मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः ।**
**मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥**

( शु. य. ३२ । १४-१५ )

हे अग्ने !=स्वप्रकाश परमेश्वर ! यां मेधां=प्रतिमापवित्रवैकाग्र्यादि-प्रशस्तगुणयुक्तां श्रुताधीतग्रन्थतदर्थावधारणशालिनीं बुद्धिं, देवगणाः=देवानां-इन्द्रादीनां महात्मनां विदुषां वा गणाः=समूहाः। पितरः=अर्यमादयः सदुपदेशेन पालयितारो विज्ञानसम्पन्नाः पूर्वजाश्च, उपासते=सेवन्ते, पूजयन्ति वा । तया मेधया, अद्य=पतर्हि, मां=त्वदुपासकं त्वत्कृपाभाजनं मेधाविनं=प्रशस्ता मेधा विद्यते यस्य तं, विवेकादिसमुपेतप्रशस्तगुणसद्बुद्धियुक्तं कुरु । देवपितृ-सेव्या मान्या बुद्धिरस्माकं कृपया समर्पय इति यावत्। स्वाहा=सुहुतमस्तु । होमार्थमन्त्रान्तज्ञापनार्थः स्वाहाकारः ।

वरुणाग्निप्रजापतीन्द्रादयः सर्वे देवाः कृपया मे मेधां ददातु। यद्वा व-रुणादीनीमानि परमेश्वरस्य गुणनामानि वेदितव्यानि, सर्वनामभिः तस्यैवाभिधेयत्वात्, सर्वदेवस्वरूपत्वाच्च । वरुणादिनामप्रतिपाद्य-विशिष्टगुणकर्मस्वभावः सर्वदेवमयो भगवान् मह्यं मेधां दिशतु इति समुदायार्थः ।

स्वाहापदार्थो विद्वद्भिर्बहुधा निरुच्यते-तथाहि-स्वाहा=सु-आ-ह-आ, यः खलु आ=समन्ततः सदा सु=सुष्ठु-सत्यं मधुरं कल्याण-करं वचनं श्रोतृभ्यः आह=कथयति, सः स्वाहकारी भवति; अर्थात् सर्वत्र सर्वदा नः परमाप्तेभ्यो यथार्थवक्तृभ्यो विद्वद्भ्यः सत्यं प्रियं

हितकरमेव वचनं श्रोतुं प्राप्तं भवेदिति स्वाहा भवतु। यद्वा सु–आ स्वा, वाक् आह–आ स्वाहा, स्वकीया वागपि सदा सत्यहितप्रिय-भाषिणी भूयादिति स्वाहाऽस्तु। अथवा स्व=स्वकीयपदार्थं प्रत्येव यः स्वत्वमाह=कथयति, नान्यपदार्थं प्रति; अर्थादस्मदीया वाणी धर्मनीतिविचारयुक्ता सती स्वकीयं पदार्थमेव स्वत्वेन प्रतिपादयतु, परकीयपदार्थं कदाप्यधर्मान्यायमाश्रित्य स्वकीयत्वेन मा प्रतिपाद-यत्विति स्वाहा भवतु। अथवा सु=समीचीनरीत्या व्रीहिघृतादिकं हविः संस्कृत्य आ=समन्ततः सदा हा=होतव्यमग्नौ परमेश्वरमुद्दि-श्य वेदमन्त्रैरिति। यद्वा सु=शोभनो हितमितमेध्याहारः, आ= सदा जाठराग्नौ होतुं प्राप्तो भवतु इति। यद्वा सु=सम्यक् योगाभ्या-सेन, आ=समन्तात् विषयेभ्यो मनो निरुध्य संविदग्नौ क्लेशानविद्या-दिकान् भस्मसात्कृत्वा परमात्मनि जीवात्मनस्तद्रूपेण स्थापनमाध्या-त्मिकः स्वाहापदार्थः। तथा चाहुर्निरुक्तकाराः–'स्वाहाकृतयः स्वा-हेत्येतत्सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा तासामेषा भवति।' ( ८। २० ) इति।

\+ \+ \+

## ( ८७ )

( देवप्रसादलब्धां मदीयां श्रियं सर्वे इमे धार्मिकाः सेवन्ताम् )

श्रीकामोऽनेन मन्त्रेण श्रियं सर्वजनहितकारिणीं याचते, प्राप्तां तां सर्वे-षामभ्युदयाय विनियुङ्क्ते च—

**ॐ इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम्।**
**मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा॥**

( शु. य. ३२ । १६ )

देवाः=इन्द्रादयः, पुरुषार्थपरायणा इन्द्रियादिशक्तयो वा, मयि उत्तमां श्रेष्ठां–हृद्यामनवद्यां, श्रियं=राज्यलक्ष्मीं, प्रकृष्टविभूतिं, शोभनबुद्धिं विशिष्टवाणीं देहादिशोभां, अच्छकीर्तिं, अभ्युदयवृद्धिं चेत्यनेकार्थः। दधतु=स्थापयन्तु। अपि च यथाऽयं स्वाभ्युदयमिच्छति, तथा परस्यापीच्छेत्। यथाशक्ति परोपकारमपि कुर्वीत स्वकीयां श्रियमन्यस्याप्यभ्युदयार्थं योजयेत्। कार्पण्यं विहाय प्रशस्तमौदार्यमवलम्बेत। परोपकाररतो मानव एव धन्यो भवतीत्याद्युपदेशजातं मनसि पर्यालोच्याह–मे=मम, तां श्रियं, ब्रह्म=विद्यादिगुणकर्मविशिष्टा ब्राह्मणाः, क्षत्रं=बलादिगुणकर्मोपेता क्षत्रियाः, इदं=इमे उभे ब्रह्मक्षत्रे, अश्नुतां=अश्नुवातां–उपजीवेताम्। प्रत्येकाभिप्रायतो यथाश्रुतं क्रियापदं साधु। प्राधान्याभिप्रायमिदमन्येषां सर्वेषां धार्मिकानामुपलक्षकम्। सर्वेऽपि मदीयां श्रियमुपजीवन्तु। यथाऽहं सर्वजनभोग्यो धन्यवादभाक् च भूयासमिति भावः। चो समुच्चयार्थौ। या त्वमेवं सर्वजनैरभिलप्यसे, यां च त्वां परोपकारकारिणीमुपजीव्य सर्वेऽपि प्रमोदभरमानसा भवन्ति, तस्यै श्रियै, ते=तुभ्यं स्वाहा=सुहुतमस्तु। श्रियमप्राप्य न किमपि लौकिकं वैदिकं वा कार्यं सिद्ध्यतीति महाप्रभाववत्त्वं तस्याः प्रसिद्धमिति भावः। तथा चोक्तं धनार्थलक्षणायास्तस्या महत्त्वं शान्तिपर्वणि–'अर्थो धर्मश्च कामश्च स्वर्गश्चैव नराधिप!। प्राणयात्रापि लोकस्य विनार्थं न प्रसिद्ध्यति॥ अर्थेनेह विहीनस्य पुरुषस्याल्पमेधसः। विच्छि-

ध्नन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थाः तस्य बान्धवाः । यस्यार्थाः स पुमांल्लोके यस्यार्थाः स च पण्डितः ॥ धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्द्धते । नाधनस्यास्त्यय लोको न परः पुरुषोत्तम ! ॥ नाधनो धर्मकृत्यानि यथावदनुतिष्ठति । धनाद्धर्मः प्रभवति शैलादभि नदी यथा ॥ ( महाभारत शा. प. ८ । १६–२३ ) इति । यद्वा ब्रह्म च क्षत्रं च श्रियं अश्नुवां=प्राप्नुताम् । मयि देवाः श्रियं दधतु, तथाऽन्येऽपि, तस्यै श्रिये स्वाहा=शोभनपुरुषार्थेन वयं सर्वे संमिलिताः सन्तः प्रयतामहे । इति ।

\+ \+ \+

( ८८ )

हे सूर्य !=चराचरात्मन् ! त्वं बट्=सत्यं, बडित्यव्ययं सत्यार्थम्, त्रिष्वपि कालेष्वबाध्य ! अखण्डैकरस ! महान्=परब्रह्म—नित्यशुद्धबुद्धमुक्तानन्तस्वभाव-पूर्णविज्ञानघनानन्दो महतो महीयानसीत्यर्थः । हे आदित्य !=सर्वविश्वव्याधिष्ठान ! आदत्ते=उपसंहरति सर्वं विश्वं प्रलये यस्मिन् सोऽसौ इति तद्व्युत्पत्तेः। त्वं बट् महान् असि । किञ्च ते=तव, महः=महतः, सतः=सत्यस्य नित्यस्य, महिमा=महत्त्वं, पनस्यते=स्तूयते लोकैः शास्त्रैश्च । हे देव ! स्वयंप्रकाश ! अद्धा=सत्यं, त्वं महानसि=विभुर्व्यापको निरवधिनिस्तुलमहत्त्वसंयुक्तोऽसि । अभ्यासेऽर्थस्य भूयस्त्वं प्रद्योतते, यथाऽहो दर्शनीया अहो दर्शनीया इति । पुनरुक्तिरादरार्था ।

बट्=सत्यं, सूर्य !—सवितृवत्सर्वप्रकाशक ! त्वं श्रवसा—शास्त्रैः प्रतिपादितेन विद्वद्भिर्वर्णनीयेन सर्वैः श्रवणीयेन यशसा महानसि । हे देव ! सत्रा—सत्येन हेतुना त्वं महानसि । किञ्च देवानां—इन्द्रादीनां, पृथिव्यादीनां मध्ये या मह्ना—स्वकीयेनानुपमेन महत्त्वेन त्वमेव महानसीति पूर्वेणान्वयः । पुनः कथं भूतस्त्वमसीत्यत आह—असुर्यः—सकलप्राणिभ्यो हित इत्यर्थः, असवः प्राणा येषां सन्ति तेऽसुराः रो मत्वर्थीयः, तेभ्यो हितोऽसुर्यः 'उगवादिभ्यो यत्' इति व्युत्पत्तेः । पुरोहितः—पुरोऽग्रे सर्वेषां हितः—स्थितः इत्यर्थः । सर्वव्यापकस्य तस्य पुरतः स्थितत्वमसंदिग्धम् । तद्भावनार्थी तदुक्तिः । विभु—व्यापकम्, ज्योतिः—विज्ञानघनानन्दम्, अदाभ्य—अनुपहिंसित अविनाशिस्वरूपमित्यर्थः तस्मात्त्वमेव सच्छ्रद्धाभक्तिभ्यामस्माभिः समुपासनीयोऽसीतिभावः ।

अथाधिदैवतम्—हे सूर्य ! सुवति प्रेरयति कार्येषु जगदिति सूर्य । बट्—सत्यं महान्—परब्रह्मस्वरूपोऽसि । हे आदित्य ! तेजसामादानात्, आदत्तेऽशनम् इति वाऽऽदित्य ! । बट् त्वं महान् असि—श्रेष्ठोऽसीत्यर्थः । किञ्च महः—

महतः ते—तव सतः—नियस्य महिमा—महाभाग्यं सर्वेषु देवेष्ववस्थितं पनस्यते—पूज्यते सर्वैः प्राणिभिः। अद्धा—सत्यं, हे देव!—दानादिगुणयुक्त! दीप्यमान! वा त्वं महानसि। उक्तमपि पुनरुच्यते आदरार्थम्। 'अभ्यासे भूयांसमर्थं मन्यन्ते' (निरु. १। ४२) शिष्टाः। इति यास्कोक्तेः। हे सूर्य! बट्—सत्यं, श्रवसा—श्रवणीयेन ऐश्वर्येण महानसि। सत्रा—सत्यं त्वं महानसि देवानां मध्ये श्रेष्ठोऽसीत्यर्थः। केन? मह्ना—महत्त्वेन, कीदृशः त्वं? असुर्यः—सर्वप्राणिहितकारीत्यर्थः, पुरोहितः—पुरोऽग्रे हितः—स्थापितः सर्वकार्येषु पुरः पूज्यः। सर्वदेवानां सूर्यार्घ्यदानानन्तरमेव पूजाधिकारात् विभु—व्यापि, ज्योतिः—तेजः अदाभ्यं—अनुपहिंस्यं अविनाशिव्यापकतेजोरूपस्त्वमेवासीत्यर्थः।

× × ×

## (९०)

### (मनसः शिवसङ्कल्पत्वाय परमेश्वरस्याभ्यर्थना)

मन एव संसारः, सुखदुःखादिकारणमपि तदेव। नायकमिव सर्वेषामिन्द्रियाणां स्वस्वविषये प्रवर्तकमपि तदेव, उच्छृङ्खलं तद्दुःखकारि, स्ववशे स्थापितं च तत्सुखकारि भवति। बन्धमोक्षयोः कारणमपि तदेव। विषयासक्तं संसारसङ्कल्पग्रथितं तद्बन्धाय भवति, शिवसङ्कल्पसंततिसंयुक्तं विषयविरक्तं शान्तं निरुद्धं तन्मोक्षाय प्रभवति। तस्मिन्नेव सर्वपदार्थज्ञानानि, सर्वे च वेदाः प्रतिष्ठिताः सन्ति, परन्तु कामादिरोगग्रस्तमस्वस्थं तज्ज्ञान् न विजानाति। तत्तस्मान्मे मनः शिवसङ्कल्पं स्वस्थं शान्तं भवतु इति ऋषिः प्रार्थयते—

ॐ यस्मिन्नृचः साम यजूꣳषि
यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां
तन्मे मनः शिवसङ्कल्पमस्तु ॥

( शु. य. ३४। ५ )

यस्मिन् मनसि ऋचः=काश्चित्पद्यरचनाविशेषाः—ऋग्वेदः, यस्मिन् साम=सामानि—कानिचिद्गीतिप्रधानरचनाविशेषाणि सामवेदः, यजूꣳषि—कानिचिद्गद्यरचनाविशेषाणि यजुर्वेदः, प्रतिष्ठिता—प्रतिष्ठितानि सन्ति । यद्वा ऋगादिपदेन तज्ज्ञानान्यप्यभिप्रेयन्ते, ज्ञानार्थाद् विद्धातोरेव वेदशब्दस्य निष्पन्नत्वात्, विद्यन्ते—ज्ञायन्ते एभिर्धर्मादिपुरुषार्था इति तद्व्युत्पत्ते । तत्र तान्यपि प्रतिष्ठितानि । ननु—यदि सर्वेषां प्राणिनां मनसि सर्वे वेदाः, तज्ज्ञानानि च प्रतिष्ठितानि सन्ति, तर्हि कथं न ते तानि च सर्वान् प्रतिभान्ति ? इति चेन्न, मनसः स्वास्थ्याभावात् । मनसः स्वास्थ्ये एव वेदार्थरहस्यज्ञानस्फुरणं, वेदोच्चारणसामर्थ्यञ्च भवतो नान्यथा । तत्र प्रतिष्ठाया दृष्टान्त.—रथनाभौ आरा' इव । यथा आरा=तिर्यक्काष्ठविशेषाः रथचक्रनाभौ प्रतिष्ठिताः, तद्वत्सर्वं ऋगादिशब्दजालं मनसि प्रतिष्ठितम् । किञ्च प्रजानां=प्राणिनां, सर्वं चित्तं=सर्वपदार्थविषयकं ज्ञानं, यस्मिन्मनसि, ओतं प्रोतं=निक्षिप्तं, तन्तुसन्तति पटे इव, सर्वं ज्ञान मनसि निहितम् । मनसः स्वास्थ्ये एव ज्ञानोत्पत्तिः, मनोवैयग्र्ये च ज्ञानाभाव', तत्स्वास्थ्यञ्च कामादिदोषाभाववत्वे सति ऐकाग्र्यलक्षणम् । तत्, मे=मम मनः, शिवसङ्कल्पं=शिवः—कल्याणकारी धर्मविषयः सङ्कल्पो यस्य तत्तादृशं अस्तु—भवतु । यद्वा शिवः=कल्या-

गमयः परमात्मा तद्विषयकः सङ्कल्पः, उपलक्षणमेतत्, शिवचिन्तनं शिवतत्त्व-निश्चयश्च सर्वदाऽस्तु मनसः । मन्मनसि सदा धर्मसङ्कल्प एव भवतु न कदा-चित्पापसङ्कल्पः, सदाशिवात्मचिन्तनमेव भवतु न तु कदाचिदशिवसंसारचिन्तन-मित्येवमादिः । अथवा शिवसङ्कल्पं=शान्तव्यापारं—निरुद्धवृत्तिकं तन्मे मनो भवतु, मनसः सङ्कल्पाभावे हि योगो निष्पद्यते । तदुक्तं भगवता गीतासु—'न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ।' ( ६ । २ ) इति 'सर्व-सङ्कल्पसंन्यासी योगारूढस्तदोच्यते ।' ( ६ । ४ ) इति च ।

× × ×

## ( ९१ )

( विशिष्टतेजोज्ञानशक्त्यैश्वर्यसम्पन्नानां परमेश्वरप्रसादपीयूषपात्रता-मुपगतानां देवानां स्वाभीप्सितार्थसिद्धये सर्वदेवमयस्य विभिन्न-नामाभिः प्रतिपाद्यस्य वा परमेश्वरस्य सच्छ्रद्धयाऽऽह्वानम् )

अभीष्टार्थसिद्धयेऽग्न्यादिकान् देवान् तदात्मकं परमेश्वरं वा भक्ता आह्वयन्ति—

ॐ प्रातरग्निं प्रातरिन्द्रꣳ हवामहे
प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं
प्रातः सोममुत रुद्रꣳ हुवेम ॥

( शु. य. ३४ । ३४ । ऋ. ७ । ४१ । १ । अथर्व ३ । १६ । १ । तै. ब्रा. २ । ८ । ९ । ७ )

प्रात =उष.काले, अग्निं देवं हवामहे=वयं स्तोतारो भक्ताः वर्चोमेधाजन-नादिफलाय आह्वयाम इत्यर्थः। तथा प्रातःकाले इन्द्रं हवामहे। तथा मित्रावरुणा=मित्रावरुणावहोरात्राभिमानिनौ देवौ प्रातः वयं हवामहे। तथाऽश्विनौ=देवाना भिषजौ प्रात· वयं हवामहे। तथा प्रातः भगं देव, पूषणं देव, ब्रह्मणस्पतिं=मन्त्राभिमानिनमेतत्संज्ञक चाह्वयामः। तथा प्रातः सोम=एतत्संज्ञकं देवं, उमासहितं देवं वा उत=अपि च रुद्रं देवं च हुवेम=आह्वयाम। यद्वा प्रातःशब्दो वीप्सावचनः, वयं प्रातः प्रातः=पुन. पुनः एतान् अग्न्यादिकान् देवान् हवामहे। अथवा निखिलात्मत्वादखिल-देवमयो भगवानेव विभिन्ननामभिराहूयते पौनःपुन्येनेति बोध्यम्। तदुक्तं भागवते–'तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये। अरू-पायोरुरूपाय नमः आश्चर्यकर्मणे॥' (८।३।९) इति। अग्न्या-दिनाम्नां परमेश्वरार्थानुगामिनीं व्युत्पत्तिं तत्र तत्र वयमवोचाम इति नेह प्रदर्श्यते। ह्वयतेः सम्प्रसारणे रूपद्वयम्। मित्रश्च वरुणश्च मित्रावरुणौ 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्आदेशः। 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घ। केचित्तु प्रातः=प्रभाते अग्निं=स्वप्रकाश परमेश्वरं समुपासनाय हवामहे=गृह्णीमहे, तं प्रतिदिन प्रातः चिन्तयामइतियावत् अग्निं=अग्निहोत्रं वा हवामहे=आदद्महे। इन्द्रं=परमैश्वर्योत्पत्त्यु-पाय हवामहे=विचारयाम इत्यर्थ। मित्रावरुणौ=प्राणापानौ हवामहे=कुम्भकादि· प्राणायमेन संयमशालिनौ कुर्महे। अश्विनौ=अध्यापकोपदेशकौ हवामहे=ताभ्या विद्या शिक्षा च सादरेण गृह्णीमहे। भग=भजनीयं स्वकीय न्याय्यं भागं हवा-महे=आदद्महे। पूषणं=पुष्टिकर सात्त्विकं भोगं हवामहे–सेवामहे। ब्रह्मणस्पतिं= ब्रह्मणः–धनस्य वा वेदस्य वा बलस्य वा प्रतिपालकं स्वामिनं–विद्यावन्त बलवन्त धनवन्त वा हवामहे=सेवामहे। सोमं=औषधिगणं स्वास्थ्याय हवामहे

उपाददमहे । हृदं=जीवं हवामहे=ज्ञातुं प्रयतामहे । य एवं कुर्वन्ति ते सर्वेऽपि निखिलाभ्युदयसुखशान्तिभाजो भवन्तीति—व्याचक्षते । यद्ययमर्थः संभवेत्तथै-वास्त्वित्यलं मिथ्याविवादेन ।

× × ×

## ( ९२ )

( भगानां देवसुमतेश्च समवाप्तये भगवत्प्रार्थना )

भगानि देवसुमतिश्च प्रार्थ्यते—

**ॐ उतेदानीं भगवन्तः स्याम,**
**उत प्रपित्व उत मध्ये अह्नाम् ।**
**उतोदिता मघवन्त्सूर्यस्य,**
**वयं देवानाᳬ सुमतौ स्याम ॥**

( शु. य. ३४ । ३७ । ऋ. ७ । ४१ । ४ । अथर्व. ३ । १६ । ४ ।
तै. ब्रा. २ । ८ । ९ । ८ ).

हे मघवन् ! 'मह पूजायां' मह्यते पूज्यते इति हे परमपूज्य ! परमेश्वर ! उत=अपि च, तव भगवतः प्रसादात् इदानीं=अद्य, वयं=निजहृदयदयित-त्वत्पादपद्मशरणाः अनन्यशरणाः तावकाः, भगवन्तः=भगं–शौर्यं, यशः, श्रीः, ज्ञानं, वैराग्यं, धर्मः, धनं, अणिमाद्यष्टविधमैश्वर्यं, मोक्षः, सौभाग्यञ्च, तद्वन्तः स्याम=भवेम । '**ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्य-स्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥**' इति स्मरणात् । उत=अपि च, सूर्यस्य प्रपित्वे=प्रपतने–अस्तमये, भगवन्तः=स्याम । उत अह्नां=वासराणां

मध्ये—मध्यं दिने भगवन्तः स्याम । उत सूर्यस्य उदिता=उदितौ—उदयसमये भगवन्तः स्याम । किं बहुना सर्वदाऽस्माकं भगवत्ताऽस्त्वित्यर्थः । परमकृपालुर्भगवान् सदाशिवः सर्वान् स्वप्रपन्नान् स्वसमान् भगवद्रूपान् सदाशिवानेव विदधातीति भक्तवत्सलस्य प्रभोः श्रीमहेश्वरस्य स्वभक्तभक्तत्वं शोभतेतरामिति भावः। किञ्च हे दिनानाथप्रणतजनतापापसंतापहारिन्! भक्ताभीप्सितार्थप्रवर्षिन्! कृपापीयूषपाथोनिधे भगवन्! वयं देवानां सुमतौ—कल्याण्यां बुद्धौ स्याम। देवा अस्मासु शोभनां स्वानुग्रहपीयूषपूर्णां निर्मलां विवेकविचारशीलां सद्बुद्धिं दधत्वित्यर्थः। देवा दयार्द्रतरया सुशीतलया दृष्ट्याऽस्मानभिपश्यन्तु सुमतिञ्च समर्पयन्तु इति यावत्। भगवतः सर्वदेवात्मत्वेन तन्मुखेन भगवानेवाभ्यर्थनीयोऽत्र भवतीति भावः।

×　　×　　×

## ( ९३ )

( इष्टसाधकः अग्रण्याग्रगण्यो नो भगवानेव सदा भवतु )

भगवानेवास्माकमग्रगामी भूत्वा सकलेष्टसाधकोऽस्त्विति तं प्रार्थयन्ते—

ॐ भग एव भगवाँ२ अस्तु,
देवास्तेन वयं भगवन्तः स्याम ।
तं त्वा भग सर्व इज्जोहवीति,
स नो भग पुर एता भवेह ॥

(शु. य. ३४। ३८। ऋ. ७। ४१। ५। अथर्व. ३। १६। ५। तै. ब्रा. २। ५। ५। १+२। ८। ९। ८)

हे देवाः ! यद्वा हे देवसदृशा विद्वांसः परमास्तिकशिरोमणयः सारासारविचारचातुरीधुरीणा मानवमणयः ! मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायात्, शृण्वन्तु भवन्तो भगवतः परमेश्वरस्य प्रणतपालकत्वस्वभक्तवत्सलत्वादिलक्षणं माहात्म्यमिति शेषः । भग एव भगवान्=समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीणां निवासभूत ओङ्काररूपो भग एव भगवान्, यद्वा एवकारो भिन्नक्रमः, भगवान् एव भगः=ज्ञानैश्वर्यादिविभूतिरूपोऽस्तु । विभूतिरूपेण ध्येयो भगवान् भवत्विति यावत्, अत एव तयोः सामानाधिकरण्यनिर्देशः । यद्वाऽस्माकं भगवान् एव भगः=भजनीयो भवतु, तेन=प्रसिद्धेन भगवदनुग्रहेण कृत्वा वयं सर्वे भगवन्तः =ज्ञानैश्वर्यादिविभूतिमन्तः स्याम=भवेम । हे भग ! =विभूतिरूप ! परमेश्वर ! सर्वं इत्=सर्व एव जनः, तं=प्रसिद्धं त्वा=त्वां भगवन्तं जोहवीति=सकलेष्टार्थसिद्धयेऽत्यन्तमाह्वयति । हे भग !=सकलैश्वर्यप्रद ! स त्वं, नः=अस्माकं, इह= कर्मणि लौकिके वैदिके च पुर एता=पुरोऽग्रे एतोति पुर एता=अग्रयायी भव, अग्रेसरो भूत्वा सर्वाणि कार्याणि अभ्युदयनिःश्रेयसफलकानि साधयेत्यर्थः ।

× × ×

## (९४)

### (संसारनदीसमुत्तरणाय सद्गुरुरूपश्रुतेः साधनोपदेशः)

अतिविकटां संसारनदीं संतरीतुं तत्परपारपरमधाम समवाप्तुं चोत्तितीर्षुभ्यः सद्गुरुरूपा श्रुतिः अविद्याज्ञानविरोधापावानलक्षणं प्रयत्नविशेषमुपदिशति—

ॐ अश्मन्वती रीयते स ृ रभध्व-

मुत्तिष्ठत प्रतरता सखायः !।

अत्रा जहीमोऽशिवा ये असन्
शिवान् वयमुत्तरेमाभिवाजान् ॥

( शु. य ३५ । १० । ऋ १० । ५३ । ८ । अथर्व. १२ । २ । २६ ।
तै. आ. ६ । ३ । २ )

हे सखायः !=हे मित्राणि ! एषा=सर्वजनप्रसिद्धा, अश्मन्वती=पाषाणवती–शब्दादयः संयोगवियोगाभ्यां शोकमोहजनका विषया एव पाषाणाः तद्वती इत्यर्थः, उपलक्षणमिदम्, मोहमनोरथजला, कामरागशैवालसंवलिता, द्वेषक्रोधग्रहा, आशातृष्णावर्ता, लोभदम्भदर्पवेगा, त्रिविधदुःखशोकद्रोहाद्यनर्थशतसहस्रसकुला, आत्माज्ञानविलसितकामसंकल्पगिरिमूला, प्रतिक्षणपरिवर्तमानहर्षशोकसमुद्भूतनृत्यगीतवादित्रक्ष्वेलितस्फोटितहसिताकर्षितरुदितहाहाश्रुश्वासोच्छ्वासादिरूपानेकोच्चावचतरंगस्फालनसंजातमहारवा संसाररूपाऽतिभीमा महानदी रीयते=गच्छति–अविवेगेन वहतीति यावत् । 'री गतौ' दिवादि–आत्मनेपदी । अतो यूयं संरभध्वं=तां समुत्तरीतुं प्रयतध्वं–प्रयत्नं कुरुतेति यावत् । उत्तिष्ठत=तत्तरणसाधनात्मज्ञानाभिमुखा भवतेत्यर्थः । प्रतरत=प्रकर्षेण तां नदीं तरत । केनोपायेन तां नदीं तरेम ? इत्यत आह–अत्र=हृदयप्रदेशे, ये अशिवाः=अशान्ताः–उपद्रवकारिणः–दुष्टाः कामसङ्कल्पाः–आसुरीसम्पद्रूपाः, असन्=स्युः, तान् वयं जहीमः=परित्यजामः–निखिलदुष्टकामसङ्कल्पत्यागसम्पादकानि विवेकवैराग्यादिसाधनानि समुपाददाम इति भावः । यद्वा अत्र=जगति वर्तमाना ये अशिवाः=शिवात्मभिन्ना अविद्याकल्पितदेहेन्द्रियादयः दृश्यपदार्था असन्, तेषु आत्मबुद्धिं वयं जहीमः । मिथ्यात्वनिश्चयेन

तेषु त्यक्तेषु सत्सु शिवान्=सुखकरान् वाजान्=व्रजति—गच्छति प्राप्नोति स्वरूप-साक्षात्कारमेभिरिति वाजाः तान् 'वज गतौ' इत्यस्मात् घञ् । श्रवणमनन-निदिध्यासनरूपान् सदुपायान् प्राप्येति शेष, वयं संसारनदीमभ्युत्तरेम', ब्रह्म-निर्वाणं परमधाम च प्राप्नुयामः '**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**' (बृ. ४ । ५ । ६ ) इति श्रुते' । अनया संसारनदीपरपारभूतात्मसाक्षात्कारमुद्दिश्य श्रवणादीनि साधनानि विधीयन्ते इति भाव. । अथर्वसंहिताया—'**अश्मन्वती रीयते सं रभध्वं वीरयध्वं प्रतरता सखायः । अत्रा जहीत ये असन् दुरेवा अनमीवानुत्तरेमाभि वाजान् ॥ उत् तिष्ठता प्रतरता सखायोऽश्मन्वती नदी स्यन्दत इयम् । अत्रा जहीत ये असन्नशिवाः शिवान्त्स्योनानुत्तरेमाभि वाजान् ॥**' ( १२ । २ । २६–२७ ) इत्येवं तत्तद्वाक्यभेदेनेमौ मन्त्रौ उपलभ्येते । वीरयध्व=आलस्यप्रमादादिशत्रुध्वंसशीलेन वीरकर्मलक्षणेन—वीरोत्साहेन संयुक्ता भवत । दुरेवा.=दु खदायकाः । अनमीवान्=मोहादिरोगरहितान् । स्योनान्=शोभनान् हितकरान् इत्यर्थ । शेष पूर्ववत् ।

× × ×

( ९६ )

( वेदतज्ज्ञानविशिष्टसामर्थ्योपलब्धये तत्साधनानि संचीयन्ते )

विशिष्टवाक्प्राणमन आदिक शरणीकुर्वन् कल्याणसमर्पकमसाधारणसामर्थ्यं प्रार्थ्यते—

**ॐ ऋचं वाचं प्रपद्ये, मनो यजुः**
**प्रपद्ये, साम प्राणं प्रपद्ये ।**

**चक्षुः श्रोत्रं प्रपद्ये वागोजः**
**सहौजो मयि प्राणापानौ ॥**

(शु. य. ३६।१)

ऋचं=ऋङ्मन्त्राणां सार्थस्पष्टाध्ययनशीलां वाचं=वाणीं, अहं प्रपद्ये=शरणमुपैमि—आश्रयामि। यद्वा वाचं=स्वकीयां वाक्शक्तिमाश्रित्य ऋचं=सूक्तमयं ऋग्वेदं प्रपद्ये=शरणं गच्छामि—अध्येमि इत्यर्थः। यद्वा ऋचं=ऋच्यते—स्तूयते—यथार्थतः प्रतिपाद्यते देवः परमात्माऽनयेति ऋक् तां ब्रह्मात्माद्वैतप्रतिपादिकां वाचं, प्रपद्ये=शरणं व्रजामि; अन्यामनात्मगोचरां विक्षेपजननीं वाणीं विहाय तत्त्ववदनशीलां प्रमोदजननीं तामेवाश्रयामीति यावत्। 'नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्।' (४।४।२१) इति बृहदारण्यकश्रुतेः। 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः।' (२।२।५) इति मुण्डकश्रुतेश्च। यजुः=यजुर्मन्त्रार्थज्ञानयुतं मनः प्रपद्ये। यद्वा अहं मनः=स्वकीयां मननशक्तिमवलम्ब्य यजुः=अध्यायमयं यजुर्वेदं प्रपद्ये। यद्वा यजुः=इज्यते संगम्यते—निश्चीयते तत्त्वमनेनेति यजुः=विरोधशङ्कानिरासेन तत्त्वनिश्चयहेतुं मनः=न्यायानुसन्धानेन तत्त्वमननकर्तृ प्रपद्ये=तदेकनिष्ठो भवामीत्यर्थः। साम=ऐकाग्र्यसम्पादकं गीतिविशिष्टं साममन्त्रगायकं संयतं प्राणं प्रपद्ये। यद्वा अहं प्राणं=स्वकीयां जीवनशक्तिमाश्रित्य साम=गीतिमयं सामवेदं प्रपद्ये=अध्येतुं—गन्तुं वा प्राप्नोमि। यद्वा साम=स्यति ध्वंसते विपरीतप्रत्ययमनेनेति साम=निदिध्यासनं, प्राणं=सामर्थ्यं=अनादिदुर्वासनया विषयेष्वाकृष्यमाणचित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यसम्पादकं विजातीयवृत्तितिरस्कारपूर्वकसजातीयप्रत्ययप्रवाहात्मकं प्रपद्ये। अहं

श्रोत्रं=मदीयां श्रवणशक्तिमाश्रित्य चक्षुः=दिव्यज्ञानचक्षुःसमर्पकं ब्रह्मवेदं–आङ्गिरसवेदं–अथर्ववेदं प्रपद्ये। 'चक्षुरंगिरसोऽभवन्' (अथर्व.१०।७) इति श्रुतेः। यद्वा चक्षुः सर्वत्र सच्चिदानन्दस्वरूपदर्शनशीलं, श्रोत्रं=तत्त्वश्रवणपरं प्रपद्ये=आश्रयामि। वाक्=सत्यतत्त्ववदनशीला प्रभावशालिनी, ओजः=पवित्रविचारैकाग्र्यनिरोधसमाधिसम्पादकं मानसं बलं,पुनरोजोग्रहणाच्छारीरं ब्रह्मचर्यादिजनितं बलं मयि साधकेऽधिकारिणि, सह=युगपत्, वर्तन्तामिति शेषः। यद्वा सहः=द्वन्द्वसहिष्णुत्वमपि मयि वर्त्ततामिति। अत्र **सामान्यार्थवाचकशब्दानां सति तात्पर्ये विशिष्टार्थबोधकत्वन्यायात् 'यथाऽयं देवदत्तो बुद्धिमान्' इत्यत्र तात्पर्यवशाद्विशिष्टबुद्धिमत्त्वं गम्यते, तथा चक्षुरादिपदानां विशिष्टचक्षुराद्यर्थबोधकत्वं बोद्धव्यम्। तत्र वैशिष्ट्यं पूर्वोक्तमेव।** प्राणापानौ=उच्छ्वासनिःश्वासरूपेण नासाभ्यन्तरचारिणौ कुम्भकप्राणायामेनोर्ध्वाधोगतिनिरोधेन सहेत्यनुवर्ततेऽत्र, सह=एकीभूतौ–सुषुम्नासंचारिणौ, प्राणो यथा बहिर्न याति, यथा चापानोऽन्तर्न प्रविशति, किन्तु द्वावपि नासामध्य एव समत्वेन वर्तमानौ मयि वर्त्तेतामिति सङ्कल्पसामर्थ्यार्पितं कृपाजलनिधिं भगवन्तं सादरं प्रार्थये। इति।

× × ×

## ( ९६ )

( अतितृष्णादिकान् दोषान् विनिवार्य सः प्रत्यगभिन्नः परमात्मा स्वसाक्षात्कारेणास्मत्कृतेऽखण्डसुखरूपः समस्तु )

दोषान्निवारयितुं सुखमखण्डमभिगन्तुं च प्रार्थनया भगवन्तमनुकूलयति–

**ॐ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वाऽतितृण्णं**
**बृहस्पतिर्मे तद्दधातु, शं नो भवतु भुवनस्य यस्पतिः ॥**

( शु. य. ३६ । २ )

ब्रह्मचर्यादिव्रतान्यनुष्ठातुं दृढप्रतिज्ञस्य मे=मम चक्षुषः=चक्षुरिन्द्रियस्य, यच्छिद्रं=सरागपरस्त्र्यवलोकनादिलक्षणं दूषणं, यत्किञ्च पापगर्तपातहेतुभूत तत् बृहस्पति =बृहत्या वेदलक्षणाया वाच. पतिः—सर्वान्तर्यामी स्वामी, बृहतां—देवानां पतिः=पालको वा परमेश्वरः, दधातु=संदधातु—' परयोषित्समासक्तिः आयुर्बलं तेजः सम्पत्ति कीर्ति यशो धर्मं सुखं सद्गतिं च विध्वंसते, पदे पदे महतीं विपत्तिं महापापं महादुःखं च ददाति'। उक्तं च— ' अशुचितानिलयं मलयं रुचेरयशसां भवनं विभवं रुजाम् । परम-शर्मसुधाम्बुधिवाडवं परिहरेत् परदारनिरीक्षणम् ॥ मृतो नरकमभ्येति हीयेतात्रापि चायुषः । परदाररतिः पुंसामुभयत्र भयप्रदा ॥ ' इत्येव-मादिदोषानुसन्धानलक्षणायाः तन्निवर्तनक्षमायाः सशोकसद्बुद्धेः प्रदानेन तच्छिद्रं निवर्तयतु—विकारशून्यं चक्षु सम्पादयतु, यतो ' यं हि रक्षितुमिच्छति भगवान् तं सद्बुद्धया संयोजयती ' त्यभियुक्तोक्तेः । प्रशस्ततरसमभावं लब्धुकामस्य मे=मम हृदयस्य=स्वान्तस्य यच्छिद्र=द्वेषघृणापक्षपातक्षुद्रविचारादि-लक्षणं यद्दूषणं तदपि बृहस्पति र्भगवान् सन्दधातु=समुदारभावपवित्रविचार-प्रदानेन निवर्तयतु। शान्तिसुखानुभवेच्छस्य मे मनसः, यदतितृण्णं=अतिहिंसि-तत्वं—अतिव्याकुलकरजनकमतितृष्णात्मकं तदपि महादूषणं संदधातु=सन्तोष-सद्विवेकप्रदानेन निवर्तयतु, यतः ताभ्यामन्तरेण तन्न निवर्तते, शान्तिसुखं च न लभ्यते । अद्य श्वो वा मरिष्यतः शरीरस्य कृतेऽत्युग्रतृष्णाया

अनर्थावहत्वात् 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। तदेकस्य न पर्याप्तमिति मत्वा शमं व्रजेत्॥' इति (वि. पु.) स्मृतेः। प्रभूतविषयप्राप्त्याऽपि तन्निवृत्तेरसंभवात् किन्तु हविषा कृष्णवर्त्मेव भूयोऽपि मवर्धमानत्वाच्च, तृष्णैव महद्दुःखमिति लोकेऽपि प्रसिद्धम्, अतस्तन्निवृत्तिमन्तरेण मनसः शान्तिसुखमतिदुर्लभमिति भावः। इत्येवं दोषनिवृत्तिमभ्यर्थ्य सुखमखण्डमर्थयते—भुवनस्य=भूतजातस्य—चराचरविश्वस्य यः पति=अधिपतिर्नारायणो महादेव स न=अस्माकं तत्प्रपन्नाना भक्ताना कृते श सुखरूपो भवतु, स्वान्तस्य सर्वानपि ऽिद्रानपाकृत्य वैराग्यनैर्मल्यैकाग्र्यादिसद्गुणानाधाय कल्याणकारी समस्त्वित्यर्थः।

× × ×

## (९७)

(सर्वे देवाः सर्वाणि वासराणि रात्रयश्चास्माकमनुकूलाः सुखकराश्च भवन्तु)

सर्वेषा वाय्वादीनामानुकूल्य सुखकरत्वञ्चार्थयन्ते—

ॐ शन्नो वातः पवताᳪं शन्नस्तपतु सूर्यः।
शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु॥
ॐ अहानि शं भवन्तु नः शᳪं रात्रीः प्रतिधीयताम्।
ॐ शन्न इन्द्राग्नी भवतामवोभिः
शन्न इन्द्रावरुणा रातहव्या।

शन्न इन्द्रापूषणा वाजसातौ,
शमिन्द्रासोमा सुविताय शं योः॥

(शु य. ३६ । १०-११ । ऋ. ७ । ३५ । १ । अथर्व. १९ । १० । १)

वात =वायुः, नः=अस्माकं, शं=सुखकारी-अपरुषः-अव्याधिजनकश्च यथा स्यात्तथा पवता=चलतु-वहताम् 'पव गतौ' लोट् । सूर्यः=सुवति-जनान् सर्वान् स्वस्वव्यापारेषु प्रेरयतीति आदित्यः, शं=सुखरूपोऽदहनो भेषज-रूपश्च सन् नः=अस्मभ्यं तपतु=स्वकिरणान् प्रसारयतु । पर्जन्यः=पिपति-पालयति-पूरयति जलजीवनार्पणेन जनानिति परः-अम्भः जन्यतेऽनेनेति वा पर्जन्यो मेघः, देवः=विद्युदाख्य तदधिष्ठाता, न -अस्मभ्यं, शं=सुखकरोऽ-प्रतिकूलो यथा स्यात्तथा, अभिवर्षतु=सिञ्चतु सुखमिति शेषः । कीदृशः ? कनिक्रदद्=भायन्त क्रन्दति गर्जति शब्दं करोतीति यङ्लुगन्तो निपातः । अहानि=दिनानि सर्वाणि, नः=अस्मभ्य शं=सुखरूपाणि सुखकारकाणि वा भवन्तु । रात्रीः शं=सुखरूपा, अस्मासु प्रतिधीयता=प्रतिदधातु, भगवान् जगदीश्वर इति शेषः कर्तरि यक् छान्दसः । यद्वा रात्री =रात्रयः-सुखकारिण्यः सत्यः, अस्मान् प्रतिधीयतां=प्रतिधीयन्ताम् उपगच्छन्तु संसेवन्तु । विभक्ति-वचनव्यत्यय. । इन्द्राग्नी=विद्युत्पावकाधिष्ठातारौ देवौ साधिष्ठानौ, अवोभिः पालनपोषणादिभि. कृत्वा न =अस्माकं, शं=सुखरूपौ भवताम् । इन्द्रावरुणा= इन्द्रावरुणौ वलजलाधिष्ठातारौ देवौ साधिष्ठानौ, कथंभूतौ ? रातहव्या=रातहव्यौ-रातं=दत्तं हव्यं ययोस्तौ-यजमानप्रदत्तहविस्तृप्तौ, यद्वा रातं=दत्तं हव्यं= आदातव्यं सुख याभ्यां तौ सुखप्रदातारौ, नः शं भवताम् । इन्द्रापूषणा= इन्द्रापूषणौ-स्वर्लोकमर्त्यलोकाधिष्ठातारौ, यद्वा पर्जन्यपृथिव्यधिष्ठातारौ इन्द्रपूषसंज्ञौ

साधिष्ठानौ देवौ, कथंभूतौ तौ ? वाजसातौ=वाजस्य विविधस्य प्रभूतस्यान्नस्य, यद्वा अन्नोपलक्षितस्य विविधभोगोपकरणस्य सातिः=प्रदानं भवति याभ्यां तौ। नः=अस्माकं सुखरूपौ सुखकरौ वा भवताम्। तथा इन्द्रासोमा=इन्द्रासोमौ—अन्तरिक्षचन्द्रलोकाधिष्ठातारौ, यद्वा वनस्पत्यौषधिगणाधिष्ठातारौ साधिष्ठानौ देवौ शं=सुखरूपौ भवताम्। कस्मै प्रयोजनाय तेषां समेषां देवानां प्रार्थना विधीयते ? इत्याह—सुविताय=सुष्टु इतं=गतं, सुवितं तस्मै, साधुगमनाय-साधुप्रसवाय-सर्वाभीष्टार्थसिद्धये वा, यद्वा सुविताय=कल्याणाय शं=रोगदारिद्र्यदुराचारादीनां शमनाय, योः=भयशोकमोहादीनां, यवनाय=पृथक्करणाय-विनिवृत्तये। यद्वा शं=विश्वशान्तिसुखसिद्धयर्थं वा योः=विश्वभयोपद्रवान्यायादिनिवृत्त्यर्थं वा। भयरोगादीन् निवार्य शाश्वतशान्तिदैवीसम्पत्त्यादीन् समर्प्य सर्वे देवा अस्माक-मनुकूलाः सुखकराश्च भवन्तु। इति।

× × ×

## ( ९८ )

( ध्रुवा शान्तिः सर्वेभ्यः सदा मां प्रत्यस्त्वित्यर्थयते )

यतोऽशान्तस्य नास्ति सुखमतः सर्वेश्वरप्रसादात्तच्छरणापन्नं मां प्रति सदा विमलसुखजननी ध्रुवा शान्तिरेव सर्वेभ्यः पदार्थेभ्यः प्राप्ता भवत्विति कश्चिदर्थयते—

ॐ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः

पृथिवी शान्तिरापः शान्ति-

रोषधयः शान्तिः । वनस्पतयः
शान्तिर्विश्वे देवा शान्ति-
र्ब्रह्म शान्तिः सर्वꣳ शान्तिः
शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥
(शु. य. ३६ । १७)

द्यौः=द्युलोकरूपा या शान्तिः, अन्तरिक्षरूपा च या शान्तिः, पृथिवी=भूलोकरूपा या शान्तिः, आपः=जलरूपा या शान्तिः, ओषधयः=ओषधिरूपा या शान्तिः, वनस्पतयः=वृक्षरूपा या शान्तिः, विश्वे देवाः=सर्वदेवरूपा या शान्तिः, ब्रह्म=त्रयीलक्षणं परं वा तद्रूपा या शान्तिः, सर्वं=सर्वजगद्रूपा या शान्तिः, शान्तिरेव शान्तिः=या स्वरूपतः शान्ति सा शान्ति—अखण्डसुखजननी सकलसंतापभेत्री, मा=मां प्रति, एधि=अस्तु, पुरुषव्यत्ययः । सर्वान्तर्यामिभगवत्प्रसादात्सर्वं वस्तुजातं शान्तिस्वरूपं मां प्रत्यस्त्वित्यर्थः । यद्वा द्यौः=स्वर्गः, अन्तरिक्षं=द्यावापृथिव्योरुभयोर्लोकयोर्मध्यस्थमाकाशं, पृथिवीप्रभृतयः सर्वे पदार्थाः शान्तिकराः मां प्रति भवन्तु इति प्रार्थये । यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः सप्तम्यर्थे प्रथमा । दिवि, अन्तरिक्षे, पृथिव्यां, अप्सु, ओषधिषु, वनस्पतिषु, विश्वदेवेषु, ब्रह्मणि, सर्वस्मिंश्च या शान्ति वर्तते, सा मां प्रति भवत्वित्यर्थः । नन्वत्र शान्तिः कीदृशी विवक्षिता ? इति चेच्छृणु—यद्यपि शान्तितत्त्वे विचार्यमाणे उपद्रवनिवृत्तिलक्षणा एकरूपैव सा तथापि प्रतियोग्युपद्रवभेदात्तदधिकारिमनुजभावनाभेदाच्च सा त्रिविधरूपा सती प्रतिभाति । अत एव केचित् पृथिव्यादिभूतजन्यपीडानिवृत्तिरूपां तामिच्छन्ति । अपरे पुनर्दारिद्र्यदुर्भिक्षाद्युपद्रवनिवृत्तिरूपां तां वाञ्छन्ति । अन्ये केचन मुमुक्षवः सर्वकर्मविक्षेपनिवृत्तिलक्षणां वा,

सर्वकामनिवृत्त्यात्मिकां वा सर्वसंसारदुःखात्यन्तिकोपरमलक्षणां ब्रह्मनिर्वाण-मोक्षसमाख्यां वा शान्तिमभिलषन्ति इति। ननु—केवलया प्रार्थनया यदि स्वेष्टसिद्धिः स्यात्तदा कृतं साधनानुष्ठानेनेति? नैव दोषः, यतः शुद्धभावेन विहितयाऽनुकूलयाचनलक्षणया भगवत्स्मरणध्यानादिसंयुक्तया प्रार्थनया संजात-सर्वेश्वरप्रसादादनायासेन साधनानि समवाप्येष्टसिद्धिसम्भवात्तानर्थक्यं साधनानुष्ठानस्येति। नन्वेवं साधनादेव सिद्धिसम्भवादलं प्रार्थनयेति चेन्न तस्या अपि साधनसाधनत्वेन सार्थकत्वात्। अस्त्वेव, परन्तु निर्वाणमोक्षाख्या चरमशान्तिः केन साधनेन लभ्यते इति चेत्तर्हि प्रविश कृष्णभवनं गीतां, समाकर्णय श्रीकृष्णोपदेशं परमया श्रद्धया—'विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः। निर्ममो निरहङ्कारः सः शान्तिमधिगच्छति॥' (२।७१) इति।

\+ \+ \+

## ( ९९ )

### ( सर्वेषामहं प्रियो भूयासं, सर्वे च मे प्रियाः सन्त्विति मैत्रीभावनासिद्धये भगवत्प्रार्थना )

रागद्वेषवैरादिदुष्टस्वभावप्रयुक्तचित्तकालुष्यनिवृत्तिपुरःसरं मित्रभावाद्यनुकूलस्वभावप्रयुक्तचित्तप्रसादप्राप्तये भगवन्तं सर्वेश्वरं प्रार्थयमान आह—

**ॐ दृते दृꣳह मा मित्रस्य मा चक्षुषा,**
**सर्वाणि भूतानि समीक्षन्ताम्।**
**मित्रस्याहं चक्षुषा सर्वाणि भूतानि,**
**समीक्षे मित्रस्य चक्षुषा समीक्षामहे॥**
( शु. य. ३६। १८ )

हे दृते !='दृङ् आदरे' क्विप् सर्वादरविषयत्वात् सर्वैः प्रार्थनीयसमरसानन्दनिधे ! परमेश्वर ! यद्वा दृते !=हे सर्वशोकसंतापविदारक ! परमात्मन् ! 'दृ विदारणे'। यद्वा दृते=व्याधिजराऽऽलस्यादिना विदीर्णे—पुरुषार्थशून्ये स्थूलशरीरे सति, यद्वा दृते=ईर्ष्याद्वेषादिना सूक्ष्मशरीरे विदीर्णे—विक्षिप्ते शान्तिसदाचारादिना भ्रष्टे सति । हे अन्तरात्मन् ! मा=मां त्वं दृंह=दृढीकुरु—आलस्यादिकं निवार्य पुरुषार्थपरायणं प्रतिपक्षभावनया द्वेषादिकं दूरीकृत्य मैत्र्यादिभावनायुक्तञ्च मां कुर्वित्यर्थः । द्वेषादिनिवारिका कीदृशी सा प्रतिपक्षभावना ? इत्यत आह—सर्वाणि भूतानि=सर्वे प्राणिनः, मा=मां मित्रस्य=मेद्यति प्राणिष्वात्मभावेन स्निह्यतीति मित्रं तस्य स्नेहेनोपकारशीलस्य सुहृद्भावस्य चक्षुषा=दृष्ट्या समीक्षन्ताम्=सम्यक् पश्यन्तु नारिदृष्ट्या, सर्वेषां प्रियो भूयासमिति यावत्। किञ्चाहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे=पश्यामि, सर्वे मे प्रियाः सन्त्विति यावत्। मित्रस्य चक्षुर्हि रागद्वेषादिदोषशून्यं शान्तं हितकृद्भवति, न कस्यापि प्राणिजातस्यानिष्टं मावयति, सर्वस्य मित्रो हि न कञ्चन मित्रं द्वेष्टि, न कस्यचिदनिष्टं सम्पादयति, न कस्मिंश्चिद् वैरं बध्नाति, न वा कञ्चन हन्ति किन्तु स्वात्मवत्सर्वान् प्राणिनो मनुते सदा सर्वानुपकरोति । कापट्यविश्वासघातानिष्टचिन्तनपक्षपातस्वार्थसम्पादनादिना मित्रभावो नश्यति, अतस्तत्राप्तकापट्यादिनाशे सत्येव मित्रभावः स्थिरो भवति । अपवादापवादसम्पादने सत्येवोत्सर्गस्य स्थितिसम्भवात् । आत्मनः प्रतिकूलानि यदाऽन्य परेभ्यो नाभिलषति, तदैवाय समुदार मित्रभाव लभते नान्यथा । रागद्वेषाभ्या हि चित्त कलुषीक्रियते । रागद्वेषौ च भगवान् पतञ्जलिरसूत्रयत्—'सुखानुशयी रागः' (२ । ७) 'दुःखानुशयी द्वेषः'

(यो. द. २ । ८) इति । स्वेनानुभूयमानं सुखमनुशेते=अनुसरति कश्चिद्वृत्तिविशेषः 'सुखजातीयं मे सर्वं भूयादि'ति । तच्च दृष्टादृष्टसामग्र्यभावात्र केनापि सम्पादयितुं शक्यम्, अतः स रागश्चित्तं विक्षिप्तं करोति । यदा सुखिष्वयं मैत्रीं भावयेत् 'सर्वेऽप्येते सुखिनो मदीयाः' इति तदा तत्सुखं स्वकीयमेव सम्पन्नमिति भावयता कश्चित्तृप्तिविशेषोऽनुभूयते, ततस्तत्र रागो निवर्तते । यथा स्वस्य राज्याभावेऽपि पुत्रादिराज्यमेव स्वकीयं राज्यं तद्वत् । निवृत्ते रागे वर्षास्वतीतासु शरत्सरिदिव चित्तं प्रसीदति, प्रसन्नञ्च तद्योगसाधनानुष्ठानाय प्रभवति । सुखिषु मैत्रीं भावयतो न केवलं रागनिवृत्तिः किन्त्वसूयेर्ष्यादयोऽपि निवर्तन्ते । गुणेषु दोषाविष्करणमसूया, परगुणानामसहनमीर्ष्या । यदा मैत्रीवशात्परसुखं स्वकीयमेव सम्पद्यते, तदा परगुणेषु कथमसूयादिकं सम्भवेत् । तथा द्वेषः=दुःखमनुशेते कश्चित्प्रत्ययः, ईदृशं सर्वं दुःखं सर्वदा मे मा भूदिति । तच्च रोग शत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्वे दुःखहेतवो हन्तुं शक्यन्ते, अतः स दुःखतद्धेतुगोचरो द्वेषः सदा हृदयं दहति । यदा च सर्वत्राहितचिन्तनवर्जनया हितचिन्तनलक्षणया मैत्रीभावनया यथाऽयं प्रतिकूलत्वात्स्वस्य दुःखं तत्साधनञ्च नाभिलषति, तद्वत् परेषामपि प्रतिकूलं दुःखं तत्साधनञ्च मा भूदित्यनुसंदधाति, तदा दुःखिषु प्राणिषु दयापरपर्याया करुणा प्रादुर्भवति, ततो वैर्यादिव वर्तमानस्य द्वेषस्य निवृत्तौ सत्यां चित्तं प्रसीदति । यदाहुः—

माप्नुयादि'ति ॥ श्रीमद्भागवतेऽपि–' स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां, ध्यायन्तु भूतानि शिवं मिथो धिया। मनश्च भद्रं भजतामधोक्षजे, आविश्यतां नो मतिरप्यहैतुकी ॥' (५।१८।९) इति। मित्रदृष्टिरत्र करुणादिदृष्टीनामुपलक्षिका। तत्सूचितं भगवता पतञ्जलिना–' मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्।' (यो. सू. १।३३) इति। दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्तते, तदा दुःखित्वप्रतियोगिकस्वनिष्ठसुखित्वप्रयुक्तो दर्पोऽपि निवर्तते। स च दर्पो भगवता गीतासु 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी। आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥' (१६।१४) इत्यादिना वचनेनासुरसम्पत्प्रस्तावे निरूपितः। पुण्यवत्सु मनुजेषु विहितया मुदिताभावनया स्वयमेवाप्रमत्तः सन् पुण्यकर्मसु प्रवर्तते। पापेषु कृतयोपेक्षाभावनया स्वयमपि पापान्निवर्तते। पापेषु सत्कारतिरस्कारयोरौदासीन्यमुपेक्षा। अकृतं पुण्यं कृतञ्च पापं पश्चात्तापं जनयतः। प्राणिनां खल्वेवादृशः स्वभावो यतस्ते प्रायः पुण्यं कर्म नानुतिष्ठन्ति, अथ च तत्फलं सुखमभिलषन्ति, पापन्तु यत्नतोऽनुतिष्ठन्ति, परञ्च तत्फलं दुःखं नेच्छन्ति। मुदितोपेक्षाभावनाभ्याञ्च पापनिवृत्त्या पुण्यप्रवृत्त्या च पश्चात्तापस्याभावात् चित्तं प्रसीदतीति भावः। एवं परस्पराद्रोहेण वर्तमानाः सर्वाननुद्विजन्तो मिथः प्रेम वियर्धयन्तो वयं सर्वे सर्वं प्राणिजातं मित्रस्य चक्षुषा समीक्षामहे=पश्याम इति हे भगवन्! सर्वनियन्तः! त्वत्समक्षं वयं प्रतिजानीमहे। इति।

× × ×

## ( १०० )

( तत्त्वज्ञानप्रयोजकं चक्षुरिन्द्रियादेर्दीर्घदिव्यजीवनमधिगन्तुं भगवान् प्रार्थ्यते )

ॐ तच्चक्षु र्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं, जीवेम शरदः शत ँ् शृणुयाम
शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः
शतं, भूयश्च शरदः शतात् ॥

( शु. य. ३६ । २४ । ऋ. ७ । ६६ । १६ । तै. आ. ४ । ४२ । ५ )

तत्=प्रसिद्धं आदित्यमण्डलस्थितं ज्योतिःस्वरूपं ब्रह्म, जगतां चक्षु = प्रकाशकं 'तस्य भासा सर्वमिदं विभाति' ( मु. २ । २ । १० ) इति श्रुतेः । देवहितं=सर्वेभ्यो देवेभ्यो हितकारि, देवानां=विदुषां वा हितं=प्रियं प्रेमास्पदम् । शुक्रं=शुद्धं निर्मलं, शुभ्रं वा ज्योतिष्मत् । पुरस्तात्=पूर्वस्यां दिशि, अग्रतो वा, उच्चरत्=उदयं गच्छत् उच्चरति—उदेति वा उदयं प्राप्तं सदनुभूयते ब्रह्मविद्भिरिति यावत् । तस्य प्रसादादद्य शतं शरदः=शतसंख्याकानि संवत्सराणि, पश्येम=शतवर्षपर्यन्तमव्याहतचक्षुरिन्द्रियाः सन्तः स्वकनामरूपगुणशोभदर्शनाः विहितास्तिभातिप्रियस्वरूपसमदर्शना दिव्यद्रष्टारो भवेमेति यावत् । प्रार्थनायां लिङ्, अत्यन्तसंयोगे द्वितीया । 'यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।' 'दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत् ।' ( उपनिषत् ) इति श्रुतेः 'पण्डिताः समदर्शिनः' ( ५ । १८ ) 'समदृष्टिर्विशिष्यते' ( ६ । ९ ) इति गीतास्मृतेश्च । शतं शरदः जीवेम= अपराधीनजीवना विषयरागरहितमनस्काः वश्यबाह्येन्द्रियाः संयमिनो

भवेम, तादृशा एव भद्रपुरुषाः तत्त्वसाक्षात्कारा्य प्रभवन्तीत्यस्माकमपि तादृशमेव जीवनं भूयादित्याशयः। शतं शरदः शृणुयाम=स्पष्टश्रोत्रेन्द्रियाः सन्तो भद्रमद्रुपदेशश्रवणतत्परा भवेम, गुरुमुखाद्वेदशास्त्ररहस्यमवगच्छाम इति यावत्। 'भद्रं कर्णेभिः शृणुयाम देवाः' (यजु. २५।२१) इति श्रुतेः। शतं शरदः प्रब्रवाम=अध्यापयेम—उपदिशेम वा अस्खलितवागेन्द्रियाः सन्तः सर्वहितप्रियागतभाषका भवेम, शिष्येभ्यः प्रकर्षेण सद्ब्रह्मतत्त्वं कथयाम इति यावत्। शतं शरदः अदीनाः स्याम=न कस्याप्यग्रे दैन्यं कुर्याम, वीतरागा निस्पृहा निर्द्वन्द्वाः स्याम। शतात् शरदः शतवर्षोत्तरमपि भूयश्च बहुकालं पश्येमेत्यादि योज्यम्। 'दीपाद्दीप प्रभव इव' तादृशार्दीर्घदिव्यजीवनेन भूयसां सज्जनानां मुमुक्षूणामात्मकल्याणं सम्पद्येत इति भावः।

यजुर्वेदीयमन्त्राणां शतकं ज्योत्स्नया युतम्।
पाठकानामिदं सद्यो मोदं सृजतु निर्भरम्॥
मा भैषी दुर्जनं दृष्ट्वा मनः! त्वं पश्य सज्जनम्।
वृहद्दर्पी विपर्यासं गुणदोषौ तयोरितः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रोत्रिय-ब्रह्मनिष्ठ-पूज्यपाद-मण्डलेश्वर-स्वामि-श्रीमयेन्द्रपुरी-श्रीगुरुचरणकृपाकटाक्षावाप्तविद्येन श्रीमहत्पदाभिधेयपरमहंसपरिव्राजकाचार्य्य-श्रोत्रिय-ब्रह्मनिष्ठ-पूज्यपाद-मण्डलेश्वर-स्वामि-गिरीशानन्दगिरिश्रीगुरुचरणप्रसादासादितपारिव्राज्येन श्रीस्वामिमहेश्वरानन्दगिरिमण्डलेश्वरेण प्रणीता—शुक्लयजुर्वेदसंहितोपनिषच्छतकस्याध्यात्मज्योत्स्नाऽभिधा विवृतिः समाप्ता; शिवमस्तु शिवः सर्वम् शिवोऽहमिति हरिः ॐ तत्सत्।

**समाप्तोऽयं ग्रन्थः**

# शुद्धाशुद्धपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| श्रतिभेदः | श्रुतिभेदः | २ | १६ |
| श्रतीनां | श्रुतीनां, | ३ | ३ |
| भाष्यपद् | अभ्यापद् | ७ | १३ |
| स्यात= | स्यात= | ८ | १७ |
| श्रत्वा | श्रुत्वा | १० | १९ |
| श्रत्वा | श्रुत्वा | १० | २१ |
| तत्त | तत्त्व | ११ | १२ |
| 'यमा | 'यमो | ११ | २० |
| भक्षणाथ | भक्षणार्थं | १५ | १ |
| यथेष्ट | यथेष्ट | १५ | ५ |
| श्रेष्ठ | श्रेष्ठ | १५ | ७ |
| मत्त्वा | मत्त्वा | १५ | ७ |
| देवत्य | देवत्य | १६ | २२ |
| मन्त्रदृक् | मन्त्रदृक् | १७ | १४ |
| श्रत्यन्तर | श्रुत्यन्तर | १८ | १ |
| बन्धु | बन्धु | १९ | १७ |
| शा, | शा, | १९ | २१ |
| सुरक्षितं | सुरक्षितं | २३ | १ |
| भवान् | भगवान् | २५ | १८ |
| बहुकल | बहुफाल | २७ | ५ |
| यं तं धूर्वे | तं धूर्वे यं | २७ | १८ |
| त्वं सरुद | त्वमसरुद | २९ | ४ |
| वर्चोऽस्त्व | वर्चोदत्व | ३१ | २० |
| यादशी | यादशं | ३६ | २ |
| विव | विव | ४१ | ४ |
| ब्रह्म | ब्रह्म | ४१ | ५ |
| कर्मफलं | कर्मफलं | ४६ | ६ |
| स्वस्थान् | स्वस्थान् | ४९ | १ |
| त्वांन्त्वा | त्वान्त्वां | ४९ | २१ |
| मार्ष्टि | मार्ष्टि | ५३ | २ |
| भीतनि | भीतानि | ५४ | १६ |
| याभ्रूपासु | याभ्रकपासु | ५५ | ९ |
| समावि | समाधि | ५७ | १९ |
| जीवत्मा | जीवात्मा | ५८ | १७ |
| धिष्ठान | धिष्ठान | ५९ | १२ |
| बन्धरिस्याः | बन्धस्यारिः | ६३ | ११ |
| कर्तृत्वं | कर्तृत्व | ६३ | ११ |
| तिष्ठामि | तिष्ठामि | ६४ | १४ |
| योगामाया | योगमाया | ६५ | १० |
| निरुक्ता | निरुक्तौ | ६५ | १२ |
| पादन | पादान | ६५ | १५ |
| उत्पत्ति | उत्पत्ति | ६७ | ७ |
| यजुर्भयः | यजुर्मयः | ६८ | ११ |
| मूर्ति | मूर्ति | ७५ | ११ |
| छपा | छपो | ७६ | ४ |
| व्युत्पत्या | व्युत्पत्त्या | ७६ | ७ |
| द्वयु | द्वयु | ७६ | १० |
| षाडशी | षोडशी | ८२ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|---|---|---|---|
| श्रते॰ | श्रुतेः | ८७ | १५ | श्रतेः | श्रुतेः | १२८ | १९ |
| सत्य | सृत्य | ९० | ५ | क्रति | क्ररि | १३० | ९ |
| मार्यिकं | मार्थिकं | ९१ | २ | विद्य | विद्यु | १३० | १५ |
| ह्यार्य | ह्वेयार्य | ९२ | ६ | ग्रह्म | ग्रह्मे | १३९ | १२ |
| ग्रह्मया | ग्रह्मैया | ९३ | ८ | दयस्य | दयरस्य | १४३ | ३ |
| सपर्पकः | समर्पकः | ९४ | २ | नानन्तर | नान्तरं | १४४ | ७ |
| श्रति | श्रुति | ९७ | ५ | सामथ्ये | सामर्थ्ये | १४४ | ८ |
| मूति | मूर्ति | ९७ | १२ | धर्मो | धर्मा | १४६ | २१ |
| अल्ल | अलं | १०१ | १७ | सत्र | सूत्र | १४८ | १३ |
| यचितम् | याचितम् | १०३ | ९ | मत्वेन | मत्येन | १५० | ८ |
| पतेः | पत्तेः | १०७ | ६ | स्यात | स्यात् | १५० | १४ |
| स्मतेश्च | स्मृतेश्च | १०८ | १ | प्रत्यु | प्रत्यू | १५३ | ६ |
| खिलाद | खिलाऽ | १०९ | ३ | ग्रही | गृही | १५६ | १० |
| ग्रहो | ग्रहे | १०९ | ६ | इयर्ति | इयति | १५६ | १७ |
| पावरा | पापरा | ११२ | १४ | मित | मित्र | १५८ | १९ |
| चनर | चैनर | ११३ | २ | म्लेच्छा | म्लेच्छान् | १५९ | ३ |
| चन्द्रयः | चन्द्रयः | १२० | ३ | यज्ञ | यज्ञ | १५९ | ३ |
| गिर | गिर | १२१ | १५ | क्षिण | क्षिण॰ | १६० | ५ |
| इंद | इदं | १२१ | १८ | त्तवि | त्तवि | १६७ | १३ |
| त्रुया | त्वया | १२१ | २२ | नाभि | नाभिः | १६८ | ११ |
| श्रणु | श्रुणु | १२३ | ९ | र्व्याख्या | र्व्याख्या | १७३ | ६ |
| गृह्यन् | गृह्यन् | १२३ | १७ | याको पा | याकोपा | १८० | २० |
| श्रति | श्रुति | १२५ | ७ | अव | अप | १८४ | ७ |
| चर्तुभि | चतुर्भि | १२७ | २० | मेच | मेय | १८४ | २० |
| नाचि | नोचि | १२८ | १३ | क॰ | क | १९० | ६ |
| श्रतेः | श्रुतेः | १२८ | १७ | यांग्र | योग्य | १९६ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| र्द्दं | षर्द्दं | २१३ | ४ |
| माथि | मार्थि | २२० | २० |
| पासि | यासि | २२१ | १८ |
| भवति | भयन्ति | २२२ | ८ |
| यन्त | वन्तः | २४३ | ३ |
| निवि | निर्वि | २४६ | १८ |
| रम | रेम | २४८ | १९ |
| त्सत | त्सित | २४९ | १ |
| रूढ | रूढ़ | २५५ | १० |
| गाच | माच | २५५ | २१ |
| यस्य | यस्याः | २७० | ९ |
| पत्री | यत्री | २७५ | २२ |
| त्राति | प्रीति | २८० | १३ |
| नव | चैव | २८३ | १८ |
| पित्रृ | पितृ | ३१२ | १८ |
| प्रधा | प्रथा | ३१७ | १२ |
| इद्दि | इति | ३२४ | १७ |
| याथे | . याये | ३२५ | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| अर्था | अथा | '३२७ | ६ |
| सध्य | साध्य | ३२७ | १६ |
| वति | वर्ति | ३३२ | ६ |
| पुत्र | ' पुत्रै | ३३८ | ३ |
| रति | रिति | ३३८ | २१ |
| यीय | तीय | ३३९ | १३ |
| यत् | यत्त् | ३३९ | २० |
| यस्त्व | यस्त्वै | ३५० | १४ |
| थमा | थमो | ३५२ | १ |
| प्रत्या | प्रत्य | ३५४ | ८ |
| सत्स | तत्स | ३६१ | ६ |
| निमि ' | निर्मि | ३६५ | १० |
| मिना | मिनो | ३७७ | ५ |
| स्याका | स्याद्वाका | ३७८ | १९ |
| सर्वै | सर्वैः | ३८३ | ८ |
| थेन | पेन | ३८४ | ११ |
| दिना | दीना | ३९० | ५ |
| पिपति | पिर्पति | ३९८ | ७ |

अभावात्स्पष्टवर्णानां, योजकस्य प्रमादतः ।
विलम्बाद् दृष्टिदोषाच्च, त्रुटयः सन्त्यत्र पुस्तके ॥

गुणज्ञा दोषमुत्सृज्य, सारं गृह्णन्तु सर्वदा ।
दोषदर्शनदक्षस्तु, लोके दुर्जन एव हि ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः,
स्वान् गुणान् ख्यापयन्तः ।
सन्तः साश्चर्यचर्याः जगति बहुमताः
कस्य नाभ्यर्चनीयाः ॥

मुखेन नोद्गिरत्यूर्ध्वं, हृदयेन नयत्यधः ।
जरयत्यन्तरे साधुः, दोषं विषमिवेश्वरः ॥

नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च, विरलः सरलो जनः ॥

तृषाज्वलितकोपाग्नेः, परुषाक्षरवादिनः ।
दुर्जनस्यौषधं नास्ति किञ्चिदन्यदनुत्तरात् ॥

हरि ॐ तत्सत् शिवोऽहं शिवः सर्वम् ।



# यजुर्वेदभाष्यम्

परमहंसपरिव्राजकाचार्य-

श्रीमद्दयानन्दसरस्वतीस्वामिना निर्मितम्

संस्कृतार्य्यभाषाभ्यां समन्वितम्

प्रथमाध्यायतो दशाध्यायपर्यन्तम्

प्रयागनगरे वैदिकयन्त्रालये मुद्रितम्

( द्वितीयो भागः )

संवत् १९४६